चटच्चटिति चर्मणि च्छमिति चोच्छलच्छोणिते (116) T. 28 S. 1.40.2 (वाक्पतिराजस्य)
धगद्धगिति मेदसि स्फुटरवोऽस्थिषु ष्ठादिति ।
पुनातु भवतो हरेरमरवैरिनाथोरसि
क्वणत्करजपञ्जरक्रकचकाषजन्मानलः ॥ १३ ॥
वाक्पतेरेतौ ॥

वन्दे भुजभ्रमितमन्दरमथ्यमान- 117 T. 29
दुग्धाब्धिदुग्धकणविच्छुरितच्छवीकम् ।
नक्षत्रकर्बुरवियत्प्रतिरोधिनिन्दद्
उन्निद्रकैरवतडागमुरो मुरारेः ॥ १४ ॥
मुरा↑रेः ॥ ↑K. 10a

भ्रमति गिरिराट् पृष्ठे गर्जत्युपश्रुति सागरो (118) T. 30 S. 4.1.2 (चिरंतनशरणस्य) P. 37b (सरणमेकस्य)
दहति विततज्वालाजालो जगन्ति विषानलः ।
स तु विनिहितग्रीवाकाण्डः कटाहपुटान्तरे
स्वपिति भगवान्कूर्मो निद्राभरालसलोचनः ॥ १५ ॥

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी (119) T. 31 P. 28a
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ १६ ॥

पुच्छोदस्तविसारिणो जलनिधेः स्वर्गङ्गया संगम- (120) T. 32
श्रद्धाहूतखलत्पुरातनमुनिर्मीनो हरिः पातु वः ।
यस्मिन्नुद्धरति श्रुतीः पृथुतरादोंकारसारध्वनेर्
मध्येसिन्धु वियन्मयो जलमयस्तम्भस्त्वभूदम्बरे ॥ १७ ॥

---

**116** — [b]) T धगि°. S स्फुटतरो. T ऽस्थिपु. — [d]) S °जन्मा रवः. — [e]) T वाक्पतिराजस्योभौ ○ Śp. 126 (वाक्पतिराजस्य); Smk. 2.77 (वाक्पतिनाथस्य); Khaṇ. 35 (41); Srb. p. 19.48. **118** — [a]) S1 सागरे. — [b]) S1 °जातो. S3 विषाननः. ○ Smk. 108.2 (शरथैकस्य); Shv. A 17a; Khaṇ. 19; Srb. p. 236.4. **119** — [a]) P विलोचन-. — [d]) P तनुतां (कुरुतां). ○ Smk. 2.64 (भागवतामृतदत्तस्य (वचनश्लेषः)); Sbh. 43 (भा° अमृतदत्तस्य); Kpk. 371; Kpd. p. 295; As. ad. 64; Skv. p. 196; Shv. A. 8b. 54 (सारंगस्य); PG. 3 (सारंगस्य); Kvv. p. 50; Sb. 5a (अमृतदत्तस्य); Rasg. p. 488; Amd. 590, 872; Vyk. ad 2.92; KHA 480; Sd. ad 11.8 (p. 196); Srb. p. 15.32. **120** T2 order *cdab*. — [c]) T पृथुतरो (T1 रा) हूंकार-. — [d]) T जलमयः.

(121)
T. 33

जृम्भाविजृम्भितदृशः प्रथमप्रबुद्ध-
लक्ष्मीकराम्बुरुहलालनलालसस्य ।
गात्रापवृत्तिभरखर्वितशेषमव्याद्
अव्याहतं मुरजितः कृतकप्रसुप्तम् ॥ १८ ॥

(122)
T. 34

मयान्विष्टो धूर्तः स सखि निखिलामेव रजनीम्
इह स्यादत्र स्यादिति निपुणमन्यामभिसृतः ।
न दृष्टो भाण्डीरे तटभुवि न गोवर्धनगिरेर्
न कालिन्द्याः कूले न च निचुलकुञ्जे मुररिपुः ॥ १९ ॥

(123)
T. 35
S. 1.52.2
(शतानन्दस्य)

श्यामोच्चन्द्रा स्वपिषि न शिशो, नैति मामम्ब निद्रा,
निद्राहेतोः शृणु सुत कथां, कामपूर्वां कुरुष्व ।
रामो नाम क्षितिपतिरभून्माननीयो रघूणाम्
इत्युक्तस्य स्मितमवतु वो देवकीनन्दनस्य ॥ २० ॥

(124)
T. 36
S. 1.44.5
(वाक्पतिराजस्य)

खर्वग्रन्थिविमुक्तसन्धिविकसद्वक्षःस्फुरत्कौस्तुभं
निर्यन्नाभिसरोजकुड्मलकुटीगम्भीरसामध्वनि ।
पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितम्
पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥ २१ ॥

(125)
T. 37
S. 1.68.4
(वररुचेः)
P. 45a
(श्रीव्यासदेवस्य)

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा ↑K. 105
धृत्वा चान्येन वासो विगलितकवरीभारमंशं वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालम्ब्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ २२ ॥

---

**121** — [a]) T विजिह्मित-. — [d]) K अव्याहृतं ○ ŚB. 3.202, 3.284. **122** — [b]) K निपुणसल्या-. — [d]) T पुररिपुः. **123** ○ PG. 151 (सर्वानन्दस्य). **124** ○ Shv. A. 7a (हनुमतः); Daś. ad 4.72; Khaṇ. 49; Srb. p. 20.62. **125** — [b]) P धृत्वा. S1.2 °भारमंसं; S °भारमंसे; P °भारमंगं. — [d]) S3 P शय्यामालिङ्ग्य. ○ Veṇ. prol. 6 (some Mss). Sbh. 79 (भट्टनारायणस्य); Śp. 135 (निशानारायणस्य); Skb. 2.332, 5.165; ŚB. 2.271, 3.20, 3.54; SK. 1.125; Vetāl. ed. Uhle p. 161. Ssm. 186; KHA. 736; KHV. 355; Pk. 120; Amd. 515; Vyk. ad 2.10; Srb. p. 16.14.

संपूर्णः पुनरभ्युदेति किरणैरिन्दुस्ततो दन्तिनः 126 T. 38 S. 1.66.1 P. 44a
कुम्भद्वन्द्वमिदं पुनः सुरतरोरग्रोल्लसन्मञ्जरी ।
इत्थं यद्वदनस्तनद्वयवलद्रोमावलीषु भ्रमः
क्षीराब्धेर्मथनेऽभवद्विविषदां लक्ष्मीरसावस्तु वः ॥ २३ ॥

भभभ्रमति किं मही ललललम्बते चन्द्रमाः 127 T. 39 S. 1.48.3 P. 40b
कृकृष्ण ववद द्रुतं हहहसन्ति किं वृष्णयः ।
शिशीधु मुमुमुञ्च मे ववववक्त्रमित्यादिकम्
मदस्खलितमालपन् हलधरः श्रियं वः क्रियात् ॥ २४ ॥

पुरुषोत्तमदेवस्य ॥

किं किं, सिंहस्, ततः किं, नरसदृशवपुर्देव, चित्रं गृहीतो, 128* T. 40 S. 1.40.5 (श्रीव्यासपादानाम्)
नैवं, तत्कोऽत्र, जीव, द्रुतमुपनय तं, नन्वयं प्राप्त एव ।
चापं चापं न खड्गं त्वरिततरमहो कर्कशत्वं नखानाम्
इत्थं दैत्याधिराजं निजनखकुलिशैर्जघ्निवान्यः स वोऽव्यात् ॥२५॥ ↑T. 13b

देवस्त्वामेकजङ्घावलयितलगुडो मूर्ध्नि विन्यस्तबाहुर् (129) S. 1.58.3 (योगेश्वरस्य) P. 35b (anon)
गायन् गोयुद्धगीतीरुपरचितशिरःशेखरः प्रग्रहेण ।
दर्पस्फूर्जन्महोक्षद्वयसमररसाबद्धदीर्घानुरागः
क्रीडागोपालमूर्तिर्मुररिपुरवतादात्तगोरक्षलीलः ॥ २६ ॥

श्रीसोन्नोकस्य ॥

जयन्ति निर्दारितदैत्यवक्षसो नृसिंहरूपस्य हरेर्नखाङ्कुराः । (130) S. 1.41.5 P. 38a
विचिन्त्य येषां चरितं सुरारयः प्रियानखेभ्योऽपि रतेषु बिभ्यति ॥ २७ ॥

---

**126** — [b]) P अग्रे लसत्. — [c]) P चलद्रोमावलीसुभ्रमः. — [d]) N ? द्विवषदां. P क्षीरोधेर्. P लक्ष्मीवसारस्तवः. **127** — [a]) S मेदिनी (किं मही). — [b]) S1.2 वृष्ट्यः; P कृष्णयः. — [c]) K शशीधु; P सिसीधु. T वक्तं; KP वक्तुं (वक्त्रं). S पपपपानपात्र (S3 °त्रे) स्थितं. — [e]) N om. °देव°. ○ SK. 1.106. **128** Lacuna of one folio in T though folio numbers are continuous. — [b]) S धिक्कोऽत्र. S सोऽपि संप्राप्त एव ।. — S3 सज्जं (खड्गं). S झटिति हहहहा. — [d]) S इत्येवं दैत्यराजं. S सोऽवताद्वः॥.○ Smk. 2.76(वाक्पतिनाथस्य); Khaṇ. 34 (28); At. p. 6; KHA. 152; Kvv. p. 6. **129** — [a]) P एकजन्मा-. S1.2 P °लगुडी. — [b]) P शिरःप्रावृतः. — [c]) S °नुबन्धः; P °नुभावः. — [d]) P गोरक्षणीयः. ○ PG. 152 (योगेश्वरस्य). **130** — [c]) P विलोक्य.

(131)
S. 1.53.3
(शुभाङ्कस्य)
P. 31a

एते लक्ष्मण जानकीविरहिणं मां खेदयन्त्यम्बुदा
मर्माणीव च घट्टयन्त्यलममी क्रूराः कदम्बानिलाः ।
इत्थं व्याहृतपूर्वजन्मविरहो यो राधया वीक्षितः
सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः ॥ २८ ॥

(132)
S. 1.68.3

मिथ्याकण्डूतिसाचीकृतगलसरणिर्येषु जातो गरुत्मान्
ये निद्रां नाटयद्भिः शयनफणिफणै[↑]र्लक्षिता न श्रुताश्च । ↑K. 11a
ये च ध्यानानुबन्धच्छलमुकुलदृशा वेधसा नैव दृष्टास्
ते लक्ष्मीं नर्मयन्तो निधुवनविधयः पान्तु वो माधवस्य ॥ २९ ॥

राजशेखरस्य ॥

(133)
P. 33b

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणाम्
आत्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः ।
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानम्
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ ३० ॥

विशाखदत्तस्य ॥

(134)
S. 1.39.1
P. 37a

दंष्ट्रापिष्टेषु सद्यः शिखरिषु न कृतः स्कन्धकण्डूविनोदः
सिन्धुष्वङ्गावगाहः खुरकुहरविशत्तोयतुच्छेषु नाप्तः ।
प्राप्ताः पातालपङ्के न लुठनरतयः पोत्रमात्रोपयुक्ते
येनोद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥ ३१ ॥

वराहमिहिरस्य ॥

(135)
S. 1.37.4
P. 36a
(अपिदेवस्य)

पातु त्रीणि जगन्ति पार्श्वकषणप्रक्षुण्णदिग्मण्डलो
नैकाब्धिस्तिमितोदरः स भगवान् क्रीडाझषः केशवः ।
त्वङ्गन्निष्ठुरपृष्ठरोमखचितब्रह्माण्डभाण्डस्थिते[र्]
यस्योत्स्फालकुतूहलेन कथमप्यङ्गेषु जीर्णायितम् ॥ ३२ ॥

रघुनन्दनस्य ॥

---

**131** — [b]) S3 च खंडयंत्य-. — [c]) P व्याकृत-. ○ KHA. 131. **132** ○ ŚB. 3.298. **133** — [b]) P °जनलवो. P संगिसंगैः. — [c]) P नागाक्तं. ○ Mud. 3.21; Smk. 2.62 (विशाखदेवस्य); Amd. 168; Skb. 5.65; ŚB. 2.77, 3.56. **134** — [a]) P दंष्ट्रापृष्ठेषु. P °कंडं. — [b]) P खुरविवर-. — [c]) S3 ननु च न रतयः. P पोतपात्रोपयोगाद्. — [d]) S °बृंहितेच्छो. ○ Vkj. 1.29. **135** — [c]) S भांडावधेर्; P खंडस्थितैर्. — [d]) S1 मत्स्योत्फाल-; S2.3 P यस्योत्फाल-. ○ Ssm. 970.

ये संतापितनाभिपद्ममधवो ये स्नापितोरःस्रजो (136)
ये तापात्तरलेन तल्पफणिना प्रीतप्रतीपोज्झिताः ।
ये राधास्मृतिसाक्षिणः कमलया सासूयमाकर्णिता
गाढान्तर्दवथोः प्रतप्तसरलाः श्वासा हरेः पान्तु वः ॥ ३३ ॥

पुष्पाकस्य ॥

सेयं द्यौस्तदिदं शशाङ्कदिनकृच्चिह्नं नभः सा क्षितिस् (137) S. 1,63.1
तत्पातालतलं त एव गिरयस्तेऽम्भोधयस्ता दिशः । (वाक्पतिराजस्य) P. 33a
इत्थं नाभिविनिर्गतेन सशिरःकम्पाद्भुतं वेधसा (वाचस्पतेः)
यस्यान्तश्च बहिश्च दृष्टमखिलं त्रैलोक्यमव्यात्स वः ॥ ३४ ॥

युक्तं मानद ↑ मामनन्यमनसं वक्षःस्थलस्थायिनीं K. 11b 138 P. 28b
भक्तामप्यवधूय कर्तुमधुना कान्तासहस्रं तव ।
इत्युक्त्वा फणभृत्फणामणिगतां स्वामेव मत्वा तनुं
निद्राच्छेदकरं हरेरवतु वो लक्ष्म्या विलक्षस्मितम् ॥ ३५ ॥

भासस्य ॥

अग्रे गच्छत ↑ धेनुदुग्धकलशानादाय गोप्यो गृहं ↑ T. 14a 139 T. 41
दुग्धे वस्कयणीकुले पुनरियं राधा शनैर्यास्यति । P. 31a (anon)
इत्यन्यव्यपदेशगुप्तहृदयः कुर्वन् विविक्तं व्रजं
देवः कारणनन्दसूनुरशिवं कृष्णः स मुष्णातु ↑ वः ॥ ३६ ॥ ↑ N. 5a

सत्रासार्ति यशोदया प्रियगुणप्रीतेक्षणं राधया 140 T. 42
लग्नैर्बल्लवसूनुभिः सरभसं संभावितात्मोर्जितैः । S. 1,60.1
भीतानन्दितविस्मितेन विषमं नन्देन चालोकितः (सोन्नोकस्य)
पायाद्वः करमूर्धसुस्थितमहाशैलः सलीलो हरिः ॥ ३७ ॥

सोन्नोकस्यैतौ ॥

---

**137** — [a]) P साक्षिभिस्. — [b]) S3 अंभोधरास्. **138** — [d]) K विलक्ष्य-. ○ Smk. 2.97; Shv. A. 10a. 79; Sb. 4b. **139** — [b]) T वष्कयिणी-; P रस्कयनी-. — [c]) P विभक्तं व्रजन्. — [d]) P अनिशं. P पुष्णातु. **140** — [b]) $S_{1,3}$ नम्रैर्. — [c]) $S_2$ विसयेन. — [d]) S करपद्म-. ○ PG. 264 (साह्नोकस्य).

141 T. 43 S. 1.41.1 (दक्षस्य) दंष्ट्रासङ्कटवक्त्रकन्दरतरज्जिह्वाभृतो हव्यभुग्-
ज्वालाभासुरभूरिकेशरिसटाभारस्य दैत्यद्रुहः ।
व्यावल्गद्बलवद्धिरण्यकशिपुक्रोडस्थलीपाटन-
स्पष्टप्रस्फुटदस्थिपञ्जररवक्रूरा नखाः पान्तु वः ॥ ३८ ॥

वाक्पतेः ॥

(142) T. 44 S. 1.59,2 लक्ष्म्याः केशप्रसवरजसां विन्दुभिः सान्द्रपातैर्
अभ्यर्णश्रीर्घननिधुवनक्लान्तिनिद्रान्तरेषु ।
दोर्दण्डोऽसौ जयति जयिनः शार्ङ्गिणो मन्दराद्रि-
ग्रावश्रेणीनिकषमसृणक्षुण्णकेयूरपत्रः ॥ ३९ ॥

श्रीभगीरथस्य ॥

(143) T. 45 नखक्रकचदारणस्फुटितदैत्यवक्षःस्थल-
क्षरत्क्षतजनिर्झरप्रतिविभावितस्वाकृतेः ।
हरेरपरकेशरिक्षुभितचेतसः पातु वः
सरोषललिताधरभ्रुकुटिभङ्गभीमं मुखम् ॥ ४० ॥

वाक्पतिराजस्य ॥

(144) T. 46 S. 1.52.1 (अभिनन्दस्य) वत्स क्ष्माधरगह्वरेषु विचरन् चारप्रचारे गवां
हिंस्रान्वीक्ष्य पुरः पुराणपुरुषं ↑ नारायणं ध्यास्यसि । ↑K. 12a
इत्युक्तस्य यशोदया मुररिपोरव्याज्जगन्ति स्फुरद्-
बिम्बोष्ठद्वयगाढपीडनवशादव्यक्तभावं स्मितम् ॥ ४१ ॥

(145) T. 47 देवो हरिर्जयति यज्ञवराहरूपः
सृष्टिस्थितिप्रलयकारणमेक एव ।
यस्योदरस्थितजगत्त्रयबीजकोश-
निर्गच्छदङ्कुरशिखेव विभाति दंष्ट्रा ॥ ४२ ॥

सोन्नोकस्य ॥

---

**141** — [a]) $S_2$ °कंकट-. S वक्त्र($S_3$ °ज्र°)घर्घरलल्ज्. — [b]) $S_{2.3}$ °भास्वर-. $T_2$ S °केशर-. — [c]) $S_{1.2}$ °पाटल-. ○ Śp. 4066 (हनूमतः); Srb. p. 19.51; Khaṇ. 37. **142** — [a]) $S_1$ °प्रसर-. — [b]) $T_2$ $S_1$ उद्गूर्ण-; $S_{2.3}$ उद्घर्ण-. $S_1$ °क्रान्ति°. — [c]) K °भागी°; S om. श्री°. **144** — [a]) S स्थावरकन्दरेषु. — [b]) K परः (पुरः). ○ Shv. A. 9a. 57 (अभिनंदस्य); PG. 149 (अभिनन्दस्य). **145** — [b]) T °मेकमेव.

बीजं ब्रह्मैव देवो मधु जलनिधयः कर्णिका स्वर्णशैलः (146)
कन्दं नागाधिराजो वियदतिविपुलः पत्रकोशावकाशः । T. 48
द्वीपाः पत्राणि मेघा मधुपकुलममूस्तारका गर्भधूलिर् S. 1.63.4
यस्यैतन्नाभिपद्मं भुवनमिति स वः शर्म देवो ददातु ॥ ४३ ॥ (हलायुधस्य)
मालायुधस्य ॥

कनकनिकषस्वच्छे राधापयोधरमण्डले (147)
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् । T. 49
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्
जयति जनितव्रीडानम्रप्रियाहसितो हरिः ॥ ४४ ॥
वैद्दोकस्य ॥

॥ इति विष्णुव्रज्या ॥ ६ ॥

## ॥ ततः सूर्यव्रज्या ॥ ७ ॥

यस्याधोधस्तथोपर्युपरि निरवधि भ्राम्यतो विश्वमश्वैर् 148
आवृत्तालातलीलां रचयति रयतो मण्डलं तिग्मधाम्नः । T. 50
सोऽव्यादुत्तप्तकार्तस्वरसरलशरस्पर्धिभिर्धामदण्डैर् P. 50a
उद्दण्डैः प्रापयन् वः प्रचुरतमतमःस्तोममस्तं समस्तम् ॥ १ ॥
राजशेखरस्य ॥

शुकतुण्डच्छवि सवितुश्चण्डरुचः पुण्डरीकवनबन्धोः । 149
मण्डलमुदितं वन्दे कुण्डलमाखण्डलाशायाः ॥ २ ॥ T. 51
विद्यायाः ॥ S. 1.2.3
P. 48b

तुङ्गोदयाद्रिभुजगेन्द्रफणोपलाय 150
व्योमेन्द्रनीलतरुकाञ्चनपल्लवाय । T. 52
संसारसागरसमुत्क्रमयोगिसार्थ- S. 1.2.1
प्रस्थानपूर्णकलशाय नमः सवित्रे ॥ ३ ॥ P. 48b
वराहमिहिरस्य ॥

---

**146** — [b]) S कंदो. S वियदपि. — [c]) S1 °मभूत्तारका-. T °धूली; K °धूलि. — [d]) S दधातु. **147** — [d]) T °सहितो. ○ Smk. 1.31; KHA. 110; Skb. 3.110, 5.17; ŚB. 2.315, 3.316; SK. 6.600; Amd. 120. Vrajyā **6** : K विष्णोव्रज्या. **148** — [a]) K यस्यावोध-. — [b]) K °लाभ°; P °नाभ° (°लात°). P वयतो. P °धाम्नेः. — [c]) P °स्वरसकलसम-. ○ Kav. p. 88; KHA. 108. **149** — [e]) T om. विद्यायाः. ○ Sūktirat. 12; Ssm. 728; SK. 1.143; Śp. 86 (नागम्मायाः); Srb. p. 27.2. **150** — [c]) T2 SP °समुत्क्रमि-. P °योगसानु-. — [e]) K वाराहमिहिरस्य ॥.

151* T. 53 संसक्तं सिक्तमूलादभिनवभुवनोद्यानकौतूहलिन्या
यामिन्या कन्ययेवामृतकरकलशावर्जितेनामृतेन ।
अर्कालोकः क्रियाद्वो मुदमुदयशिरश्चक्रवालालवालाद्
उद्यन् बालप्रवालप्रतिमरुचिरहःपादपप्राक्प्रवालः ॥ ४ ॥
मयूरस्य ॥

॥ इति सूर्यव्रज्या ॥ ७ ॥

## ↑ ॥ ततो वसन्तव्रज्या ॥ ८ ॥ ↑K. 125

152 T. 54 S. 2.153.1 P. 87a आरक्ताङ्कुरदन्तुरा कमलिनी नायामिनी यामिनी
स्तोकोन्मुक्ततुषारमम्बरमणेरीषत्प्रगल्भं महः ।
अप्येते सहकारसौरभमुचो वाचालिताः कोकिलैर्
आयान्ति प्रियविप्रयुक्तयुवतीमर्मच्छिदो वासराः ॥ १ ॥
संघश्रियः ॥

153 T. 55 P. 90a नैवैके वयमेव कोकिलवधूकण्ठोच्चरत्पञ्चम-
स्थानोद्बोधितपञ्चमार्गणगुणास्फालेन रोमाञ्चिताः ।
पश्यैते तरवोऽपि सुन्दरि जरत्पत्रव्ययानन्तरो-
द्भिन्नापाटलकोटिसंपुटदलप्रादुर्भवत्कुड्मलाः ॥ २ ॥
विनयदेवस्य ॥

154 T. 56 मलयमहीधरपवनः कलकण्ठकलध्वनिर्निकुञ्जलताः ।
उत्कलिका उत्कलिकाश्चेतसि जनयन्ति लोकस्य ॥ ३ ॥
श्रीकण्ठस्य ॥

155 T. 57 P. 90a कान्तेन प्रहितो नवः प्रियसखीवर्गेण बद्धस्पृहश्
चित्तेनोपहृतः स्मराय न समुत्स्रष्टुं गतः पाणिना ।
आमृष्टो मुहुरीक्षितो मुहुरभिघ्रातो मुहुर्लोठितः
प्रत्यङ्गं च मुहुः कृतो मृगदृशा किं किं न चूताङ्कुरः ॥ ४ ॥
वाक्कूटस्य ॥

---

151 ○ Sūryaśataka 34. — d) °प्राक्प्ररोहः. 152 — d) P °विप्रमुक्त°. 153 — a) P कंठोच्छलत्. — b) P पंचमध्वाना°. 154 — c) K श्रीकण्डस्य. 155 — b) P °नोपकृतः स्मरा न सुमतस्पष्टं. — c) P °रहिघ्रातो. P लोचितः.

द्विस्त्रिः कोकिलया रुतं त्रिचतुरैश्चूताङ्कुरैरुद्गतं 156 T. 58
कोषान् बिभ्रति किंशुका मधुकरश्रेणीजुषः पञ्चषान् ।
क्वापि क्वापि मदाकुलाकुलतया कान्तापराधग्रह-
ग्रन्थिच्छेदसमुद्यतं च हृदयं दोलायते सुभ्रुवाम् ॥ ५ ॥

नीलस्य ॥

जम्बूनां कुसुमोदरेष्वतिरसादाबद्धपानोत्सवाः ↑N. 5b 157 T. 59 S. 2.152.1
कीराः पक्वफलाशया मधुकरीश्चुम्बन्ति मुञ्चन्ति च ।
एतेषामपि पश्य किंशुकतरोः पत्रैरभिन्नत्विषां
पुष्पभ्रान्तिभिरापतन्ति सहसा चञ्चूषु भृङ्गाङ्गनाः ॥ ६ ॥

राजशेखरस्य ॥

दृश्यन्ते मधुमत्तकोकिलवधूनिर्धूतचूताङ्कुर- ↑K. 13a 158 T. 60
प्राग्भारप्रसरत्परागसिकतादुर्गास्तटीभूमयः ।
याः कृच्छ्रादभिलङ्घ्य लुब्धकभयात्तैरेव रेणूत्करैर्
धारावाहिभिरस्ति लुप्तपदवीनिःशङ्कमेणीकुलम् ॥ ७ ॥

मुरारेः ॥

अशिथिलपरिस्पन्दः कुन्दे तथैव मधुव्रतो (159) T. 61
नयनसुहृदो वृक्षाश्चैते न कुड्मलशालिनः ।
दलति कलिका चौती नास्मिंस्तथा मृगचक्षुषाम्
अथ च हृदये मानग्रन्थिः स्वयं शिथिलायते ॥ ८ ॥

कान्तां हित्वा विरहविधुरारम्भखेदालसाङ्गीं (160) T. 62 P. 90a
मामुल्लङ्घ्य व्रजतु पथिकः क्वाऽपि यद्यस्ति शक्तिः ।
इत्याशोकी जगति सकले वल्लरी चीरिकेव
प्राप्तारम्भे कुसुमसमये कामदेवेन दत्ता ॥ ९ ॥

---

**156**— c) N doubtful, T महाकुला°. **157** — a) S1. 2 °दारब्धपानो°. ○ Smk. 109.23 (वसुकस्य); Skb. 3.78; ŚB. 2.310; Kāvyakalpalatā p. 175. **158** ○ Anr. 5.6; Smk. 109.21 (मुरारेः). **160** — b) P शक्तः. — c) P पल्लवी (वल्लरी).

(161) T. 63 S. 2.153.2 P. 90b
मन्दं दक्षिणमाह्वयन्ति पवनं पुंस्कोकिलव्याहृतैः
संस्कुर्वन्ति वनस्थलीः किसलयोत्तंसैर्निषण्णालिभिः ।
चन्द्रं सुन्दरयन्ति मुक्ततुहिनप्रावारया ज्योत्स्नया
वर्धन्ते च विवर्धयन्ति च मुहुस्तेऽमी स्मरं वासराः ॥ १० ॥

(162) T. 64
हृद्यस्निग्धैः परभृतरुतैर्मुक्तदीर्घप्रवासः
प्रत्यावृत्तो मधुरिति वदन्दक्षिणो गन्धवाहः ।
शिञ्जल्लोलभ्रमरवलयः काननालीवधूनां
सद्यः कुन्दस्मितबृहतिकाः पूर्णपात्रीकरोति ॥ ११ ॥

(163) T. 65
लोलैः कोकिलमण्डलैर्मधुलिहां चंचूर्यमाणैर्गणैर्
नीरन्ध्रैर्गृहवाटिकापरिसरेष्वङ्गारितैः किंशुकैः ।
प्रारब्धे तिमिरे वसन्तसमयक्षोणीपतेर्भ्राम्यतः
प्रस्निग्धा परितो धृतेव कलिकादीपावलिश्चम्पकैः ॥ १२ ॥
**मनोविनोदस्यैतौ** ॥

(164) T. 66
च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मनसि च गिरं ग्रश्नन्तीमे किरन्ति न कोकिलाः ।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च ↑ जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥ १३ ॥ ↑K 135

(165) T. 67 S. 2.154.2
साम्यं संप्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैर्
बाह्लीकीदशनव्रणारुणतलैः पत्रैरशोकोऽर्चितः ।
भृङ्गालङ्घितकोटि किंशुकमिदं किंचिद्विवृन्तायते
माञ्जिष्ठैर्मुकुलैश्च पाटलितरोरन्यैव काचिल्लिपिः ॥ १४ ॥

---

**161** — [a]) P °णमाह्दयंति· P °किलव्याकुलं. — [b]) P संघूर्णंति· S3 P वनस्थली·. — [d]) P °स्तेमीश्वरं. **164** — [a]) K °युत·. — [d]) T जठरता°. ○ Auc. ad. 5.26 (मालवकुवलयस्य); Vām. ad. 3.2.5; Kav. p. 108; KHV. 320, 420 (*ab* only); Amd. 522. **165** — [b]) S °रुणतरैः. — [c]) S भृंगा·. S3 विवृत्तायते. — [d]) S °वृंत्तैव. ○ Vid. 1.25; Kav. p. 109 (*a* only, rest differs); Bāl. 5.38 (*a* differs); KHV. 322 (as in Kav.); ŚB. 3.28; Srb. p. 333.100.

गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा (166) T. 68 S. 2.151.1
वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ।
किं च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥ १५ ॥

राजशेखरस्यैतौ ॥

शीतार्तैरिव भग्नशैशिरनिशाभागैरहः स्फायते (167) T. 69
गर्भं बिभ्रति किंशुका इव दिशां तापाय वह्न्यङ्कुरम् ।
किं च स्वाश्रयसंभृतप्रथिमसुच्छायातपाङ्गेष्वयं
लोकः स्तोकरसोऽद्य न क्वचिदपि स्वच्छन्दमानन्दति ॥ १६ ॥

त्रिलोचनस्य ॥

उद्भिन्नस्तवकावतंससुभगाः प्रेङ्खन्मरुन्नर्तिताः (168) T. 70
पुष्पोद्गीर्णपरागपांशुललसत्पत्रप्रकाण्डत्विषः ।
गम्भीरक्रमपञ्चमोन्मदपिकध्वानोच्छलद्गीतयः
प्रत्युज्जीवितमन्मथोत्सव इव क्रीडन्त्यमू भूरुहः ॥ १७ ॥

प्रागेव जैत्रमस्त्रं सहकारलता स्मरस्य चापभृतः । (169) T. 71
किं पुनरनल्पनिपतितमधुकरविषकल्कलेपेन ॥ १८ ॥

शुभाङ्गस्य ॥

स्वस्ति श्रीमलयाचलात्स्मरसखः श्रीमान्वसन्तानिलः 170 T. 72 P. 90b
क्रीडावेश्मसु कामिनः कुशलयत्येतच्च वक्तीतरत् ।
एषोऽहं मुदितालिकोकिलकुलं कुर्वन् वनं प्राप्तवान्
युष्माभिः प्रियकामिनीपरिगतैः स्थातव्यमस्मादिति ॥ १९ ॥

एते नूतनचूतकोरकघनग्रासातिरेकीभवत्- 171 T. 73 S. 2.155.1
कण्ठध्वानजुषो हरन्ति हृदयं मध्येवनं कोकिलाः ।
येषामक्षिनिभेन भान्ति भगवद्भूतेशनेत्रानल- ↑K. 14a
ज्वालाजालकरालितासमशराङ्गारस्फुलिङ्गा इमे ॥ २० ॥

---

**166** — [c]) K राजशेखरस्य. ○ Vid. 1.23; Kav. p. 108; At. p. 67; KHV. 321; Smk. 59.5 (राजशेखरस्य); ŚB. 2.321; Srb. p. 333.101. **167** — [c]) K प्रथमतरङ्गायातपाः शे°. — [e]) T त्रैलोचनस्य. **168** — [c]) T °पिकस्था (T1 °था). नो. — [d]) T क्रीडन्त्यमी. **170** — [b]) KP °लयत्येनाश्च वक्त्री°. — [c]) P मुदितानि कोकिलकलध्वानारवं. **171** — [a]) S3 °घनध्वाना°. — [b]) S1 कण्ठे. — [d]) S इव (इमे).

172
T. 74
किंशुककलिकान्तर्गतचन्द्रकलास्पर्धि केशरं भाति ।
रक्तनिचोलकपिहितं धनुरिव जतुमुद्रितं वितनोः ॥ २१ ॥
वल्लणस्य ॥

173
T. 75
S. 2.152.5
(वीर्यमित्रस्य)
वाप्यो दन्तुरितोदराः कमलिनीपत्राङ्कुरग्रन्थिभिश्
चूतानां कलिकामिलन्मधुलिहां कापि स्थितिर्वर्तते ।
दौर्भाग्योपनयाय सांप्रतमयामल्पोऽपि मार्गश्रमः
शिक्षामुल्ललितुं ददाति रजसां गत्रीपथे मारुतः ॥ २२ ॥
अभिनन्दस्य ॥

174
T. 76
आरक्तैर्नवपल्लवैर्विटपिनो नेत्रोत्सवं तन्वते
तान् धुन्वन्नयमभ्युपैति मधुरामोदो मरुद्दक्षिणः ।
तेनालिङ्गितमात्र एव विधिवत् प्रादुर्भवन्निर्भर-
क्रीडाकूतकषायितेन मनसा लोकोऽयमुन्माद्यते ॥ २३ ॥

175
T. 77
काप्यन्या मुकुलाधिकारमिलिता लक्ष्मीरशोकद्रुमे
माकन्दः समयोचितेन विधिना धत्तेऽभिजातं वपुः ।
किं चाषाढगिरेरनङ्गविजयप्रस्तावनापण्डितः
स्वैरं सर्पति बालचन्दनलतालीलासखो मारुतः ॥ २४ ॥

176
T. 78
S. 2.154.3
(कस्यचित्)
वह्निर्मन्ये हिमजलमिषात्संश्रितः किंशुकेषु
व्यामं धूमैः स खलु कुरुते काननं कोरकाख्यैः ।
संतापार्थं कथमितरथा पान्थसीमन्तिनीनां
पुष्पव्याजाद्विसृजति शिखाश्रेणिमुद्गाढशोणीम् ॥ २५ ॥
पौतायनेः ॥

---

**172** — [b]) N स्पर्धितः चिरं?; K स्पर्धित सचिरं. ○ Śp. 3794 (विज्जकायाः); Smk. 59.12 (विज्जाकायाः); SK. 3.352; SG. 73*a*; Srb. p. 331.11. **173** — [a]) S वापी-. S °दरा. — [c]) $T_2$ °तमपाम्°. — [cd]) S किं चान्यत्कुसुमायुधोऽद्य भगवान्धत्ते सगर्वं धनुर्ज्यामुन्मार्ष्टि च पत्रिभिश्च विशिखैर्जेतुं जगद्वाञ्छति. **174** — [b]) $T_1$ मधुरामोदो. — [c]) $T_1$ विधि*. $T_2$ विधिना. — [d]) T उन्माद्यति. **176** — [a]) S °जलभयात्. — [b]) S श्यामं. — [d]) $S_{1.3}$ °शोणां. — [e]) T यौतायणेः.

श्रोण्यां चित्रः कुरुबकगुणः कर्णयोर्मुग्धचूतं 177 T. 79
रक्ताशोकं प्रणयि कुचयोर्माधवी मूर्धजेषु ।
सर्वाङ्गीणो बकुलरजसा पिञ्जरेणोपरागः
स्त्रैणो यूनां भवतु रतये वेशसर्वाभिसारः ॥ २६ ॥
सावर्णेः ॥

मुग्धाताम्रैर्नवकिशलयैः संभृतोदारशोभं 178 T. 80 P. 90b
प्रादुर्भूतभ्रमरसरणीयौवनोद्भेदचिह्नम् ।
सीमन्तिन्यः कुसुम↑धनुषा बद्धसख्यस्य मासः ↑K. 14b
स्निग्धस्मेरैर्मुखमधिगुणं दृष्टिपातैः पिबन्ति ॥ २७ ॥
वागुरस्य ॥

शिलीमुखैरद्य मनोज्ञपक्षैर्विषोपलेपादिव कज्जलाभैः । 179 T. 81 P. 91a
नितान्तपूर्णा मुचकुन्दकोषा विभान्ति तूणा इव मन्मथस्य ॥२८॥
शुभाङ्गस्य ॥

स्नेहं स्रवन्ति तरवः पश्चापि ↑ क्षिपति मार्गणान्मदनः । ↑N. 6a 180 T. 82
परिमुक्तकण्ठरोधः परपुष्टः क्षरति माधुर्यम् ॥ २९ ॥
श्रीधर्माकरस्य ॥

संकुचिता इव पूर्वं दुर्वारतुषारजनितजडिमानः । 181 T. 83
संप्रत्युपरमति हिमे क्रमशो दिवसाः प्रसारजुषः ॥ ३० ॥
श्रीधरणीधरस्य ॥

दुःश्लिष्टदुर्लक्ष्यपलाशसंधीन्यापाटलाग्राणि हरिन्ति मूले । (182) T. 84
कुशेशयानां शुकशावभांसि प्रादुर्बभूवुर्नवकुड्मलानि ॥ ३१ ॥

उपनयति कपोले लोलकर्णप्रवाल- 183 T. 85
क्षणमुकुलनिवेशान्दोलनव्यापृतानाम् ।
परिमलितहरिद्रान् संप्रति द्राविडीनां
नवनखपदतिक्तानातपः स्वेदबिन्दून् ॥ ३२ ॥
योगेश्वरस्य ॥

---

**177** — $^{d}$) K भवति. **178** — $^{a}$) P °शोभां. — $^{b}$) P °भ्रमररमणी-. — $^{c}$) P °वर्धसख्य°. **179** — $^{c}$) P युतकुंद-. — $^{e}$) T om. **180** — $^{d}$) K परिपुष्टः. — $^{e}$) T श्रीधर्म-. **181** — $^{b}$) T2 दुर्ग इव (दुर्वार-). — $^{c}$) T उपरमित-. — $^{e}$) N om. श्री-. **183** — $^{c}$) K परिमिलित-.

(184)
T. 86

सद्यस्तप्तो भ्रमति रजनीं वासरः खण्डयित्वा
क्षीणक्षीणा तदनु भजते सापि सम्यक्प्रसादम् ।
एको ↑ लोके कथयति नरस्येष्टजाते निसर्गं ↑T. 17b
नार्याः पुंसि स्थितिमनुगुणां शंसति स्पष्टमन्या ॥ ३३ ॥

185
S. 2.154.4
(वामनस्य)

इदानीं प्लक्षाणां जठरदलविश्लेषचतुरः
स्थितीनामावन्धः स्फुटति शुकचञ्चूपुटनिभः ।
ततः स्त्रीणां हन्त क्षममधरकान्तिं कलयितुं
समन्तान्निर्याति स्फुटसुभगरागं किसलयम् ॥ ३४ ॥

186

उद्गच्छत्यलिझङ्कृतिः स्मरधनुर्ज्यामञ्जुगुञ्जारवैर्
निर्याता विषलिप्तभल्लिविषमाः कंकेल्लिफुल्लच्छटाः ।
रे संप्रत्यपवित्रमत्र पथिकाः सारम्भमुज्जृम्भते
चूतो दूत इवान्तकस्य कलिकाजालस्फु↑रत्पल्लवः ॥ ३५ ॥ ↑K. 15a

187
S. 2.154.1

मिथःक्रीडालोलभ्रमरभरभङ्गाङ्कुररस-
प्रसेकप्रोन्मीलत्परिमलसमालब्धपवनः ।
इतोऽस्त्येष श्रीमानविरलमिदानीं मुकुलितः
प्रयच्छन्नुन्मादानहह सहकारद्रुमयुवा ॥ ३६ ॥

188
S. 2.152.2

अङ्कुरिते पल्लविते कोरकिते विकसिते च सहकारे ।
अङ्कुरितः पल्लवितः कोरकितो विकसितश्च हृदि मदनः ॥ ३७ ॥

189

उत्फुल्ला नवमालिका मदयति घ्राणेन्द्रियाह्लादिनी
जातं धूसरमेव किंशुकतरोराश्यामलं जालकम् ।
आचिन्वन्ति कदम्बकानि मधुनः पाण्डूनि मत्तालयः
स्त्रीणां पीनघनस्तनेषु कणवान् स्वेदः करोत्यास्पदम् ॥ ३८ ॥

भवभूतेः ॥

---

**184** — [a]) T वासवः· — [d]) K पुंस्थिस्थिति·. **185** — [a]) S1.3 जरठ·. — [b]) KS स्फुरति· K °पुटमिभः· — [c]) S हस्तक्षम· — [d]) S3 °रागः किसलयः· ○ Vām. ad 4.2.2. **186** — [c]) K अपमित्र·. **187** — [b]) S °भग्नांकुर·. — [b]) S1 °समारब्ध·. — [c]) S इतोप्येष· — [d]) S °त्युन्मादान्. **188** — [d]) S om. हृदि; S2.3 मदनोऽसौ. ○ Dhv. ad 2.28; Vyk. ad 3.27; ŚB. 2.3. **189** — [a]) K नवमल्लिका· — [b]) N यातं· — [c]) K पांडुनिमित्ता·

सपदि सखीभिर्निभृतं विरहवतीस्नातुमत्र भज्यन्ते । 190 P. 91a
सहकारमञ्जरीणां शिखोद्गमग्रन्थयः प्रथमे ॥ ३९ ॥

राजशेखरस्य ॥

॥ इति वसन्तव्रज्या ॥ ८ ॥

## ॥ ग्रीष्मव्रज्या ॥ ९ ॥

विश्लेषो जनितः प्रियैरपि जनैरुज्जृम्भितं नालिकैर् 191 P. 91a
मित्रेणापि खरायितं तरुणया दीर्घायितं तृष्णया ।
गुर्वी वल्लभता जडैरधिगता दोषाकरः सेव्यते
हा कालः किमयं कलिर्न हि न हि प्राप्तः स घर्मागमः ॥ १ ॥

तदात्वस्नातानां मलयजरसार्द्रार्द्रवपुषां 192 S. 2.159.1
कचान् बिभ्राणानां दरविकचमल्लीमुकुलिनः ।
निदाघार्कप्लोषग्लपितमहिमानं मृगदृशां
परिष्वङ्गोऽनङ्गं पुनरपि शनैरङ्कुरयति ॥ २ ॥

मङ्गलार्जुनस्य ॥

प्रवृद्धतापो दिवसोऽतिमात्रमत्यर्थमेव क्षणदा च तन्वी । (193)
उभौ विरोधक्रियया विभिन्नौ जायापती सानुशयाविव स्तः ॥ ३ ॥

बटोः ॥

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि (194) P. 91b (anon)
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ।
शुष्यच्छ्रोतसि तप्तभूमिरजसि ज्वालायमानाम्भसि ↑ K. 15b
ज्येष्ठे मासि खरार्कतेजसि कथं पान्थ व्रजञ्जीवसि ॥ ४ ॥

बाणस्य ॥

---

**190** ○ Vid. 1.24; Bāl. 5.39; ŚB 1.430, 4.712; Srb. p 331.14. **191** P °णयोद्दीर्घायितं. — c) K वल्लनता. P जनैर्. — d) P घर्मोदयः. ○ Sbh. 1707 (रतिमित्रस्य); JSV. 272.1. **192** — a) S °रसैराद्र-. — b) S3 कुचान्. — c) S °प्रोष°. ○ Śp. 3834; Sbh. 1714; Ssm. 850. **193** ○ Slp. 7.14. **194** — a) P शारंग-. — c) P °स्त्रोतसि. P ज्वारायमाना-. ○ Smk. 60.26 (भट्टबाणस्य); Ś p. 3854 (बाणभट्टस्य); Sbh. 1703 (भट्टबाणस्य); KHA. 434; Skb. 2.214, 5.463; ŚB 2.396; SK. 3.339; Amd. 556; JSV. 272.3.

195 P. 91b गुरुर्गर्भारम्भः क्लमयति कलत्रं बलिभुजः
समग्रोष्मा चूतं पचति पिचुमर्दं च दिवसः ।
इदानीं नीहारस्तिमितपवनप्रीतिजनितां
निशाशेषो निद्रां नुदति पटुधूम्याटमुखरः ॥ ५ ॥
राजशेखरस्य ॥

(196) P. 91b सान्द्रक्षीणप्रततविततच्छिन्नभुग्नोन्नताभिः
प्रायः कश्मीरजरुचिजुषो दाववह्नेः शिखाभिः ।
वायुः सञ्चारिण इव लिखत्यानने दिग्वधूनां
धूमोद्गारैरगुरुपवनैः सान्तरान् पत्रभङ्गान् ॥ ६ ॥

197 T. 87 हिन्दोलमधुरोपलालनरसप्रीतप्रपापालिका-
गीता↑वर्जितमुग्धवातहरिणश्रेणीपरीतान्तिकाः । ↑T. 19a
औत्सुक्यं जनयन्ति पान्थपरिषद्धर्माम्बुबिन्दूत्कर-
व्याक्षेपक्षममन्दमन्दमरुतो मार्गस्थलीपादपाः ॥ ७ ॥

198 T. 88 चञ्चच्चञ्चुगणोदरैः शिथिलितप्रायांसमुत्पक्ष्मल-
न्यञ्चत्पक्षपुटावकाशविरमत्पार्श्वोष्मभिर्नीयते ।↑ ↑N 6b
जङ्घाकुञ्चनलब्धनीडनिबिडावष्टम्भकष्टोज्झित-
क्षेपीयःपवनाभिघातरभसोत्क्षेपैरहः पक्षिभिः ॥ ८ ॥

199 T. 89 धास्यत्यद्य सितातपत्रसुभगं सा राजहंसी शिशोः
स्मेराम्भोरुहवासिनोऽपि शिरसि स्नेहेन पक्षद्वयम् ।
तृष्णार्तः शुकशावकोऽपि सुतनोः पीनस्तनासंगिनीं
मुक्ताहारलतां तदङ्कवसतिस्तोयाशया पास्यति ॥ ९ ॥

200 T. 90 S. 2.157.1 भुवां घर्मारम्भे पवनचलितं तापहतये
पटच्छत्राकारं वहति गगनं धूलिपटलम् ।
अमी मन्दाराणां दवदहनसंदेहितधियो
न ढौकन्ते पातुं झटिति मकरन्दं मधुलिहः ॥ १० ॥
भवभूतेः ॥

---

**195** — [b]) P चूडं. **196** — [a]) K सांद्री. — [b]) P कास्मीर°. K °मुखो (°जुषो). P शिखाभः. — [c]) K सिखोद्यानने; P निखन्यानने. — [d]) P °गुरुमलिनैः. **198** — [a]) K °गलोदरैः. **200** — [b]) S1 पटच्छाया-. S2 रहति. — [c]) S1 द्रवदहन-. — [d]) T ढौकंते. — [e]) T om.

अपां ↑ मूले लीनं क्षणपरिचितं चन्दनरसे ↑ K. 16a 201 T. 91 S. 2,159.2
मृणालीहारादौ कृतलघुपदं चन्द्रमसि च ।
मुहूर्तं विश्रान्तं सरसकदलीकाननतले
प्रियाकण्ठाश्लेषे निवसति परं शैत्यमधुना ॥ ११ ॥

प्रान्तारक्तविलोचनाञ्चलदरीव्यग्राल्पमक्षीभय- (202) T. 92
प्रोद्धूतोभयशृङ्गकोटिविगलच्छैवालवल्लीसखैः ।
पाथोबिन्दुभिरक्षिसंधिषु शनैः संसिच्यमानः सुखं
मग्नो वारिणि दूरनिःसहतया निद्रायते सैरिभः ॥ १२ ॥

तापं स्तम्बेरमस्य प्रकटयति करः शीकरैः कुक्षिमुक्षन् 203 T. 93
पङ्काङ्कं पल्वलानां वहति तटवनं माहिषैः कायकाषैः ।
उत्ताम्यत्तालवश्च प्रतपति तरणावांशवीं तापतन्द्रीम्
अद्रिद्रोणीकुटीरे कुहरिणि हरिणारातयो यापयन्ति ॥ १३ ॥

जाताः पान्थनखंपचाः प्रचयिनो गन्त्रीपथे पांशवः 204 T. 94
कासारोदरशेषमम्बु महिषो मथ्नाति ताम्यत्तिमि ।
दृष्टिर्धावति धातकीवनमसृक्तर्षेण तारक्षवी
कण्ठान् बिभ्रति विष्किराः शरशमीनीडेषु नाडिंधमान् ॥ १४ ॥
बाणस्यैतौ ॥

सुभगसलिलावगाहाः पाटलिसंसर्गसुरभिवनवाताः । 205 T. 95
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ १५ ॥
कालिदासस्य ॥

अग्रे तप्तजला नितान्तशिशिरा मूले मुहुर्बाहुभिर् 206 T. 96
व्यामथ्योपरतप्रपेषु पथिकैर्मार्गेषु मध्यंदिने ।
आधाराः प्लुतबालशैवलदलच्छेदावकीर्णोर्मयः
पीयन्ते हलमुक्तमग्नमहिषप्रक्षोभपर्याविलाः ॥ १६ ॥
योगेश्वरस्य ॥

---

**201** — [b]) T कूले. — [c]) S2.3 °काननतटे. — [d]) S1 निविशति. S1.2 पदं. ŚB. 3.166. **202** — [a]) T °निलोचन-. **203** — [c]) T तरणावा(T2 नां)शवी; K तरसायांशवी. — [d]) T रात्रयो. K रापयंति. ○ Vkj. 2.8 (*cd* only). **204** — [a]) T1 *डाः; T2 वाताः K लताः (जाताः). — [c]) T1° सूक्तर्षेण; T2 °सूक्त°. — [d]) T विष्कराः. T नाडींधमान्. — [e]) T बाणस्योभौ. **205** ○ Śāk. 1.3; Srh. 185.3; Sab. 5.32*a* (कालिदासस्य); ŚB. 3.184; Srb. p. 335.4. **206** — [b]) T °रतप्रियेषु.

(207) T. 97 मृद्भूयिष्ठतया गुरून् परिहरन्नारण्यकान् गोमयान्
वल्मीकानुपगूहति प्रशिथिलं ज्वालाभिरुद्वल्बजान् ।
वह्निर्नीडकिलिञ्जसञ्चयसमुत्सिक्तश्चरन् कानने
प्रस्निग्धानिह ↑ विष्किराण्डकललानाज्याशया लुम्पति ॥ १७ ॥ ↑ K. 16b

तस्यैव ॥

208 T. 98 दूरीभूतशरारि विक्लवबकं संक्रान्तकारण्डवं
क्लाम्यत्कङ्कमचक्रवाकममिलन्मद्गु प्रयातप्लवम् ।
क्लिष्टक्रौञ्चमधार्तराष्ट्रमपतत्कोयष्टि निष्टीटिभं
सीदत्सारसमप्रसक्तकुररं कालेन जातं सरः ॥ १८ ॥

तस्यैव ॥

209 T. 99 S. 2.158.2 (मधुरशीलस्य) तोयोत्तीर्णाः श्रयति कवरीः शेखरः सप्तलानां
शैत्यं सिञ्चत्युपरि कुचयोः पाटलाकण्ठदाम ।
कान्तं कर्णावभिनिविशते कोमलाग्रं शिरीषं
स्त्रीणामङ्गे विभजति तपस्तत्र तत्रात्मचिह्नम् ॥ १९ ॥

मधुशीलस्य ॥

210 T. 100 शुकपत्रहरितकोमलकुसुमशटानां शिरीषयष्टीनाम् ।
तलमाश्रयति दिनातपभयेन परिपिण्डितं शैत्यम् ॥ २० ॥

वागुरस्य ॥

(211) T. 101 S. 2.159.4 हरन्ति हृदयानि यच्छ्रवणशीतला वेणवो
यदर्पति करम्बिता शिशिरवारिणा वारुणी ।
भवन्ति च हिमोपमाः स्तनभुवो यदेणीदृशां
शुचेरुपरि संस्थितो रतिपतेः प्रसादो गुरुः ॥ २१ ॥

212 T. 102 S. 2.158.1 जलार्द्राः संव्यानं बिसकिसलयैः केलिवलयाः
शिरीषैरुत्तंसो विचकिलमयी हाररचना ।
शुचावेणा↑क्षीणां मलयजरसार्द्राश्च तनवो ↑ N. 7a
विना तन्त्रं मन्त्रं रतिरमणमृत्युंजयविधिः ॥ २२ ॥

---

**207** — [c]) T1 मीत; T2 लीढ (नीड). **208** — [b]) T °प्रपात°. **209** — [a]) S तोयोत्तीर्णा···कवरी शेखरं. K सप्तनालां. **210** — [b]) T °सटानां. **211** ○ Vid. 4.4. — [b]) यद्र्दं (or र्चं) ति···शिशिरवायुना. Srb. p. 336.24. **212** — [a]) S1 जलार्द्रा; S2, 3 जलार्द्रैः. — [b]) S1 उत्तंसा. ○ Vid. 4.3; Srb. p. 336.23.

रजनिविरमयामेष्वादिशन्ती रतेच्छां 213 T. 103
किमपि कठिनयन्ती नारिकेलीफलाम्भः ।
अपि परिणमयित्री राजरम्भाफलानाम्
दिनपरिणतिरम्या वर्तते ग्रीष्मलक्ष्मीः ॥ २३ ॥

**एते राजशेखरस्य** ॥

अम्भोधेर्जलयन्त्रमन्दिरपरिस्पन्देऽपि निद्राणयोः (214) T. 104
श्रीनारायणयोर्घनं विघटयत्यूष्मा समालिङ्गनम् । S. 2.157.4
किं चोत्तप्तवियत्कपालफलके कङ्कालशेषश्रियं (कस्यचित्)
चन्द्रं मर्मरयन्ति पर्पटमिव क्रूरा रवेरंशवः ॥ २४ ॥

T. **नारायणलच्छेः** ॥

॥ **इति ग्रीष्मव्रज्या** ॥ ९ ॥

## ॥ ततः प्रावृ↑ड्व्रज्या ॥ १० ॥ ↑K. 17a

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः 215 T. 105
पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः ।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः
प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते ॥ १ ॥

फलभरपरिणामश्यामजम्बूनिकुञ्ज- 216 T. 106
स्खलिततनुतरङ्गामुत्तरेण श्रवन्तीम् ।
उपरिविघटमानप्रौढतापिञ्जनीलः
श्रयति शिखरमद्रेर्नूतनस्तोयवाहः ॥ २ ॥

जृम्भाजर्जरडिम्बडम्बरघनश्रीमत्कदम्बद्रुमाः 217 T. 107
शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः ।
उद्यत्कुन्दलतान्तकेतकभृतः कच्छाः सरिच्छ्रोतसाम्
आविर्गन्धशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः ॥ ३ ॥

---

**213** ○ Vid. 4.2; Srb. p. 336.20. **214** — a) S1 अंभोधिर्. T2 °मन्दर-. — d) S1 पर्पटवर; S2.3 पर्पटकर; T पर्पटमिति. — e) K om. **215** ○ Māl. 9.15. — d) °नायते; Srb. p. 140.3. **216** — a) K कलभय-. — c) T °तापिच्छ-. ○ Māl. 9.24. **217** — b) K कुकुभः. — c) T2 कुंदलकांत; K कंदलकांत. ○ Māl. 9.16. — d) आविर्भूत-; Srb. p. 140.4.

218 T. 108 P. 93a
उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझंझामरुत्-
प्रेङ्खोलस्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः ।
धारासिक्तवसुन्धरासुरभयः प्राप्तास्त एतेऽधुना
घर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः ॥ ४ ॥
**भवभूतेरमी ॥**

219 T. 109 P. 93a
एणी याति विलोक्य बालशलभान् शष्पाङ्कुरादित्सया
छत्रीकुड्मलकानि रक्षति चिरादण्डभ्रमात्कुक्कुटी ।
धूत्वा धावति कृष्णकीटपटलश्रेणीं शिखण्डी शिरो
दूरादेव वनान्तरे विषधरग्रासाभिलाषातुरः ॥ ५ ॥

220 T. 110 S. 2.166.1 (कस्यचित्)
आसारान्तमृदुप्रवृत्तमरुतो मेघोपलिप्ताम्बरा
विद्युत्पातमुहूर्तदृष्टककुभः सुप्तेन्दुताराग्रहाः ।
धाराक्लिन्नकदम्बसंभृतसुरामोदोद्वहाः प्रोषितैर्
निःसंपातविसारिदर्दुररवा नीताः कथं रात्रयः ॥ ६ ॥
**योगेश्वरस्य ॥**

(221) T. 111 S. 2.164.1 (योगेश्वरस्य)
दात्यूहध्वनिभाञ्जि वेतसशिखासुसोरगाणि ध्वनत्-
कादम्बानि कुरङ्गयूथकलितस्तूपान्युदम्भांसि ↑ च । ↑ K. 17b
तीराण्यद्य पिपीलिकासमुदयावर्जज्जटालोलप-
व्याप्तान्युन्मदकुक्कुभानि सरितां कुर्वन्ति लोलं मनः ॥ ७ ॥

222 T. 112
कान्तां क्वापि विलम्बिनीं कलरुतैराहूय भूयस्ततो
दिग्भागानवलोक्य रङ्गवसुधामुत्सृज्य पङ्क्त्यां ततः ।
एष स्फारमृदङ्गनादमधुरैरम्भोमुचामारवैर्
बर्हश्रेणिकृतातपत्ररचनो हृष्टः शिखी नृत्यति ॥ ८ ॥

223 T. 113 P. 95a
पीताम्भःस्तिमिताः सृजन्ति सलिलान्यावद्धधारं घनास्
तद्धाराध्वनिमीलितानि नयनान्यभ्येति निद्रागमः ।

---

**218** — a) P °वासितपयः पौलस्त्य-. — d) P विश्रमा°: ○ Māl. 9.17 ; Srb. p. 342.65. **219** — a) P °सुलभान्. P °रनिच्छया. — b) T कुकुंटी ; P कुड्मलं. — c) P हृष्टकीट-. — d) P वनांतरे. **220** — c) S °सुधामोदो-. **221** — b) T1 कुरंज-. — c) S °ज्झटालोलुप-. **222** — a) T1 lac. T2 चेतस (भूयस्). **223** — a) P शीतांभ-. — d) P °न्दोच्छलदुच-.

निद्रामुद्रितलोचने प्रतिगृहं मूकायमाने जने
निर्द्वन्द्वोच्चरदुच्चदर्दुररवैः कोलाहलिन्यो निशाः ॥ ९ ॥

धारानिपातरवबोधितपञ्जरस्थ- 224 T. 114
दात्यूहडम्बरकरम्बितकण्ठकूजाः । S. 5.38.3 (श्रीहनूमतः)
अट्टेषु काण्डपटवारितशीकरेषु P. 95a
धन्याः पिबन्ति मुखतामरसं वधूनाम् ॥ १० ॥ (श्रीशुभाङ्कस्य)

शैलश्रेणिरपेतदावदहना दग्धप्ररूढं वनं 225
जीमूताङ्कुरदन्तुरा दश ↑ दिशो भूरेणुमुक्तं नभः । ↑N. 7b T. 115
किं चान्यत्कलिकोर्मिमेदुरमुखी जाता कदम्बच्छविश्
छिद्यन्ते कियता क्षणेन शिखिनां मौनव्रतग्रन्थयः ॥ ११ ॥

केदारे नववारिपूर्णजठरे किंचित्क्वणद्दर्दुरे
शम्बूकाण्डकपिण्डपाण्डुरततप्रान्तस्थलीवीरणे । 226
डिम्भा दण्डकपाणयः प्रतिदिशं पङ्कच्छटाचर्चिताश् T. 116 P. 95a
चुभ्रूश्चुभ्रुरिति भ्रमन्ति रभसादुद्यायिमत्स्योत्सुकाः ॥ १२ ॥

समन्ततो विस्फुरदिन्द्रनीलमणिप्रभाविच्छुरितान्तरालः । 227 T. 117
मर्त्यावतीर्णस्य बिडोजसोऽयं नीलांशुकच्छत्रमिवाम्बुवाहः ॥ १३ ॥ P. 95b

खद्योतच्छुरितान्धकारपटलाः स्पष्टस्फुरद्विद्युतः (228)
स्निग्धध्वानविभावितोरुजलदोन्नाहा रटत्कम्बवः ↑ । ↑K. 18a T. 118 S. 2.166.2
एताः केतकभेदवासितपुरोवाताः पतद्धारयो
न प्रत्येमि जनस्य यद्विरहिणो यास्यन्ति सोढुं निशाः ॥ १४ ॥

एतस्मिन्मदजर्जरैरुपचिते कम्बूरवाडम्बरैः 229 T. 119
स्तैमित्यं मनसो दिशत्यनिभृतं धारारवे मूर्च्छति । S. 2.162.2
उत्संगे ककुभो निधाय रसितैरम्भोमुचां घोरयन् (वातोकस्य)
मन्ये मुद्रितचन्द्रसूर्यनयनं व्योमापि निद्रायते ॥ १५ ॥ P. 95b

---

**224** — [a]) P °खरोदित-. — [c]) P आडंबकांड-. ○ SB. 3.390. **225** — [a]) T lac + धनं (वनं). — [c]) T °मेदुरसुखी. **226** — [a]) P °वारिपूरिततटे. — [b]) P °काण्डज-. TP °पांडर°. KP °तरप्रांत-. — [d]) P रभसां त्वं वापि. **227** — [b]) P °प्रभाविस्फुरितांतराणि. **228** — [b]) S1, 2 °स्निग्धध्यान-. **229** — [a]) P °पच्चितैः. S2 कंबूकरा°. — [b]) S3 नभसो. P दिशंति निभृतं. S धाराधरे. K मूर्च्छिति. — [c]) T विधाय.

230 T. 120 P. 95b गम्भीराम्भोधराणामविरलनिपतद्वारिधारानिनादान्
ईषन्निद्रालसाक्षा दृढगृहपटलारूढकुष्माण्डबन्ध्याः ।
दोर्भ्यामालिङ्गयमाना जलधरसमये पत्रषण्डे निशायां
धन्याः शृण्वन्ति सुप्ताः स्तनयुगभरितोर↑ःस्थलाः कामिनीनाम् ॥१६॥ ↑T. 21b

231 P. 95b अपगतरजोविकारा घनपटलाक्रान्ततारकालोका ।
लम्बपयोधरभारा प्रावृडियं वृद्धवनितेव ॥ १७ ॥

(232) अम्भोधेर्वडवामुखानलझलाज्वालोपगूढान्तरा
व्यामोहादपिबन्नपः स्फुटममी तर्षेण पर्याविलाः ।
उद्देशस्फुरदिन्द्रचापवलयज्वालापदेशादहो
दह्यन्ते कथमन्यथाधमलिनाङ्गारद्युतस्तोयदाः ॥ १८ ॥

(233) कृत्वा पिच्छिलतां पथः स्थगयता निर्भर्त्सनं पादयोः
सान्द्रैर्वारिकणैः कपोलफलके विच्छित्तिमाच्छिन्दता ।
मेघेनोपकृतं यदाशु विहिता तस्यागसो निष्कृतिः
स्वैरिण्याः प्रियवेश्मवर्त्म दिशता विद्युद्विलासैर्मुहुः ॥ १९ ॥

234 P. 96a आसारोपरमे प्रगाढतिमिराः किर्मीरयन्त्यो निशाः
पान्थस्त्रीमनसां स्मरानलकणासन्तानशङ्कास्पृशः ।
पिष्टानां प्रसभं घनाघनघटासंघट्टतो विद्युतां
चूर्णाभाः परितः पतन्ति तरलाः खद्यो↑तकश्रेणयः ॥ २० ॥ ↑K. 18b

235 P. 96a हस्तप्राप्यमिवाम्बरं विदधतः खर्वा इवाशाततीर्
गर्जाभिः क्षणजर्जरीकृतघनानुत्तालधारारवाः ।
कामघ्नं स्थलमस्ति नाम तदिभीवोद्दामसौदामिनी-
नेत्रोन्मेषविलोकिताखिलभुवो वर्षन्ति नक्तं घनाः ॥ २१ ॥

---

**230** — [b]) P नीषन्. T1 वल्ह्याः; T2 वह्यः; K °वन्ध्याः; P वल्म्यः. — [d]) N °पतितोरः°. **231** — [a]) P सुपगतगिरिकारा. ○ Sbh. 1738 (वृद्धेः). **232** — [b]) K पर्याविना |. **234** — [a]) P विसारयंत्या. — [b]) P °कणा उत्ताल°. **235** — [a]) P सर्वा. — [b]) K गर्जद्भिः. P उत्तान°. K °रवान्.

उत्पुच्छानतधूतपक्षततयो झात्कारिणो विभ्रमैर् (236)
उद्वाच्यास्ततचञ्चवो लयवशादुत्क्षि[स]पादा मुहुः ।
पश्यन्तो निजकण्ठकाण्डमलिनां कादम्बिनीमुन्नत-
ग्रीवाभ्यर्णमिलत्कलापविटपा नृत्यन्ति केकाभृतः ॥ २२ ॥

इदानीं वंशीनां शबरमिथुनोच्छृङ्खलरहः- (237)
क्रियासख्येनालं गिरिवनसरिद्ग्रामसुहृदाम् ।
स्फुरल्लोमश्यामच्छगलशिशुकर्णप्रतिसम-
च्छदाग्राभिस्त्वग्भिर्वलयितकरीरास्तलभुवः ॥ २३ ॥

पार्श्वाभ्यां शिरसा निमीलितदृशः कामं निमज्य क्रमाद् (238) P. 92b
अंसौ पृष्ठमुरः सपक्षतितलं गाढं स्पृशन्तो मुहुः ।
एते कुञ्चितजानवो नवजले निर्वान्ति घर्माहता
भूयः पक्षपुटाभिपातरभसोत्सर्पत्कणाः पत्रिणः ॥ २४ ॥

मज्जानमपि विलिम्पति नाकृतपुण्यस्य वर्षति पयोदे । 239
निर्गमकेलिसमुत्सुकशिशुवारणगाढपरिरम्भः ॥ २५ ॥

आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभिस् 240 S. 2.104.3 (यशोधर्मणः) P. 96a (anon), 164b (जयदेवस्य)
तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ।
अन्तर्मे दयितामुखं तव शशी वृत्तिः समैवावयोस्
तत्किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यतः ॥ २६ ॥

भुवः किमेता दिवमुत्पतन्ति दिवोऽथवा भूतलमाविशन्ति । 241 P. 96a
चलाः स्थिरा वेति वितर्कयन्त्यो ↑ धाराः कराग्रैरचलाः स्पृशन्ति ॥ २७ ॥ ↑K. 19a

छत्रावलम्बि विमलोरुपयःप्रवाहधाराभरस्फटिकपञ्जरसंयताङ्गः । 242
पान्थः स्वशासनविलङ्घनजातकोपकामाज्ञया प्रियतमामिव नीयते स्म ॥२८॥

---

**237** — [a]) K °नोत्संखल-. **238** — [b]) P अंशौ. P °मुरश्च पक्षति-. P स्पृशंतौ. — [c]) P घर्माहताद्. — [d]) P °रभसांत्संपर्कणां. **239** — [d]) K °शिशुनारण-. **240** — [a]) P2 आक्रांता. P2 °जलैर्. P1 °धाराद्युतिस्. — [c]) P1 स्वांतर्मे. — [d]) P दग्धम्. ○ Smk. 43.33 (यशोवर्मणः); Sbh. 1776 (आनन्दवर्धनस्य); Dhv. ad 2.20; SG. 62 *b*. **241** — [d]) K अचलान्. **242** — [b]) N may be सञ्जुताङ्गः I. perhaps for संयुताङ्गः.

(243) T. 121 अद्याम्भः परितः पतिष्यति भुवस्तापोऽद्य निर्वास्यति
क्षेत्रेष्वद्य यतिष्यते जनपदः सस्येषु पर्युत्सुकः ।
नर्तिष्यन्ति तवो↑दयेऽद्य जलद व्यालोलपुच्छच्छद- ↑T. 23a
च्छत्रच्छादितमौलयो दिशि दिशि क्रीडालसाः केकिनः ॥ २९ ॥

244 T. 122 P. 96b गायति हि नीलकण्ठो नृत्यति गौरी तडित्तरलतारा ।
आस्फालयति मृदङ्गं तदनु घनोऽयं महाकालः ॥ ३० ॥

245 T. 123 अलकेषु चूर्णभासः स्वेदलवाभान् कपोलफलकेषु ।
नवघनकौतुकिनीनां वारिकणान् पश्यति कृतार्थः ॥ ३१ ॥

246 T. 124 P. 96b काले वारिधराणामपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठितासि तरले, न हि न हि सखि पिच्छिलः पन्थाः ॥ ३२ ॥

247 T. 125 P. 96b असितभुजगशिशुवेष्टितमभिनवमाभाति केतकीकुसुमम् ।
आयसवलयालङ्कृतविषाणमिव दन्तिनः पतितम् ॥ ३३ ॥

248 T. 126 स्तम्बेषु केतकीनां यथोत्तरं वामनैर्दलैरद्य ।
विदल↑न्ति मेषतर्णकपुच्छच्छविकेशराः सूच्यः ॥ ३४ ॥ ↑N. 8a

249 T. 127 धूलीभिः केतकीनां परिमलनसमुद्धूलिताङ्गः समन्ताद्
अन्तोद्वेलद्बलाकावलिकुणपशिरोनद्धनीलाभ्रकेशः ।
प्रेङ्खद्विद्युत्पताकावलिरुचिरधनुःखण्डखट्वाङ्गधारी
संप्राप्तः प्रोषितस्त्रीप्रतिभयजनकः कालकापालिकोऽयम् ॥ ३५ ॥

250 T. 128 P. 96b (? योगेश्वरस्य) मेघश्यामदिशि प्रवृत्तधनुषि क्रीडत्तडित्तेजसि
च्छ↑न्नाहर्निशि गर्जितप्रमनसि प्रम्लानलीलारुचि । ↑K. 19b
पूर्णश्रोतसि शान्तचातकतृषि व्यामुग्धचन्द्रत्विषि
प्राणान् पान्थ कथं दधासि निवसन्नेतादृशि प्रावृषि ॥ ३६ ॥

---

**246** — [a]) P अवति तया· ○ Sd. p. 288. **247** — [a]) P स्वशितभुजगवेष्टितम्· **248** — [d]) T₂ °कच्छच्छवि°. **250** — [b]) P मज्जर्दिदुमहसि· K प्रस्नान°; P प्रस्थान°· T °लीलाकृपि· — [c]) P पूर्णे· K श्रांतचातक°· P व्यालुप्तसूर्य°·

क्षपां क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां 251 T. 129 S. 2.163.2 (श्रीकण्ठस्य)
प्रताप्योर्वीं सर्वां वनगहनमुच्छाद्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति समन्वेषणपरास्
तडिद्दीपालोकैर्दिशि दिशि चरन्तीव जलदाः ॥ ३७ ॥

विद्युद्दीधितिभेदभीषणतमःस्तोमान्तराः संतत- 252 T. 130 S. 2.166.5 (कस्यापि)
श्यामाम्भोधररोधसंकटवियद्विप्रोषितज्योतिषः ।
खद्योतानुमितोपकण्ठतरवः पुष्णन्ति गंभीरताम्
आसारोदकमत्तकीटपटलीक्वाणोत्तरा रात्रयः ॥ ३८ ॥

अभिनन्दस्य ॥

हर्षोल्लासितचारुचन्द्रकबृहद्बर्हैर्वनानाममी (253) T. 131
जाताः पुष्पितबालशाखिन इवाभोगा भुजङ्गाशिभिः ।
स्पृह्याः कोटरनिर्गतार्धतनुभिः पातुं पयोदानिलं
निर्यद्दंशकरीरकोटय इव क्षोणीभृतो भोगिभिः ॥ ३९ ॥

शतानन्दस्य ॥

एताः पङ्किलकूलरूढनलदस्तम्बक्वणत्कम्बवः (254) T. 132 S. 2.164.2 (परमेश्वरस्य)
क्रीडत्कर्कटचक्रवालविदलज्जम्बालतोयाविलाः ।
हृल्लेखं जनयन्त्यनूपसरितामुत्तुण्डगण्डूपदो-
त्कीर्णक्लिन्नमृदो नदस्थपुटितप्रान्तास्तटीभूमयः ॥ ४० ॥

योगेश्वरस्य ॥

नवे धारासारे प्रमदचटुलायाः स्थलजुषो (255) T. 133
वराटीशुभ्रायाः शफरसरणेरेभिरुपरि ।
कुलीरैर्भ्राम्यद्भिर्गणयितुमिव व्यापृतकरा
मनः क्रीणन्तीव प्रकटविभवाः पल्वलभुवः ॥ ४१ ॥

अभिषेकस्य ॥

---

**251** — [a]) S3 क्षपाः. — [b]) S3 तरुगहनं. S उत्साद्य. — [c]) S3 तदालोकनपरास्. — [d]) S1 तरंतीव; S3 चरंतीह. ◌ Sbh. 1765 (पाणिनेः); Śp. 3869 (पाणिनेः); Smk. 61.18 (पाणिनेः); Sab. 32b (पाणिनेः); Srb. p. 341.55; Pad. p. 77.35 (पाणिनेः); Ssm. 872 (पाणिनेः); JSV. 273.1; BIS. 2009 (3993); SK 3.55; Any. p. 21.170; SG. 76b. **252** — [c]) S खद्योतोन्नमितो°. **254** — [a]) S °स्तंबाः. — [b]) T °विचल°. S °विलस°. — [d]) S कीर्णोद्गीर्णमृदर्बुदस्थ-.

256 T. 134 P. 97a विन्ध्याद्रिमहालिङ्गं स्नपयति पर्यन्यधार्मिकः शुचिभिः ।
जलदेन्द्रनीलगड्डूशतोज्झितैः संप्रति पयोभिः ॥ ४२ ॥ ↑K. 20a ↑T. 23b

257 P. 97a पिबति व्योमकटाहे संसक्तचलत्तडिल्लतारसनः ।
मेघमहामार्जारः संप्रति चन्द्रातपक्षीरम् ॥ ४३ ॥

**योगेश्वरस्यैतौ ॥**

258 अर्धोद्गतेन कदली मृदुताम्रतलेन गर्भकोषेण ।
पिबति निदाघज्वरिता घनधारां करपुटेनैव ॥ ४४ ॥

**तस्यैव ॥**

259 P. 97a आरोहवल्लीभिरिवाम्बुधाराराजीभिराभूमिविलम्बिनीभिः ।
संलक्ष्यते व्योम वटद्रुमाभमम्भोधरश्यामदलप्रकाशम् ॥ ४५ ॥

**दक्षस्य ॥**

(260) नीपैः काञ्चीकृतविरचनैः पिञ्जरं श्रोणिबिम्बं
मिश्रावंसौ श्रवसि वसता कन्दलीकुड्मलेन ।
पाण्डुच्छायः स्तनपरिसरो यूथिकाकण्ठसूत्रैर्
इत्याकल्पः प्रकृतिललितो वल्लभः सुन्दरीणाम् ॥ ४६ ॥

(261) लूने कालाञ्जनपरिचये शीकरैः काममक्ष्णोर्
एकीभूते कुचकलशयोर्वाससि श्यामसूक्ष्मे ।
दृष्टे स्वाभाविकतनुगुणे दुर्दिनस्वैरिणीनां
धन्यो वेषान्तरविरचनं प्रत्युदास्ते कृतार्थः ॥ ४७ ॥

262 S. 2.163.5 P. 97a असौ नास्तीवेन्दुः क्वचिदपि रविः प्रोषित इव
ग्रहोडूनां चक्रं नभसि लिखितप्रोञ्छितमिव ।
अहर्वा रात्रिर्वा द्वयमपि प्रलुप्तप्रविचयं
घनैर्बद्धव्यूहैः किमिदमतिघोरं व्यवसितम् ॥ ४८ ॥

---

**256** N order 257-6. — [b]) T पर्जन्य-; P om. — [d]) P om. °गड्डू°; T2 °गंडूषतोजितैः. **261** — [c]) K °तनुगुणो. **262** — [b]) S1 प्रोञ्चित°; P प्रोर्णित°. — [c]) KSP विलुप्त-. S1 परिचयं; P सुचिरयं. — [d]) S3 P किमिदमिति. P घोरैर्.

तावद्वाचः प्रयुक्ता मनसि विनिहिता जीविताशापि तावद् 263 S. 2.88.1 P. 93*b* (anon)
विक्षिप्तौ तावदङ्गौ पथि पथिकजनैर्लम्भिता तावदाशा ।
फुल्लद्धाराकदम्बस्तबककवलयिता यावदेते न दृष्टा
निर्मुक्तव्यालनीलद्युतिनवजलदव्याकुला विन्ध्यपादाः↑ ।।४९।। ↑ K. 20*b*

कामं कूले नदीनामनुगिरि महिषीयूथनीडोपकण्ठे 264 S. 2 162.1 P. 97*a* (anon)
गाहन्ते शष्पराजीरभिनवशलभग्रासलोला बलाकाः ।
अन्तर्विन्यस्तवीरुत्तृणमयपुरुषत्रासविघ्नं कथंचित्
कापोतं कोद्रवाणां कवलयति कणान् क्षेत्रकोणैकदेशे ।। ५० ।।
**योगेश्वरस्यैतौ** ।।

अमुष्मिन् संनद्धे जलमुचि समभ्यस्य कतिचित् (265)
ककारान् पर्यन्तद्विगुणमतरेफप्रसविनः ।
स माद्यन्दात्यूहश्चलविपुलकण्ठः प्रसरति
क्रमोदञ्चत्तारः क्रमवशनमन्मन्दमधुरः ।। ५१ ।।

।। इति प्रावृड्व्रज्या ।। १० ।।

## ।। ततः शरद्व्रज्या ।। ११ ।।

ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् । 266 P. 97*b*
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ।। १ ।।

यद्यप्यहं शशिमुखी विमलाम्बरश्रीर् 267 S. 2.168.1 P. 97*b*
बन्धूकपुष्परुचिराधरपल्लवाऽपि ।
धिग्मां तथापि गलितोरुपयो↑धरत्वाद् ↑ N 8*b*
इत्युच्चकैः शरदियं वहतीव तापम् ।। २ ।।

---

**263** P om. *ab.* — *b*) S निक्षिप्तौ. S °र्लक्षितास्. KS तावदाशाः. — *c*) S नृत्यद्धारा-. P °कदंबप्रसवमुकुलिता. — *d*) $S_1$ °व्यान-. **264** — *a*) SP °नीलोप°. — *b*) P शर्षराजी अतिनरशरभश्वास-. $S_3$ °ग्रामलोला. — *c*) K °त्रासनं यं; P °डासविघं. **266** Stanzas 266–274 seem to be by Manovinoda. — *c*) P प्रसारयंती. ○ Sbh. 1815 (पाणिनेः); As. ad 31; Amd. 804; Sd. ad 10.56; Vyk. ad 2.41; Vām. ad 4.3.27; ŚB. 3.169.

(268) P. 98a
ते हंसातिथिवत्सला जलरुहां कालेन पीतायुषां
संजीवौषधयो जरा जलमुचामेते शरद्वासराः ।
येष्वभ्यागतखञ्जरीटशबलास्तोयापसारक्रम-
स्तोकस्तोकतरङ्गितान्तपुलिनाः कर्षन्ति नद्यो मनः ॥ ३ ॥

269 S. 2.167.3 (कस्यचित्)
धूम्रैः पक्षपुटैः पतद्भिरभितः पाण्डूदरैः खञ्जनैर्
आयान्तीं शरदं किरन्ति रभसाल्लाजैरिवाशाङ्गनाः ।
मङ्गल्यं च कलङ्कपल्लवसखं स्मेरानना शर्वरी
ज्योत्स्नातर्पणगौरमिन्दुकलशं व्योमाङ्गणे न्यस्यति ॥ ४ ॥

270
दधति धवलाम्भोदच्छायां सितच्छदपङ्क्तयो
दिवि पयसि च श्वेताम्भोजभ्रमं प्रतिमाशतैः ।
विदधति न चेदुत्कण्ठार्द्रं शरन् मणिनूपुर-
ध्वनित↑मधुरोत्तालस्निग्धैर्मनः क्वणितोर्मिभिः ॥ ५ ॥ ↑K. 21a

271
घनैः शेफालीनां हृदयनिविडाश्लिष्टवसुधैः
प्रसूनैरुन्नालैः पुलकिततरोद्यानतरवः ।
निशान्ताः प्रीणन्ति प्रमदकुररोद्गीतरभसो
नभस्वद्व्याधूतस्फुटकुमुदगन्धप्लुतदिशः ॥ ६ ॥

272 P. 98a
रजःपातज्ञानां कुमुदसुमनोमण्डलभुवि
स्मरस्योच्चैर्मन्त्रं किमपि जपतां हुंकृतिमयम् ।
स्थिरे यूनां मानग्रहपरिभवे मूर्च्छति घनो
द्विरेफाचार्याणां मधुमदपटीयान् कलकलः ॥ ७ ॥

273 P. 98a
अधः पश्यन् पार्श्वद्वयवलितसाचीकृतशिराः
शनैः पक्षस्थैर्याद्दिवि मसृणचक्राकृतिगतिः ।
चिराच्चिल्लस्तिर्यक्त्वरिततरमाहारनिपुणो
निपत्यैवाकस्माच्चलचरणमूर्ध्वं प्रपतति ॥ ८ ॥

---

**268** — [a]) K °तिथिवन्मना· — [b]) P शरद्वत्सलाः· — [c]) P °क्रमाः· **269** — [a]) K पक्षपुटे· — [c]) S2.3 °पल्लवमुखं· — [d]) S ज्योत्स्नादर्पण· **272** — [a]) P रजपादज्ञानां· — [b]) P मन्त्री· — [c]) P °ग्रहपरिहरे मूर्छित-· — [d]) P मधुकपटीयान्· **273** — [a]) P °शाचीकृतगिराः· — [b]) P °स्थैर्यादिति· — [c]) P चिराच्छिन्नस्· P दुरिततर°· — [d]) P छलचरण°· P निपतति·

दूरोत्पुच्छः सलयचरणो लम्बलोलत्पतत्रः 274 S. 2.170.1 P. 98a
कण्ठेनोच्चैर्मदकलरुतस्तोकवाचालचञ्चुः ।
हर्षाश्रूर्मिस्तिमितनयनन्यस्तसोत्कण्ठदृष्टिः
कंचित्कालं नटति निकटे खञ्जरीटः प्रियायाः ॥ ९ ॥
मनोविनोदस्यामी ॥

तोयान्तर्लीनमीनप्रचयविचयनव्यापृतत्रोटिकोटि- 275
प्राग्भागप्रह्वकङ्कावलिधवलरुचः पर्यटत्खञ्जरीटाः ।
कूजत्कादम्बराजीपिहितपरिसराः शारदीनां नदीनां
तीरान्ता मञ्जुगुञ्जन्मदकलकुरबश्रेणयः प्रीणयन्ति ॥ १० ॥

तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः 276 S. 2.168.3
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः । (भासस्य)
तोयं प्रसीदति मुनेरिव धर्मचिन्ता P. 98b
कामी दरिद्र इव शोषमुपैति पङ्कः ॥ ११ ॥

संतापिनी समदहंसकलाभिलापा 277
प्रालेयधामधवलाम्ब↑रमादधाना । ↑K. 21b
आपाण्डुपीवरपयोधरमुद्वहन्ती
काचिद्वधूर्विरहिणीव शरद्विभाति ॥ १२ ॥

शनैः शान्ताकूताः सितजलधरच्छेदपुलिनाः 278 P. 99a
पुरस्तादाकीर्णाः कलविरुतिभिः सारसकुलैः । (विशाखदत्तस्य)
चिताश्चित्राकारैर्निशि विकचनक्षत्रकुमुदैर्
नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः ॥ १३ ॥

आपीनप्रविसारितोरुविकटैः पश्चार्धभागैर्गुरुर् (279)
वेल्लत्पीवरकम्बलालसरसद्गम्भीरघण्टाकुलः ।

---

**274** — [a]) P सनय-. P नम्रलोलत्-. — [c]) P ईषाघर्मैस्तिमित-. — [d]) P किंचित्काले.
**276** — [d]) S2.3 कामं. P शेषमुपैति. ○ Śp. 3907 (भासस्य); Sbh. 1821 (भासस्य); Pad. p. 78.5 (भासस्य); Ssm. 886 (भासस्य); KHV. 268; JSV. 274.2; Kav. p. 102; ŚB. 3.169. **278** — [b]) K कलवरुतिभिः; P कलविरतिभिः. — [d]) P नभस्थः स्पष्टं ते. — [d]) N शरित. ○ Mud. 3.7.

ग्रामान्तेषु नवीनसस्यहरितेषूद्दामचन्द्रातप-
स्मेरासु क्षणदासु धेनुधवलीवर्गः परिक्रामति ॥ १४ ॥

(280) पृष्ठेषु शङ्खशकलच्छविषु च्छदानां
राजीभिरङ्कितमलक्तकलोहिताभिः ।
गोरोचनाहरितबभ्रु बहिःपलाशम्
आमोदते कुमुदमम्भसि पल्वलस्य ॥ १५ ॥

(281) S. 5.10.2 P. 100b सान्द्रस्थूलनलोपरोधविषमाः शक्यावताराः पुरस्
तोयोत्तीर्णनिवृत्तनक्रजठरक्षुण्णस्थलीवालुकाः ।
व्यक्तव्याघ्रपदाङ्कपङ्क्तिनिचितोन्मुद्रार्द्रपङ्कोदराः
संत्रासं जनयन्ति कुञ्जसरितः काचाभनीलोदकाः ॥ १६ ॥

(282) इक्षुत्वक्क्षोदसाराः शकटसरणयो धीरधूलीपताकाः
पाकस्वीकारनम्रे शिरसि निविशते शूकशालेः शुकाली ।
केदारेभ्यः प्रणालैः प्रविशति शफरीपङ्क्तिराधारमाराद्
अच्छः कच्छेषु पङ्कः सुखयति सरितामातपादुक्षपालम् ॥ १७ ॥

अभिनन्दस्य ॥

(283) सद्यःस्नातानुलिप्ता इव दधति रुचं पल्लवाः कर्दमाङ्काः
कच्छान्ताः काशतूलैः पवनवशगतैर्मेषयूथोपमेयाः ।
नद्यः प्रत्यग्रतीरोपनतिसरभसैः खञ्जनैः साञ्जनाक्षा
हंसाः कंसारिदेहत्विषि गगनतले शङ्खशोभां वहन्ति ॥ १८ ॥ ↑K. 22a

(284) S. 2.167.4 हंसानां निनदेषु यैः कवलितैरासज्यते कूजताम्
अन्यः कोऽपि कषायकण्ठलुठनादाघर्घरो निस्वनः ।
ते संप्रत्यकठोरवारणवधूदन्ताङ्कुरस्पर्धिनो
निर्याताः कमलाकरेषु बिसिनीकन्दाग्रिमग्रन्थयः ॥ १९ ॥

श्रीकमलायुधस्य ॥

---

**280** ○ Vām. ad 3.2.14. — b) °लोहिनीभिः; ŚB. 2.219, 3.28. **281** S order *cbad*. — a) P °घनोपरोध-. SP शंक्याव°. — b) P तोयात्तीर्णविवर्त-. S1 °वल्लिकाः. — c) K °पंक-(पंक्ति-). — d) KP काचात-. **284** — a) S निवहेषु. — d) S °कंदांकुर-. — e) S om. श्री°. ○ Dhv. ad 4.7; Amd. 672; ŚB. 3.169 (?); Vkj. 1.83, 2.22 (both, pratīkas).

वराहानाक्षेप्तुं कलमकवलप्रीत्यभिमुखान् 285 S. 2.168.2
इदानीं सीमानः प्रतिविहितमञ्चाः स्वपतिभिः ।
कपोतैः पोतार्थं कृतनिबिडनीडा विटपिनः
शिवाभिर्वल्मीकाः खरनखरखातोदरमृदः ॥ २० ॥

शतानन्दस्य ॥

लालाकल्पैस्त्रिदशकरिणां दिग्वधूहासभूतैर् 286
अध्वश्रान्तप्रवहणहरित्फेनशङ्कां दिशद्भिः ।
वातोदस्तैः शशधरकलाकोमलैरिन्द्रतूलैर्
लीलोत्तंसं रचयितुमलं कन्यकाः कौतुकिन्यः ॥ २१ ॥ ↑N 9a

शुभाङ्कस्य ॥

हारच्छायां वहति कुचयोरन्तराले मृणाली 287 P. 100b
कर्णोपान्ते नवकुवलयैरच्युतः कर्णिकार्थः ।
या सीमन्ते मणिभिररुणैः सा च्छविर्बन्धुजीवैर्
वेशः शोभां दिशति परमामार्तवः शालिगोप्याः ॥ २२ ॥

मधुशीलस्य ॥

दूरापायप्रकटविटपाः पर्यटत्खञ्जरीटा- 288 S. 2.169.4 P. 101a
क्रान्तप्रान्ताः प्रसभविलसद्राजहंसावतंसाः ।
अद्यानन्दं ददति विचरच्चक्रवाकोपचञ्चु-
ग्रासत्रासप्रचलशफरस्मेरनीरास्तटिन्यः ॥ २३ ॥

डिम्बोकस्य ॥

उन्मग्नचञ्चलवनानि वनापगानाम् (289)
आश्यानसैकततरङ्गपरंपराणि ।
निम्नावशिष्टसलिलानि मनो हरन्ति
रोधांसि हंसपदमुद्रितकर्दमानि ॥ २४ ॥

---

**285** — [a]) S1 °प्रत्यभि°. — [b]) S3 सीमानं प्रति. **286** — [c]) K पातोदेस्तैः. **287** — [b]) P °किशलयैर्. P कर्णिकारः।. — [d]) P शालिशोम्याः. **288** — [a]) S पूरापाय°. S2.3 खंजरीट°. S1 क्रान्तप्राप्ताः. — [c]) P अभ्यानंदं. S दधति. S1.3 P चक्रवाकोग्र°. — [e]) S डिंभोकस्य. **289** ○ ŚB. 3.168.

290 व्यालीविमर्दविगलज्जलकोटराणि
शाखाविलम्बिमृतशैवल↑कन्दलानि । ↑K. 22b
दूरीभवन्ति सरितां तटकाननानि
पूर्वप्रवाहमहिमानमुदाहरन्ति ॥ २५ ॥
शुभाङ्गस्य ॥

291 तृणराजपाकसौरभसुगन्धयः परिणताशवो दिवसाः ।
आद्यकुलोपनिमन्त्रणसुहितद्विजदुःसहोष्माणः ॥ २६ ॥
योगेश्वरस्य ॥

292 आढ्यान्निवापलम्भो निकेतगामी च पिच्छिलः पन्थाः ।
द्वयमाकुलयति चेतः स्कन्धावारद्विजातीनाम् ॥ २७ ॥
वागुरस्य ॥

॥ इति शरद्व्रज्या ॥ ११ ॥

## ॥ ततो हेमन्तव्रज्या ॥ १२ ॥

293
S. 2.171.1 यात्रालग्नं तुहिनमरुतां बान्धवः कुन्दलक्ष्म्याः
कालः सोऽयं कमलसरसां संपदः कालदूतः ।
निद्राव्याजाज्जडिमविधुरा यत्र गाढेऽपि मन्तौ
वामाः कण्ठग्रहमशिथिलं प्रेयसामाद्रियन्ते ॥ १ ॥

294 अग्रे श्यामलबिन्दुबद्धतिलकैर्मध्येऽपि पाकान्वय-
प्रौढीभूतपटोलपाटलतरैर्मूले मनाग्बभ्रुभिः ।
वृन्ते कर्कशकीरपिच्छहरिभिः स्थूलैः फलैर्बन्धुराः
संप्रत्युत्सुकयन्ति कस्य न मनः पूगद्रुमाणां छटाः ॥ २ ॥

295
P. 101a दलानां मूलेषु स्तिमितपतितं केसररजः
समीरो नेदानीं हरति हरितालद्युतिहरम् ।
कुमुद्वत्याः कोषे मधु शिशिरमिश्रं मधुलिहो
लिहन्ति प्रत्यूषे विरसविरसं मन्दरुचयः ॥ ३ ॥

---

**290** — [b]) K °विलंब-. — [e]) N सुभाङ्गस्य. **293** — [a]) S शिशिरमरुतां. — [b]) S कालभूतः. — [c]) S गाढे हिमर्तौ. — [d]) S2. 3 रामाः. **294** — [c]) K वृन्दे. **295** — [a]) P °स्तनितपतितं. — [b]) P °द्युतिरियं. — [d]) P विरलविरसं.

आवाति स्फुटितप्रियङ्गुसुरभिर्नीहारवारिच्छलात् 296 P. 101a
स्वच्छन्दं कमलाकरेषु विकिरन् प्रच्छन्नवह्निच्छटाः ।
प्रातः कुन्दसमृद्धिदर्शनरसप्रीतिप्रकर्षोल्लसन्-
मालाकारवधूकपोलपुलकस्थैर्यक्षमो मारुतः ॥ ४ ॥

गर्वायन्ते पलालं प्रति पथिकशतैः पामराः स्तूयमाना (297) S. 2.171.2
गोपान् गोगर्भिणीनां सुखयति बहलो रात्रिरोमन्थबाष्पः ।
प्रातः ↑ पृष्ठावगाढप्रथमरविरुचिर्ग्रामसीमोपशल्ये ↑K. 23a
शेते सिद्धार्थपुष्पच्छदनचितहिमक्लिन्नपक्ष्मा महोक्षः ॥ ५ ॥
योगेश्वरस्य ॥

कटुमधुराण्यामोदैः पर्णैरुत्कीर्णपत्रभङ्गानि । 298
दमनकवनानि संप्रति काण्डैरेकान्तपाण्डूनि ॥ ६ ॥

लघुनि तृणकुटीरे क्षेत्रकोणे यवानां 299 S. 2.173.1 (भवभूतेः)
नवकलमपलालस्रस्तरे सोपधाने ।
परिहरति सुषुप्तं हालिकद्वन्द्वमारात्
स्तनकलशमहोष्माबद्धरेखस्तुषारः ॥ ७ ॥

क्षेत्रोपान्तपलायमानशशकद्वन्द्वं परीक्ष्यापरान् 300 S. 2.173.5 P. 101a
आहूयातिरसेन कर्षकजनानाबद्धकोलाहलाः ।
हस्तारोपितदात्ररज्जुलगुडैर्वृद्धैरवृद्धैः सह
त्यक्त्वा शालिचिकर्तिषामित इतो धावन्त्यमी पामराः ॥ ८ ॥

कृत्वा पृष्ठतटे पटच्चरमथ ज्योतिःप्रतङ्काङ्कयोर् 301
ऊर्वोरन्तरयोर्निषेदुषि करौ कृत्वा कुकूलानले । N. 9b
पार्श्वौ कम्पजडौ पिधाय कफणिद्वन्द्वेन रोमाञ्चिता
प्रातर्नो न च सायमद्य जरती गेहोदरं मुञ्चति ॥ ९ ॥
वैद्यस्य ॥

---

**296** — [b]) P प्रच्छन्नं (स्वच्छन्दं). — [d]) K °फलक-; P °फलके (°पुलक-). **297** — [c]) S1 °रविरुचिं. — [d]) S °च्छदनिचित-. **299** — [d]) K तुखारः. ○ Smk. 63.15 (कमलायुधस्य); Śp. 3922 (कमलायुधस्य); Sbh. 1840 (कमलायुधस्य); SG. 80b; ŚB 3.55, 4.862. **300** — [a]) SP निरीक्ष्या-. — [b]) P आक्राघाति-. K °जना; P °जला (°जनान्). — [c]) S3 हस्तावापित. **301** — [a]) Both NK °पतंका-. — [b]) K कुकूलानने. — [c]) K कंपजपौ. — [e]) K वैण्यस्य?.

(302) धूमप्रायः प्रतिमुहुरतिक्षोभनोद्भ्रान्ततेजाः
कारीषाग्निः सततमृतुना सेव्यतां नीयमानः ।
बाहुक्षेपात्स्तनपरिसराद्स्तलीलांशुकाभिर्
घोषस्त्रीभिर्दिवसविरतौ भाति निर्विश्यमानः ॥ १० ॥

303 S. 2.176.1 P. 102a आभोगिनः किमपि संप्रति वासरान्ते
संपन्नशालिखलपल्लवितोपशल्याः ।
ग्रामास्तुषारभरबन्धुरगोमयाग्नि-
धूमावलीवलयमेखलिनो हरन्ति ॥ ११ ॥
अभिनन्दस्य ॥

304 मूले हरिन्ति किंचित्पार्श्वे पीतानि लोहितान्यग्रे ।
मधुरसुरभीणि संप्रत्यगाढपाकानि ↑ बदराणि ॥ १२ ॥ ↑K. 23b
तस्यैव ॥

305 S. 2.173.3 P. 102a भद्रं ते सदृशं यदध्वगशतैः कीर्तिस्तवोद्गीयते
स्थाने रूपमनुत्तमं सुकृतिनो दानेन कर्णो जितः ।
इत्यालोक्य चिरं दृशा कृपणया दूरागतेन स्तुतः
पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः ॥ १३ ॥
योगेश्वरस्य ॥

॥ इति हेमन्तव्रज्या ॥ १२ ॥

## ॥ ततः शिशिरव्रज्या ॥ १३ ॥

306 कुन्दस्यापि न पूजनव्यतिकरे नाप्यात्मनो मण्डने
व्यापारेऽपि तथा प्रहेणकविधेर्नार्घन्ति बद्धादराः ।
नार्यः कुन्दचतुर्थिकामहसमारम्भाभिषेके यथा
हूतानङ्गमुलूलुकाकलरवैः प्रीणन्ति यूनां मनः ॥ १ ॥

---

**303** — [a]) S1.2 कां प्रति; P यं प्रति. P वत्सरांते· — [b]) SP शालिफल·. — [c]) P ग्रामस्तु सारतरमंथर·. — [d]) P बलयिनः खलिनो विभांति· ○ ŚB. 3.178. **305** — [b]) S1.2 सुकृतिना ·. — [c]) P इत्यालोच्य चिरं तृषा· ○ Smk. 96.2; Skb. 3.8; ŚB 2.299; SG. 59b; Śp. 581. **306** — [d]) K °मुरूरुका·.

दुर्लक्ष्या स्याद्दमनकवने धूमधूम्रे पतन्ती 307 P. 102a
कारीषाग्नेः पटमयगृहा वामलीलां तनोति ।
प्रादुर्भावं तिरयति रवेरध्वगानामिदानीं
सर्वाङ्गीणं दिशति पलितं लोमलग्ना हिमानी ॥ २ ॥

पूषा प्रातर्गगनपथिकः प्रस्थितः पूर्वशैलात् 308 P. 102b
सूचीभेद्यप्रबलमहिकाजालकन्थावृताङ्गः ।
रात्रिं सर्वां हुतवहपरिष्वङ्गभाजोऽपि मन्ये
जाड्याबद्धांस्त्वरयितुमयं द्राङ् न शक्नोति पादान् ॥ ३ ॥

पान्थस्यारात्क्षणमिव गतेर्मन्दिमानं दिशन्ति 309
प्रत्यूषेषु प्रतनुसलिलोद्गीर्णबाष्पप्रवाहाः ।
वारां पूर्णा इव सचकिता वारपारीणदृष्टेर्
दूरोत्ताना अपि शिखरिणां निर्झरद्रोणिमार्गाः ॥ ४ ॥

दूरप्रोषितकैरवाकरपरीहासाः स्वकान्ताश्मसु (310)
प्रालेयस्नपितेषु मुक्तसलिलोत्पादस्पृहाकेलयः ।
क्षीयन्ते सुरतान्तरेऽपि न दृशां पात्रीकृतां कामिभिः
सौभाग्यापगमादिवेन्दुमहसां लावण्यशून्याः↑ श्रियः ॥ ५ ॥ ↑K. 24a

हंसैर्जर्जररूक्षपक्षमलिनैर्नक्तं दिवान्तर्बहिस् 311
तिष्ठद्भिः परिवार्य बन्धुभिरिव स्निग्धैः कृतावेक्षणम् ।
प्रत्यासीदति वल्लभे जलरुहां क्षामायमाणद्युतौ
बाष्पानुज्झति वारि वारिरुहिणीनाशादिवोपार्जितान् ॥ ६ ॥

धन्यानां नवपूगपूरितमुखश्यामाङ्गनालिङ्गन- 312 S. 2.175.1 P. 102b
प्राप्तानेकसुखप्रमोदवपुषां रम्यस्तुषारागमः ।
अस्माकं तु विदीर्णदण्डितपटीप्रच्छादितोद्घाटित-
क्रोडस्वीकृतजानुवेपथुमतां चेतः परं सीदति ॥ ७ ॥

---

**307** — [a]) P स्याद्गमनकवले धूमधूमे. — [b]) P °गृहावासलीलां. **308** — [a]) P प्रातर्गमन-. — [b]) K जालकण्ठा-; P जालकर्णा-. **309** — [a]) K मंदिमान्यन्. — [c]) K °चकिताऽवार-. **311** — [d]) N °रुहणी-. **312** — [a]) S3 वरपूग-. — [b]) P काम्यस् (रम्यस्). S तुषारोद्गमः. — [c]) S °खंडितपट-. ○ Bh. 540.

313 S. 2.175.4 (शतानन्दस्य)

कम्पन्ते कपयो भृशं जडकृशं गोऽजाविकं ग्लायति
श्वा चुल्लीकुहरोदरं क्षणमपि क्षिप्तोऽपि नैवोज्झति ।
शीतार्तिव्यसनातुरः पुनरयं दीनो जनः कूर्मवत्
स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकाङ्क्षति ॥ ८ ॥
लक्ष्मीधरस्य ॥

(314) S. 2.173.2 (योगेश्वरस्य) P. 102b (योगेश्वरस्य)

इदानीमर्घन्ति प्रथमकलमच्छेदमुदिता
नवाग्रान्नस्थालीपरिमलमुचो हालिकगृहाः ।
उदञ्चद्दोर्वल्लीरणितवलयाभिर्युवतिभिर्
गृहीतप्रोत्क्षिप्तभ्रमितमसृणोद्गीर्णमुशलाः ॥ ९ ॥

(315) S. 2.175.5

पाकक्षामतिलाः समुत्सुकयितुं शक्ताः कपोतान् भुवः
श्यामत्वं फलपीड्यमानकुसुमानापद्यते सर्षपान् ।
वायुर्व्यस्तशणस्तुषारकणवानभ्येति कम्पप्रदः
पान्थैः शुष्कविवादबद्धकलहैः पुण्याग्निरासेव्यते ॥ १० ॥
योगेश्वरस्य ॥

316 S. 2.177.2

सिद्धार्थाः फलसूचिबन्ध↑गुरुभिर्लोलन्त्यमी पल्लवैर् ↑N. 10a
उच्छिन्दन्त्यध एव बन्धुरतया कोलीफलान्यर्भकाः ।
पाकप्रश्लथपत्रकोषदलनव्यक्ताङ्कुरग्रन्थयो
निष्ठीवन्त्यपि हस्तयन्त्रकलिताः पुण्ड्रेक्षुयष्ट्यो↑ रसम् ॥ ११ ॥ ↑K. 24b
वाचस्पतेः ॥

(317) S. 2.175.2 (भासस्य) P. 103b (anon)

व्यथितवनितावक्त्रौपम्यं बिभर्ति निशापतिर्
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवेः ।
अभिनववधूरोषस्वादुः करीषतनूनपाद्
असरलजनाश्लेषक्रूरस्तुषारसमीरणः ॥ १२ ॥
अभिनन्दस्य ॥

---

**313** ○ Smk. 63.17 (लक्ष्मीधरस्य); JSV. 276.3; Skb. 3.10; ŚB. 2.300, 3.172; Śp. 3921 (लक्ष्मीधरस्य). **314** — [b]) S नवीनांधस्थाली°; P नवीनान्नस्थाली°. P °युचो (मुचो). — [c]) S1 दोर्लीलावलित°; S2.3 °दोर्लीलारणित°. — [d]) P °णोत्कीर्ण°. S °मुसलाः; P °मुषलाः. **315** — [b]) K °प्रणस्. — [c]) K योगेश्वरी (! for °रस्यैतौ). **317** — [a]) S विरहिवनिता°; P पथिकवनिता°. — [c]) P °बोधस्वादुः. — [d]) P °जलाश्लेष°. ○ Kav. p. 104; Auc. ad 15 (माल्वरुद्रस्य); KHA. 291; Skb. 1.183; ŚB. 2.236, 2.391, 3.172; Smk. 63.5 (all *cdba*).

वारं वारं तुषारानिलतुलितपलालोष्मणां पामराणां 318
दण्डव्याघट्टनाभिः क्रमपिहितरुचौ बोध्यमाने कृशानौ ।
उद्धूमैर्बीजकोषोच्चटनपटुरवैः सर्षपक्षोदकूटैः
कोणे कोणे खलानां परिसरसकटुः कीर्यते कोऽपि गन्धः ॥ १३ ॥
योगेश्वरस्य ॥

नष्टप्रायाः प्रलयमहिकाजुष्टजीर्णैः प्रतानैर् 319
बीजान्येवोन्मदपरभृतालोचनापाटलानि ।
उत्पाकत्वाद्विघटितशमीकोषसंदर्शितानि
व्याकुर्वन्ति स्फुटसहचरीवीरुधः कृष्णलानाम् ॥ १४ ॥
सावर्णेः

शुकस्निग्धैः पत्रैर्युवतिकरदीर्घैः किशलयैः 320
फलिन्यो राजन्ते हिमसमयसंवर्धितरुचः ।
मनोज्ञा मञ्जर्यो हरितकपिशैः पांसुमुकुलैः
स्फुटन्ति प्रत्यङ्गं पटुपरिमलाहूतमधुपाः ॥ १५ ॥
शतानन्दस्य ॥

माषीणं मुषितं यवेषु यवसश्यामा छविः शीर्यते 321 S. 2.177.1 P. 101b
ग्रामान्ताश्च मसूरधूसरभुवः स्मेरं यमानीवनम् ।
पुष्पाढ्याः शतपुष्पिकाः फलभृतः सिध्यन्ति सिद्धार्थकाः
स्निग्धा वास्तुकवास्तवः स्तबकितस्तम्बा च कुस्तुम्बिनी ॥ १६ ॥
शुभाङ्कस्य ॥

पुरः पाण्डुप्रायं तदनु कपिलिम्ना कृतपदं 322
ततः पाकोत्सेकादरुणगुणसंसर्गितवपुः ।
शनैः शोषारम्भे स्थपुटनिजविष्कम्भविषमं
वने वीतामोदं बदरमरसत्वं कलयति ॥ १७ ॥

॥ इति शिशिरव्रज्या ॥ १३ ॥

---

**318** — [d]) कोऽपि ॰गंधः doubtful in N. **319** — [a]) K प्रचल॰ (प्रलय॰). **320** — [c]) N ॰कपिषैः. **321** — [a]) S ॰श्यामच्छविः; P श्यामारविः. — [b]) S मधूक॰ (मसूर॰). P ॰धूषर इव. KS यवानी॰. — [d]) P जाता (स्निग्धा). SP कुस्तुंब (S1 बु) री. — [e]) S2. 3 शुभांकस्य. **322** — [b]) K पाकोच्छेकाद्. — [c]) K ॰विष्कंभि॰. — [d]) K नीतामोदं. ○ Kav. p. 66; Vām. ad 3.2.2.

## ॥ ततो मदनव्रज्या ॥ १४ ॥

323 S. 1.94.3 (नीलपट्टस्य) P. 84a (वाचस्पतेः)
अयं स भुवनत्रयप्रथितसंयमः शंकरो
विभर्ति व↑पुषाधुना विरहकातरः कामिनीम् । ↑K. 25a
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयन् जयति जातहासः स्मरः ॥ १ ॥
**नीलपटहस्य ॥**

324 P. 86b
भ्रूशार्ङ्गाकृष्टमुक्ताः कुवलयमधुपस्तोमलक्ष्मीमुषो ये
क्षेपीयाः कृष्णसारा नरहृदयभिदस्तारकक्रूरशल्याः ।
ते दीर्घापाङ्गपुङ्खाः स्मितविषविषमाः पक्ष्मलाः स्त्रीकटाक्षाः
पायासुर्वोऽतिवीर्यास्त्रिभुवनजयिनः पञ्चबाणस्य बाणाः ॥ २ ॥

325 S. 1.93.4 (कस्यचित्) P. 86b (anon.)
मनसि कुसुमबाणैरेककालं त्रिलोकीं
कुसुमधनुरनङ्गस्ताडयत्यस्पृशद्भिः ।
इति विततविचित्राश्चर्यसंकल्पशिल्पो
जयति मनसिजन्मा जन्मिभिर्मानिताङ्गः ॥ ३ ॥

326 T. 135
शत्रुः कारणमात्मनोऽपि भगवान् वामाङ्गनित्याङ्गनः
स्वर्लोकस्य सुधैकपानचषको मित्रं च तारापतिः ।
चुम्बन्तो जगतां मनः सुमनसो मर्मस्पृशः सायका
दा↑राः प्रीतिरती इति क्व महिमा कामस्य नालौकिकः ॥ ४ ॥ ↑T. 31a
**मनोवि↑नोदस्याम् ॥** ↑N. 10b

---

**323** — [a]) S3 °संयमी° — [d]) S3 परिलालयन्. — [e]) K नीलपटस्य; S नीलपट्टस्य. ○ Sbh. 1038; Kav. p. 87; Kvv. p. 12; Smv. 24.23; Prab. 96 (धनपाल); KHV. 124; KHA. 435; Pps. 367; ŚB. 2.376, 3.37, 3.96, 3.317, 3.225. **324** — [a]) P °लक्ष्मीमुखो° — [c]) P °विषविमलाः. ○ Sbh. 1039. **325** — [a]) P °रैभिरेकास्त्रिलोकीं° — [c]) S1.2 °शिल्पी° — [d]) SP मानितांगः. **326** — [b]) K चकषो° — [e]) °स्याम् under thumbtack in N photograph?. T मनोविदस्याम्.

कुलगुरुरबलानां केलिदीक्षाप्रदाने 327 T. 136 S. 1.94.4 P. 83b
परमसुहृदनङ्गो रोहिणीवल्लभस्य ।
अपि कुसुमपृषत्कैर्देवदेवस्य जेता
जयति सुरतलीलानाटिकासूत्रधारः ॥ ५ ॥
राजशेखरस्य ॥

वन्दे देवमनङ्गमेव रमणीनेत्रोत्पलच्छद्मना 328 T. 137 S. 1.94.1 P. 84b
पाशेनायतशालिना सुनिबिडं संयम्य लोकत्रयम् ।
येनासावपि भस्मलाञ्छिततनुर्देवः कपाली बलात्
प्रेमक्रुद्धनगात्मजाङ्घ्रिविनतिक्रीडाव्रते दीक्षितः ॥ ६ ॥
ललितोकस्य ॥

स जयति संकल्पभवो रतिमुखशतपत्रचुम्बनभ्रमरः । (329) T. 138
यस्यानुरक्तललनानयनान्तविलोकितं वसतिः ॥ ७ ॥
दामोद↑रगुप्तस्य ॥ ↑K. 25b

अहो धनुषि नैपुण्यं मन्मथस्य महात्मनः । 330 T. 139
शरीरमक्षतं कृत्वा भिनत्त्यन्तर्गतं मनः ॥ ८ ॥

धनुर्माला मौर्वी क्वणदलिकुलं लक्ष्यमबला 331 T. 140 S. 1.94.5 P. 86b
मनो भेद्यं शब्दप्रभृतय इमे पञ्च विशिखाः ।
इयाञ्जेतुं यस्य त्रिभुवनमदेहस्य विभवः
स वः कामः कामान्दिशतु दयितापाङ्गवसतिः ॥ ९ ॥

जयति स मदखेलोच्छृङ्खलप्रेमरामा- 332 (T. 140) S. 1.93.3 P. 83b
ललितसुरतलीलादैवतं पुष्पचापः ।

---

**327** — [a]) T °गुरुरमराणां — [d]) P °लीलानांदिकः ○ Vid. 1.1; Śp. 3077; Smk. 1.25 (राजशेखरस्य); Srb. p. 250.16; Sab. 1.12. **328** — [b]) $T_2$ SP °नायति P °शासिना — [c]) S भस्मनांजित- P °वपुर्देवस्त्रिशूली — [d]) P क्रीडारते दीक्षितेः ॥. **329** — [c]) K दामोदरः ○ Kuṭ. 1. **331** T passes from *c* of this to *c* of next by homoteleuton. — [a]) $S_1$ P लक्ष° — [b]) $S_3$ पद्म- (शब्द-). ○ Sbh. 82 (घण्टकस्य); Kav. p. 87; KHV. 125; Sb. 10*a*; SG. 39*b*. **332** T *cd* only. — [a]) P स जयति S मदलेखो° $S_{1.3}$ °प्रेमवामा- — [c]) K °संघैः; $S_3$ P °सिद्धौ.

त्रिभुवनजयसिद्ध्यै यस्य शृङ्गारमूर्तेर्
उपकरणमपूर्वं माल्यमिन्दुर्मधूनि ॥ १० ॥

उत्पलराजस्य ॥

333 T. 141 S. 1.93.5 P. 87a
याच्यो न कश्चन गुरुः प्रतिमा च कान्ता
पूजा विलोकनविगूहनचुम्बनानि ।
आत्मा निवेद्यमितरव्रतसारजेत्रीं
वन्दामहे मकरकेतनदेवदीक्षाम् ॥ ११ ॥

वल्लणस्य ॥

॥ इति मदनव्रज्या ॥ १४ ॥

## ॥ ततो वयःसन्धिव्रज्या ॥ १५ ॥

334 T. 142 S. 2.2.2 (राजोकस्य) P. 103b
भ्रुवोः काचिल्लीला परिणतिरपूर्वा नयनयोः
स्तनाभोगोऽव्यक्तस्तरुणिमसमारम्भसमये ।
इदानीं बालायाः किममृतमयः किं मधुमयः
किमानन्दः साक्षाद् ध्वनति मधुरः पञ्चमलयः ॥ १ ॥

वीर्यमित्रस्य ॥

335 T. 143 P. 104a
उन्नालालकभञ्जनानि कबरीपाशेषु शिक्षारसो
दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः ।
तिर्यग्लोचनचेष्टितानि वचसि च्छेकोक्तिसंक्रान्तयः
स्त्रीणां ग्लायति शैशवे प्रतिकलं कोऽप्येष केलिक्रमः ॥ २ ॥

336 T. 144 P. 104a
विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगे ।

---

**333** — [a]) K पाच्यो (याच्यो). P प्रतिनैव. — [b]) P सेवा- (पूजा-). S °निगूहन-. — [d]) T2 °जैत्री. **334** — [c]) P किं विषमयः. — [d]) TK पंचमकलः; P पंचमरवः. For *cd*, S इदानीमेतस्याः कुवलयदृशः प्रत्यहमयं नितम्बस्याभोगो नयति मणिकाञ्चीमधिकताम् as in 360[cd] ॥. ○ Śp. 3274; Smk. 51.7. **335** cf. *cd.* with 348 *cd.* — [a]) T2 उत्तालालक°. P तन्वालालक°. — [b]) K °योग्यो ग्रहः; P °हास्यग्रहः. — [c]) P वचसां छेषोक्ति-. — [d]) P तस्या (स्त्रीणां). T1 lac. T2 म्लायति. ○ Vid. 2.5; Bāl. 3.23; Srb. p. 256.55. **336** — [a]) P विदत्ते. — [c]) P यदा धत्ते दृग्भ्यामखिलगुरु°. — [e]) K om. एतौ. ○ Vid. after 1.41; 2.13, 3.21, 4.8 (complete).

यदादत्ते दृश्यादखिलमपि भावव्यतिकरं
मनोवृत्तिं द्रष्टुः प्रथयति च दृश्यं प्रतिजनम् ॥ ३ ॥ ↑K. 26a

**एतौ राजशेखरस्य ॥**

एतद्दधाति नवयौवननर्तकस्य 337 T. 145 P. 104a
कश्मीरजच्छुरिततालकयुग्मलक्ष्मीम् ।
मध्ये समुच्छ्वसितवृत्ति मनागुपान्ते
लब्धात्मसीम कुचकुड्मलयुग्ममस्याः ॥ ४ ॥

यौवननगरारम्भे रामाहृदयस्थलीषु कुसुमेषोः । 338 T. 146 P. 104b
मकरपताकेवेयं राजति रोमावली रम्या ↑ ॥ ५ ॥ ↑T. 31b

**एतौ लडहचन्द्रस्य ॥**

चलितशिशुदशानां यौवनारम्भरेखा- 339 P. 104b (गणेश्वरस्य)
परिचयपरिचुम्बत्प्रेमकौतूहलानाम् ।
उचितसहजलज्जादुर्बला बालिकानां
गुरुजनभयभाजां केऽपि ते भ्रूविलासाः ॥ ६ ॥

**गुणेश्वरस्य ॥** ↑ ↑N. 11a

नैतत्समुन्नमितचूचुकमुद्रमन्तः- (340)
संक्रान्तसीमकुचकोरकचक्रमस्याः ।
सङ्केतिताङ्कनवयौवननाटकस्य
कश्मीरजच्छुरितनूतनकांस्यतालम् ॥ ७ ॥

नितम्बः संवादं मसृणमणिवेद्या मृगयते (341)
मनाग्गण्डः पाण्डुर्मधुमुकुललक्ष्मीं तुलयति ।
विशन्त्यास्तारुण्यं घुसृणघनलावण्यपयसि
प्रकामं प्रोन्मज्जद्वपुरपि च तस्या विजयते ॥ ८ ॥

---

**337** — [b]) P °तारकयुग्मशोभां ।. — [d]) P लब्धांभ्यनील-. **338** — [c]) T1 अकर- P मकरध्वजपताकेवेयं. — [e]) T lac.; K om. एतौ. **339** — [a]) P °रंभलेखा-. — [d]) P तें[ऽ]गे विलासाः ॥ **341** — [a]) K मृगतते.

(342) उद्भिन्नस्तनकुड्मलद्वयमुरः किंचित्कपोलस्थलीं
लिम्पत्येव मधूककान्तिरधरः संमुग्धलक्ष्मीमयः ।
प्रत्यासीदति यौवने मृगदृशः किं चान्यदाविर्भवल्-
लावण्यामृतपङ्कलेपलडहच्छायं वपुर्वर्तते ॥ ९ ॥

(343) गेहाद्बहिर्विरम चापलमस्तु दूरं
अद्यापि शैशवदशालडितानि तानि ।
आप्यायमानजघनस्थलपीड्यमानं
अर्धोरुकं त्रुटति पुत्रि तव क्षणेन ॥ १० ॥

344 प्रेमासङ्गि च भङ्गि च प्रतिवचोऽप्युक्तं च गुप्तं तथा
यत्नाद्याचितमाननं प्रति समाधाने च हाने च धीः ।
इत्यन्यो मधुरः स कोऽपि शिशुतातारुण्ययोरन्तरे ↑ K. 26b
वर्तिष्णोर्मृगचक्षुषो विजयते द्वैविध्यमुग्धो रसः ॥ ११ ॥
लक्ष्मीधरस्य ॥

(345) नितम्बः स्वां लक्ष्मीमभिलषति नाद्यापि लभते
समन्तात्साभोगं न च कुचविभागाञ्चितमुरः ।
दृशोर्लीलामुद्रा स्फुरति च न चापि स्थितिमती
तदस्यास्तारुण्यं प्रथममवतीर्णं विजयते ॥ १२ ॥

346 शारिद्यूतकथाकुतूहलि मनश्छेकोक्तिशिक्षारतिर्
नित्यं दर्पणपाणिता सहचरीवर्गेण चाचार्यकम् ।
प्रौढस्त्रीचरितानुवृत्तिषु रसो बाल्येन लज्जा मनाक्
स्तोकारोहिणि यौवने मृगदृशः कोऽप्येष केलिक्रमः ॥ १३ ॥

347 दृष्टिः शैशवमण्डना प्रतिकलं प्रागल्भ्यमभ्यस्यते
पूर्वाकारमुरस्तथापि कुचयोः शोभां नवामीहते ।
नो धत्ते गुरुतां तदप्युपचिताभोगा नितम्बस्थली
तन्व्याः स्वीकृतमन्मथं विजयते नेत्रैकपेयं वपुः ॥ १४ ॥

---

**344** — [b]) K यत्नायाचित.. — [c]) K सकोप-. ○ Smk. 51.9. **346** ○ Smk. 52.5 (राजशेखरस्य). **347** ○ Smk. 51.6. Kvv. p. 62; KHA. 709.

आकण्ठार्पितकञ्चुकाञ्चलमुरो हस्ताङ्गुलीमुद्रणा- 348 P. 104*b*
मात्रासूत्रितहास्यमास्यमलसाः पञ्चालिकाकेलयः ।
तिर्यग्लोचनचेष्टितानि वचसां च्छेकोक्तिसंक्रान्तयस्
तस्याः सीदति शैशवे प्रतिकलं कोऽप्येष केलिक्रमः ॥ १५ ॥

दोर्मूलावधिसूत्रितस्तनमुरः स्निह्यत्कटाक्षे दृशाव् (349) P. 104*b*
ईषत्ताण्डवपण्डिते स्मितसुधाच्छेकोक्तिषु भ्रूलते ।
चेतः कन्दलितस्मरव्यतिकरं लावण्यमङ्गैर्वृतं
तन्वङ्ग्यास्तरुणिम्नि सर्पति शनैरन्यैव काचिद्गतिः ॥ १६ ॥

वारं वारमनेकधा सखि मया चूतद्रुमाणां वने 350 S. 2.5.1 P. 104*b* (anon)
पीतः कर्णदरीप्रणालवलितः पुंस्कोकिलानां ध्वनिः ।
तस्मिन्नद्य पुनः श्रुतिप्रणयिनि प्रत्यङ्गमुत्कम्पि↑तं ↑ K. 27*a*
तापश्चेतसि नेत्रयोस्तरलिमा कस्मादकस्मान्मम ॥ १७ ॥
भोज्यदेवस्य ॥

दरोत्तानं चक्षुः कलितविरलापाङ्गवलनं (351) S. 2.2.3
भविष्यद्विस्तारिस्तनमुकुलगर्भालसमुरः ।
नितम्बे संक्रान्ताः कतिपयकला गौरवजुषो
वपुर्मुञ्चद्बाल्यं किमपि कमनीयं मृगदृशः ॥ १८ ॥

गणितगरिमा श्रोणिर्मध्यं निबद्धवलित्रयं 352
हृदयमुदयल्लज्जं सज्जच्चिरन्तनचापलम् ।
मुकुलितकुचं वक्षश्चक्षुर्मनाग्वृतवक्रिम
क्रमपरिगलद्बाल्यं तन्व्या वपुस्तनुते श्रियम् ॥ १९ ॥

---

**348** cf. 335*cd*. — *b*) P °मुद्रितहास्यलास्यमनसाः. N पंचालिको-. P om. *cd*. ○ Smk. 51.5. **349** — *a*) P तिर्यक् (स्निह्यत्). — *b*) P छेकोक्तिमुक्तं न ते. — *d*) P °स्तरुलम्नि. ○ KHA. 693; Vkj. 1.96. — *d*) काचिद्लिपिः ॥. **350** — *a*) P वारमुदंचितः. N द्रुमानां. — *b*) P °त्रलितः. — *c*) K श्रुतं; P प्रति-(श्रुति-). — *d*) S °स्तरलता. — *e*) K श्रीभोजदेवस्य; S3 om. **351** — *a*) S चलनं. — *b*) S °विस्तार-. ○ Smk. 51.10. **352** — *b*) K मज्जच् (सज्जच्).

353 P. 105a बालोऽद्यापि किलेति लक्षितमलंकर्तुं निजैर्भूषणै
रामाभिश्चिरमुद्यते हृदि लिहन्निच्छामनिच्छां वहन् ।
स्निह्यत्तारमथान्यदृष्टिविरहे यः संमुखं वीक्षितो
नम्रः स्मेरमुखीभवन्निति वयःसन्धिश्रियालिङ्गितः ॥ २० ॥

वल्लणस्य ॥

(354) P. 105a माध्यस्थ्यं च समस्तवस्तुषु परिप्रश्ने शिरोघूर्णनं
प्रेयस्यां परमर्पितान्तरबहिर्वृत्तिप्रपञ्चक्रमः ।
किं चापि स्फुटदृष्टिविभ्रमकलानिर्माणशिक्षारसः
प्रत्यङ्गं स्मरकेलिमुद्रितमहो बाला वयोविभ्रमे ॥ २१ ॥

355 S. 2.2.4 (राजशेखरस्य) P. 105a पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्यां N. lm. 10b
श्रोणीबिम्बं त्यजति तनुतां सेवते मध्यभागः ।
धत्ते वक्षः कुचसचिवतामद्वितीयत्वमास्यं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ २२ ॥

356 P. 105b बाल्यं यदस्यास्त्रिवलीतटिन्यास्तटे विनष्टं सह चापलेन ।
तदर्थमुत्थापितचारुचैत्यकल्पौ स्तनौ पाण्डुतरौ तरुण्याः ॥ २३ ॥

357 तदात्वप्रोन्मीलन्म्रदिमरमणीयात्कठिनतां
निचित्य प्रत्यङ्गादिव तरुणभावेन घटितौ ।
स्तनौ संबिभ्राणाः क्षणविनयवैजात्यमसृण-
स्मरोन्मेषाः केषामुपरि न रसानां युवतयः ॥ २४ ॥ ↑ K. 27b

मुरारेः ॥

358 भ्रूलीला चतुरा त्रिभागवलिता दृष्टिर्गतिर्मन्थरा
विस्रब्धं हसितं कपोलफलके वैदग्ध्यवक्रं वचः ।
नोद्दिष्टं गुरुणा न बन्धुकथितं दृष्टं न शास्त्रे क्वचिद्
बालायाः स्वयमेव मन्मथकलापाण्डित्यमुन्मीलति ॥ २५ ॥

---

**353** — [a]) P बालाद्यापि· P लक्षितु°· — [c]) P तारकमन्य°· K वीक्ष्यतो· — [d]) P °भवत्विति· **354** — [a]) P मध्यस्थां· — [d]) K प्रत्यंग-· **355** — [c]) $S_3$ °द्वितीयं च वक्त्रं· ○ Smk. 52.4 (राजशेखरस्य); Śp. 3282; SK. 5.312. **356** — [c]) P °चारुवैद्य-· — [d]) K तरुण्यः ॥. **357** ○ Anr. 3.7. — [c]) वैयात्य-; Sab. 17a = 2.19 (मोरारेः)· **358** — [c]) K नो दिष्टं·

लावण्यामृतसिन्धुसान्द्रलहरीसंसिक्तमस्या वपुर् 359 S. 2.1.5 (भिक्षोः)
जातस्तत्र नवीनयौवनकलालीलालतामण्डपः ↑ । ↑ N. 11b
तत्रायं स्पृहणीयशीतलतरच्छायासु सुप्तोत्थितः
संमुग्धो मधुबान्धवः स भगवानद्यापि निद्रालसः ॥ २६ ॥
**वीर्यमित्रस्य ॥**

भ्रुवोर्लीलैवान्या दरहसितमभ्यस्यति मुखं (360) S. 2.2.2 (राजोकस्य) P. 107a (anon)
दृशोर्वक्रः पन्थास्तरुणिमसमारम्भसचिवः ।
इदानीमेतस्याः कुवलयदृशः प्रत्यहमयं
नितम्बस्याभोगो नयति मणिकाञ्चीमधिकताम् ॥ २७ ॥
**राज्यपालस्य ॥**

मध्यं बद्धवलित्रयं विजयते निःसन्धिबन्धोन्नमद्- (361) S. 2.3.5 (कस्यचित्) P. 107a
विस्तारिस्तनभारमन्थरमुरो मुग्धाः कपोलश्रियः ।
किञ्चिन्मुग्धविलोलनीरजदृशस्तारुण्यपुण्यातिथेस्
तस्याः कुङ्कमपङ्कलेपनडहच्छायं वपुर्वर्तते ॥ २८ ॥
**वज्रमुष्टेः ॥**

समस्तं विज्ञाय स्मरनरपतेश्चारुचरितं 362
चरश्चक्षुः कर्णे कथयितुमगात्सत्वरमिव ।
प्रयाणं बाल्यस्य प्रतिपदमभूद्विग्रहभरः
परिस्पन्दो वाचामपि च कुचयोः सन्धिरभवत् ॥ २९ ॥

उत्खेलत्त्रिवलीतरङ्गतरला रोमावलीशैवल- 363
स्रग्वल्लिर्युवती ध्रुवं जनमनोनिर्वाणवाराणसी ।
एतस्या यदुरस्तटीपरिसरे यद्बाल्यचापल्ययोः
स्थाने यौवनशिल्पिकल्पितचिताचैत्यद्वयं दृश्यते ↑ ॥३०॥ ↑ K. 28a
**भवस्य ॥**

---

**359** — [a]) S °सांद्रसिंधु-. — [c]) S °शीतलतरुच्छायाप्रसुप्तो-. ○ Sp. 3284. **360** S has *ab* of 334, *cd* of this stanza. — [d]) P °स्याभोगे. **361** — [b]) P °स्तनपूरंदर°. — [c]) S1.2 किं च स्निग्ध-. S3 किं चामुग्ध-. S °विनिद्र°. P °विलीन°. P पुण्यातिथौस्. — [d]) S अस्याः. P चन्दनकुंकुम- (कुंकुम-). S °लडह°.

364 P. 107b
स्तनोद्भेदः किंचित्त्यजति तनुतायाः परिचयं
तथा मध्यो भागस्त्रिवलिवल्येभ्यः स्पृहयति ।
नितम्बे च स्वैरं विलसति विलासव्यसनिता
मृगाक्ष्याः प्रत्यङ्गं कृतपदमिवानङ्गलडितम् ॥ ३१ ॥

(365) S. 2.2.1 (विधूकस्य) P. 107b
यत्प्रत्यङ्गं तटमनुसरन्त्यूर्मयो विभ्रमाणां
क्षोभं धत्ते यदपि वहलः स्निग्धलावण्यपङ्कः ।
उन्मग्नं यत्स्फुरति च मनाक्कुम्भयोर्द्वन्द्वमेतत्
तन्मन्येऽस्याः स्मरगजयुवा गाहते हृत्तडागम् ॥ ३२ ॥

(366)
कृतनिभशतं निष्क्रामन्तीं सखी[भि]रनूद्धृतां
कथमपि हठादाकृष्यान्ते पटस्य निवेशिताम् ।
नवनिधुवनक्रीडारम्भप्रकम्पविवर्तिनीम्
अनुभवसृदूभूतत्रासां मनः स्मरति प्रियाम् ॥ ३३ ॥

(367)
स्मितं किंचिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतीनामारम्भः किसलयितलीलापरिमलः
स्पृशन्त्यास्तारुण्यं किमिव न मनोज्ञं मृगदृशः ॥ ३४ ॥

368 P. 107b
अस्ति भयमस्ति कौतुकमस्ति च मन्दाक्षमस्ति चोत्कण्ठा ।
बालानां प्रणयिजने भावः कोऽप्येष नैकरसः ॥ ३५ ॥

369 P. 107b
प्रगल्भानामन्ते निवसति शृणोति स्मरकथां
स्वयं तत्तच्चेष्टाशतमभिनयेनार्पयति च ।
स्पृहामन्तः कान्ते वहति न समभ्येति निकटं
यथैवेयं बाला हरति च तथैवेयमधिकम् ॥ ३६ ॥

---

**364** — [c]) P विरसति. — [d]) P °मिवालिंग°. KP °ललितम् ॥. **365** — [a]) S स्फुटमनु°. — [b]) S यदपि विपुलः. — [c]) S1.2 च स्फुरति सु°. S3 युग्म° (द्वन्द्व°). — [d]) P °गजसुरा. ○ Sp. 3283. **366** — [a]) K निःक्रामंतीस्ताः सखीरनुध्नतीं (?). **367** ○ Bh. 93. — [a]) किंचिद्वक्त्रं सरलतरलो. — [d]) न हि रम्यं; Sbh. 2236; Dhv. ad 4.2; Amd. 152; Sāhitya-mimāṃsā 61; KHA. 721; JSV. 218.2; Slp. 4.74 (Bh.); BIS. 7620 (3318); Srb. p. 255.9. **368** — [c]) P प्रणयनिने. **369** — [a]) K °नामन्त्ये. — [c]) P समस्येति. — [d]) P तथैवेयं. ○ Śp. 3281; Sab. 17a (2.18).

अन्योन्यान्तरनिर्गताङ्गुलिदलश्रेणीभवन्निश्चल- 370 P. 108a
ग्रन्थिप्रग्रथितं करद्वयमुपर्युत्तानमाबिभ्रता ।
सेयं विभ्रमतोरणप्रणयिना जृम्भाभरोत्तम्भिते-
नोच्चैर्बाहुयुगेन शंसति मनोजन्मप्रवेशोत्सवम् ॥ ३७ ॥
शतानन्दस्य ॥

स एष यौ↑वनाचार्यः सिद्ध्ये स्मरभूभुजः । ↑ K. 28b 371
प्रियायां वलिमुद्दिश्य तनोति स्तनमण्डलम् ॥ ३८ ॥

बिभ्रत्या वपुरुन्नमत्कुचयुगं प्रादुर्भवद्विभ्रमं (372) P. 108a
बालाया ल्सदङ्गसंधिविरमद्बाल्यं वलङ्घूलतम् ।
अन्तर्विस्फुरति स्मरो बहिरपि व्रीडा समुन्मीलति
स्वैरं लोचनवक्रिमा विलसति श्रीः काचिदुज्जृम्भते ॥ ३९ ॥
रुद्रस्य ॥

सुतनुरधुना सेयं निम्नां स्वनाभिमभीक्षते (373)
कलयति परावृत्तेनाक्ष्णा नितम्बसमुन्नतिम् ।
रहसि कुरुते वासोगुप्तौ स्वमध्यकदर्थनाम्
अपि च किमपि व्रीडां क्रीडासखीमिव मन्यते ॥ ४० ॥

यदन्योन्यप्रेमप्रवणयुवतीमन्मथकथा- (374) S. 2.6.5
समारम्भे स्तम्भीभवति पुलकैरञ्चिततनुः ।
तथा मन्ये धन्यं परमसुरतब्रह्मनिरतं
कुरङ्गाक्षी दीक्षागुरुमकृत कञ्चित्सुकृतिनम् ॥ ४१ ॥
नरसिंहस्य ॥

तरन्तीवाङ्गानि स्फुरदमललावण्यजलधौ 375 S. 2.3.1
प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयति च ।
दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलताम्
अहो सारङ्गाक्ष्यास्तरुणिमनि गाढः परिचयः ॥ ४२ ॥
राजशेखरस्य ॥

---

**370** — [b]) P °विभ्रती ।. — [c]) P दृष्टा (जृंभा-). **372** — [a]) K करयुगं. P °भवेद्. — [b]) P चलद्भ्र°. — [d]) P स्मेरं. **373** — [a]) K °भिक्ष्यते. **374** — [a]) K प्रेमप्रलयुवती-. — [b]) S1 पुलके वंचित°. K °सुकृतिनः ॥. **375** ○ Smk. 52.6 (कुम्भकस्य); Kvv. p. 62; KHA. 695; Amd. 153; Vkj. 2.91.

376 P. 108a (स्वर्लोकस्य) गतिर्मन्दा सान्द्रं जघनमुदरं क्षाममतनुः
स्तनाभोगः स्तोकं वचनमतिमुग्धं च हसितम् ।
विलोलभ्रूवल्लीचलनलयलोलं च नयनं
क्व जातं बालायाः क्व च विषयमक्ष्णोरियमगात् ॥ ४३ ॥

सुद्दोकस्य ॥

377 हरतितरां जनहृदयं कलिकोपगता लता च दयिता च ।
यदि पुनरतनुशिलीमुखसमाकुला किं न पर्याप्तम् ॥ ४४ ॥

गोभट्टस्य ॥

(378) धृतमिव पुरः पश्चात्कैश्चित्प्रणुन्नमिवोल्लसत्-
पुलकमिव यत्प्राप्तोच्छ्वासव्युदस्तमिथोऽन्तरम् । ↑ K. 29a
अतिगतसखीहस्तोन्मानक्रमं दिवसक्रमैर्
इदमनुभवद्वाञ्छापूर्तिक्षमर्द्धि कुचद्वयम् ॥ ४५ ॥

379 P. 108b स्तनतटमिदमुत्तुङ्गं निम्नो मध्यः समुन्नतं जघनम् ।
इति विषमे हरिणाक्ष्या वपुषि नवे क इह न स्खलति ॥ ४६ ॥

380 मात्रानर्तनपण्डितभ्रु वदनं किंचित् प्रगल्भे दृशौ
स्तोकोद्भेदनिवेशितस्तनमुरो मध्यं दरिद्राति च ।
अस्या यज्जघनं घनं च कलया प्रत्यङ्गमेणीदृशः
सत्यंकार इव स्मरैकसुहृदा तद्यौवनेनार्पितम् ॥ ४७ ॥

राजशेखरस्य ॥

(381) अयि परारि परुन्मलयानिला ववुरमी जगुरेव च कोकिलाः ।
कलमलोत्कलितं तु न मे मनः सखि बभूव वृथैव यथैषमः ॥ ४८ ॥

उत्पलराजस्य ॥

---

**376** — c) P °वल्लनलय°. — d) P कुचविषयमक्षोर्. **377** — c) K गोभट्टी. **379** — b) P घजनं. — d) P न स्फाल्यति ॥. ○ Smk. 53.96; Śp. 3370; Sbh. 1268.. **380** — d) K नापितम्. ○ Vid. 1.40. — d) कारमिव. **381** ○ cf. S. 2.5.2 (कालिदासस्य) ववुरेव मलयमरुतो जगुरेव पिकाः परारि च परुच्च । उत्कण्ठाभरतरलं सखि मानसमैषमः किमिदम् ॥.

स्खलति वयसि बाले निर्जिते राजनीव (382)
स्फुरति रतिनिधाने यौवने जेतरीव ।
मदमदनविवृद्धिस्पर्धयेवाबलानां
किमपि वपुषि लीलाकुड्मलानि स्फुटन्ति ॥ ४९ ॥

दृष्ट्या वर्जितमार्जवं समतया दत्तं पयो वक्षसे (383)
क्षीणायुर्गतिषु त्वरा स्मितमपि भ्रूलास्यलीलासखम् ।
सत्या न प्रकृतौ गिरः शिशुतया प्रस्थानदत्तार्घया
काप्यन्या हरिणीदृशः परिणतिः कन्दर्पमुद्राङ्किता ॥ ५० ॥

राजशेखरस्य ॥

॥ इति वयःसंधिव्रज्या ॥ १५ ॥

## ॥ ततो युवतिवर्णनव्रज्या ॥ १६ ॥

यासां सत्यपि सद्गुणानुसरणे दोषानुरागः सदा 384 S. 2.22.1 (विभोकस्य) P. 108b (anon)
याः प्राणान् वरमर्पयन्ति न पुनः संपूर्णदृष्टिं ↑ प्रिये । ↑N. 12a
अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मकस्
तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु वः ॥ १ ॥

वित्तोकस्य ॥

कण्ठे मौक्तिकमालिकाः स्तनतटे ↑ कार्पूरमच्छं रजः ↑K. 29b 385 T. 147 S. 2.109.4 (राजशेखरस्य)
सान्द्रं चन्दनमङ्गके वलयिताः पाणौ मृणालीलताः ।
तन्वी नक्तमियं चकास्ति शुचिनी चीनांशुके बिभ्रती
शीतांशोरधिदेवतेव ग↑लिता व्योमाग्रमारोहतः ॥ २ ॥ ↑T. 36a

लीलास्खलच्चरणचारुगतागतानि तिर्यग्विवर्तितविलोचनवीक्षितानि । 386 T. 148
वामभ्रुवां मृदु च मञ्जु च भाषितानि निर्मायमायुधमिदं मकरध्वजस्य ॥ ३ ॥

---

Vrajyā **16** : N युवतिव्रज्या ॥. K adds कथ्यते. **384** — [a]) S दोषानुबंधः. P दोषान्तराशः परं. — [c]) P प्रत्यन्ता°. — [d]) P रामाः...नः. ○ Śp. 3079; Shv. D 1b. 8; Srb. p 252.53. **385** — [a]) S °मालिका. S कार्पूरमर्घ्यं. — [b]) S वलयिता. S1. 2 मृणालीलता; S3 °लावली. — [d]) N शीतांश्चोर्. ○ Vid. 3.16. — [e]) तनुनी (शुचिनी). Sab. 3.77 (राजशेखरस्य); Srb. p. 277.65; cf. Bālabhārata 1.27.

387 T. 149 S. 2.4.2 (वेतोकस्य)
दृष्टा काञ्चनयष्टिरद्य नगरोपान्ते भ्रमन्ती मया
तस्यामद्भुतपद्ममेकमनिशं प्रोत्फुल्लमालोकितम् ।
तत्रोभौ मधुपौ तथोपरि तयोरेकोऽष्टमीचन्द्रमास्
तस्याग्रे परिपुञ्जितेन तमसा नक्तंदिवं स्थीयते ॥ ४ ॥

(388) T. 150 S. 2.4.1 (वेतोकस्य)
मध्येहेमलतं कपित्थयुगलं प्रादुर्बभूव क्रम-
प्राप्तौ तालफलद्वयं तदनु तन्निःसंधिभावस्थितम् ।
पश्चात्तुल्यसमुन्नतिव्यतिकरं सौवर्णकुम्भद्वया-
कारेण स्फुटमेव तत्परिणतं क्वेदं वदामोऽद्भुतम् ॥ ५ ॥
वित्तोकस्यैतौ ॥

(389) T. 151
स्मितज्योत्स्नालिप्तं मृगमदमसीपत्रहरिणं
मुखं तन्मुग्धाया हरति हरिणाङ्कस्य लडितम् ।
क्व चन्द्रे सौन्दर्यं तदधररुचिः सातिशयिनी
क्व बालायास्ते ते क्व चटुलकटाक्षा नयमुषः ॥ ६ ॥
यागोकस्य ॥

(390) T. 152
आश्चर्यमूर्जितमिदं किमु किं मदीयश् चित्तभ्रमो यदयमिन्दुरनम्बरेऽपि ।
तत्रापि कापि ननु चित्रपरंपरेयम् उज्जृम्भितं कुवलयद्वितयं यदत्र ॥ ७ ॥
श्रीहर्षपालदेवस्य ॥

(391) T. 153 S. 2.70.2 P. 108b
निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृषति करमर्पयितुं कुसुमलावी ॥ ८ ॥
धरणीधरस्य ॥

392 T. 154
यौवनशिल्पिसुकल्पितनूतनतनुवेश्म विशति रतिनाथे ।
लावण्यपल्लवाङ्कौ ↑ मङ्गलकलशौ स्तनावस्याः ॥ ९ ॥ ↑K. 30a

393 T. 155 P. 108b
एकमेव बलिं बद्ध्वा जगाम हरिरुन्नतिम् ।
अस्यास्त्रिवलिबन्धेन सैव मध्यस्य नम्रता ॥ १० ॥

---

**387** — b) S °मेकपद्म°. — *) S1 रेतोकस्य for this and the next. **388** — b) S तदभवन्निःसंधि°. — c) S3 पश्चाद्वद्ध°. — e) T श्रीवित्तोकस्यैतौ. **390** — e) K श्रीहर्षस्य. **391** — b) P प्रभाविता°. — c) T2 S3 विमृशति. ○ Smk. 67.13 (गोयिधोयिकविराजयोः); Sd. p. 253; Srb. p. 334.103; BIS. 3702 (1575). **393** — c) P बंधेऽपि. ○ Sp. 3347; Sab. 1.114; Srb. p. 267.328; Shv. D 13a. 48; cf. JSV. 240.6.

रोमावली कनकचम्पकदामगौर्या लक्ष्मीं तनोति नवयौवनसंभृतश्रीः । 394 T. 156 S. 2.77.1
त्रैलोक्यलब्धविजयस्य मनोभवस्य सौवर्णपट्टलिखितेव जयप्रशस्तिः ॥ ११ ॥

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः । 395 T. 157 S. 2.22.2 (राजशेखरस्य)
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ १२ ॥

सोऽयमभ्युदितः पश्य प्रियाया मुखचन्द्रमाः । (396) T. 158
यस्य पार्वणचन्द्रेण तुल्यतैव हि लाञ्छनम् ॥ १३ ॥

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम् । 397 T. 159
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ १४ ॥
**श्रीहर्षदेवस्य ॥**

मैकं तमःस्तबकमूर्ध्वमपाकृथास्त्वम् एणं त्यजास्य विमले नयने गृहाण । 398 T. 160
लोलालकं तरलवीक्षितमायताक्ष्याः साक्षान्मुखं यदि भवाननुकर्तुकामः ॥१५॥

एतस्मिन्नवदातकान्तिनि कुचद्वन्द्वे कुरङ्गीदृशः 399 T. 161
संक्रान्तप्रतिबिम्बमैन्दवमिदं द्वेधा विभक्तं वपुः ।
आनन्दोत्तरलस्य पुष्पधनुषस्तत्कालनृत्योत्सव-
प्राप्तिप्रोद्यतकांस्यतालयुगलप्रायं समालोक्यते ॥ १६ ॥
**वसुकल्पस्य ॥**

घनावूरू तस्या यदि यदि विदग्धोऽयमधरः 400 T. 162
स्तनद्वन्द्वं सान्द्रं यदि यदि मुखाब्जं विजयते ।
हतौ रम्भास्तम्भौ हतमहह बन्धूककुसुमं
हतौ हेम्नः कुम्भावहह विहतः पार्वणशशी ॥ १७ ॥

---

**394** — c) S₁ त्रैलोक्यबद्ध-. **395** ○ Sbh. 1309; Śp. 3078 (क्षेमेन्द्रस्य). Smk. 37.2 (राजशेखरस्य); Sab. 1.17 (राजशेखरस्य); Kuv. p. 124; Sd. p. 259; Kpk. 567; Kpd. p. 388; As. ad 51; Ak. p. 408; Rasg. p. 460, 729; Srh. 113.1; Kvv. p. 44; KHA. 605; BIS. 2926 (1228); Sd. p. 259, ad 10.5, (ed. 1828, p. 275); Sk. 5.40; Amd. 873; Vyk. ad. 2.70. **397** — b) N निद्रासन°?. — e) K श्रीहर्षस्य. ○ Rat. 2.9; Sbh. 1513 (श्रीहर्षदेवस्य); Srb. p. 262.164. **398** ○ Shv. D. 9a 85; Smk. 53.36. **399** — c) T आनंदात्तरलस्य. — e) K वसुकस्य.

401 T. 163 S. 2.73.1 P. 124*b* ( anon )

यदपि विबुधैः सिन्धोरन्तः कथंचिदुपार्जितं
तदपि सकलं चारुस्त्रीणां मुखेषु विभाव्यते ।
सुरसुमनसः श्वासामोदे शशी च कपोलयोर्
अमृतमधरे तिर्यग्भूते विषं च विलोचने ॥ १८ ॥

लक्ष्मीधरस्य ॥

402 T. 164

तरलनयना ↑ तन्वङ्गीयं पयोध↑रहारिणी ↑ N. 12*b* ↑ K. 30*b*
रचनपटुना मन्ये धात्रा शशिद्रवनिर्मिता ।
भवतु महिमा लावण्यानामयं कथमन्यथा
विगलिततनुर्लेखाशेषः कथं च निशाकरः ॥ १९ ॥

सुवर्णरेखस्य ॥

403 T. 165 S. 2.22.3

सोऽनङ्गः कुसुमानि पञ्च विशिखाः पुष्पाणि बाणासनं
स्वच्छन्दच्छिदुरा मधुव्रतमयी पङ्क्तिर्गुणः कार्मुके ।
एवंसाधनमुत्सहेत स जगज्जेतुं कथं मन्मथस्
तस्यामोघममूर्भवन्ति न हि चेदस्त्रं कुरङ्गीदृशः ॥ २० ॥

अमरसिंहस्य ॥

(404) T. 166 P. 109*a*

गुरुतां जघनस्तनयोः स्रष्टुर्मुष्ट्योन्नमय्य तुलितवतः ।
मग्नाङ्गुलिसंधित्रयनिर्गतलावण्यपङ्क्तिला त्रिवली ॥ २१ ॥

405 T. 167

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥ २२ ॥

भवभूतेः ॥

---

**401** P order *cdab*. — [a]) P यदिदममरैरंतःसिंधोः. — [b]) P युगपदखिलं तन्मुग्धानां. T चारु स्त्रीणां; $S_1$ (marg.) वारस्त्रीणां. $S_3$ विलोक्यते. — [c]) P तृदशकुसुमं श्वासा-. — [d]) $S_3$ °मधरं; P °मधुरे. ○ Smk. 53.31 (भासस्य); Śp. 3319. **402** — [c]) K स्वर्णरेखः ॥. **403** — [a]) $S_1$ वाणीसमं. — [c]) S एतत् (एवं-). TS साधन उत्स°. **404** — [b]) P तुलितरतः. — [c]) $T_1$ मुग्धांगुलि-. — [d]) P त्रिवलीं. **405** ○ Māl. 5.30; Skb. 1.80; ŚB. 2.235, 4.530; Pad. 13.9; Suv. ad 2.32 (भट्टभवभूतेः); Ssm. 952 (भवभूतेः); Amd. 469, 760; Vkj. 1.20.

त्वद्गण्डस्थलपाण्डु देहि लवलं देहि त्वदोष्ठारुणं 406
बिम्बं देहि नितम्बिनि त्वदलकश्यामं च मे जाम्बवम् । T. 168
इत्यक्षुण्णमनोज्ञचाटुजनितव्रीडः पुरन्ध्रीजनो S. 2.141.3
धन्यानां भवनेषु पञ्जरशुकैराहारमभ्यर्थ्यते ॥ २३ ॥ P. 109a

वाक्कूटस्य ॥

दूर्वाश्यामो जयति पुलकैरेष कान्तः कपोलः 407
कस्तूरीभिः किमिह लिखितो द्राविडः पत्रभङ्गः । T. 169
प्रत्यग्राणि प्रियकररुहक्रीडितान्येव मुग्धे
शोभाभाञ्जि स्तनकलशयोस्तन्वि हारोऽपि भारः ॥ २४ ॥

वीर्यमित्रस्य ॥

जनः पुण्यै[र्या]याज्जलधिजलभावं जलमुचस् (408)
तथावस्थं चैनं विदधति शुभैः शुक्तिवदने । T. 170
ततस्तां श्रेयोभिः परिणतिमसौ विन्दति यया
रुचिं तन्वन् पीनस्तनि हृदि तवायं विलसति ॥ २५ ॥

अचलसिंहस्य ॥

न नीलाब्जं चक्षुः सरसि↑रुहमेतन्न वदनं ↑K. 31a 409
न बन्धूकस्येदं कुसुममधरस्तद्द्युतिधरः । T. 171
ममाप्यत्र भ्रान्तिः प्रथममभवद्भृङ्ग किमु ते S. 2.96.5 (राजशेखरस्य)
कृतं यत्नैरेभ्यो विरम विरम श्राम्यसि मुधा ॥ २६ ॥ P. 109a, 123b (राजशेखर)

मनसिजविजयास्त्रं नेत्रविश्रामपात्रं (410)
तव मुखमनुकर्तुं तन्वि वाञ्छा द्वयोश्च । T. 172
इति जनितविरोधोद्भूतकोपादिवायं P. 109a
हरति तुहिनरश्मिः पङ्कजानां विकाशम् ॥ २७ ॥

धर्माकरस्य ॥

---

**406** — [a]) $S_1$ लवणं. — [b]) P जामुनम् ।. — [c]) P °मनोभवाहततलित्·. **408** — [d]) $T_1$ lac.; $T_2$ विलुठति. (from Skb.) ○ Skb. 1.91, 5.456; ŚB. 2.216, 2.389, 3.194, 3.353, 4.447. **409** — [a]) K लीलाब्जं; P लीनाब्जं. P °न्न च दलं. — [b]) S मुकुलमधर°. — [c]) S ममाप्येषा. $P_2$ भृंगि. — [d]) S विरमेत्यंजलिरयं; P विरम श्राम्यसि सुधा. **410** — [a]) P °विषयास्त्रं नेत्रविश्वासपात्रं. — [c]) P °रेखा°. (°कोपा°). — [e]) T धर्मकरस्य ॥.

(411) T. 173 चेतोभुवो रचितविभ्रमसंविधानं नूनं न गोचरमभूद्दयिताननं वः ।
तत्कान्तिसंपद[म]वाप्स्यत चेच्चकोराः पानोत्सवं किमकरिष्यत चन्द्रिकासु ॥२८॥

(412) T. 174 P. 109b यद्दीयते जगति शस्त्रहता व्रजन्ति नूनं सुरालयमिति स्फुटमेतदद्य ।
सूच्यग्रमात्रपरिखण्डितविग्रहेण प्राप्तं यतः स्तनतटं तव कञ्चुकेन ॥ २९ ॥

413 T. 175 अनेन कुम्भद्वयसंनिवेशसंलक्ष्यमाणेन कुचद्वयेन ।
उन्मज्जता यौवनवारणेन वापीव तन्वङ्गि तरङ्गितासि ॥ ३० ॥

**भागुरस्य** ॥ ↑ T. 37b

414 P. 109b सत्यं शरैः सुमनसां हृदयं तवैतल् लोलाक्षि निर्भरमपूरि मनोभवेन ।
आमोदमुल्वणमकृत्रिममुद्वहन्ति श्वासाः स्वभावसुभगं कथमन्यथैते ॥ ३१ ॥

415 P. 109b सुतनु भवगभीरं गर्तमुत्पाद्य नाभीम् अथ उपरि निधाय स्तम्भिकां रोमराजीम् ।
स्तनयुगभरभङ्गाशङ्कितेनेव धात्रा त्रिवलिवलयबद्धं मध्यमालोकयामः ॥ ३२ ॥

(416) P. 109b मुहुः शस्त्रच्छेदैर्मुहुरसमपाषाणकषणैर्
मुहुर्ज्योतिःक्षेपैः पयसि परितापैः प्रतिमुहुः ।
तदेवं तन्वङ्ग्याः कथमपि नितम्बस्थलमिदं
मया लब्धं पुण्यैरिति रणति काञ्चीपरिकरः ॥ ३३ ॥

(417) गुणवृद्धिवर्णलोपद्वन्द्वनिपातो↑पसर्गसंकीर्णा । ↑ K. 31b
दुर्घटपदवाक्यार्था व्याकरणप्रक्रियेवासौ ॥ ३४ ॥

418 नयनच्छलेन सुतनोर्वदनजिते शशिनि कुलविभौ क्रोधात् ।
नासानालनिबद्धं स्फुटितमिवेन्दीवरं द्वेधा ॥ ३५ ॥

419 चक्षुर्मेचकमम्बुजं विजयते वक्त्रस्य मित्रं शशी
भ्रूसूत्रस्य सनाभि मन्मथधनुर्लावण्यपुण्यं वपुः ।

---

**411** — [d]) K °करिष्यति· ○ Bāl. 5.74. — [a]) °भुवश्चरित·. — [c]) °मवाप्स्यथ. **412** — [c]) P यद्दीयते· — [b]) K सुरालय इति· — [d]) P तव कंठफेनः ○ Sbh. 1544. **414** — [b]) K ममाभवेन ।· — [d]) K °मप्यथैते ॥. **415** — [a]) P सुतनु तव शरीरं· — [c]) K °तेनैव· — [d]) P °वलयमध्यं· **416** — [a]) P शास्त्रछेदे· — [b]) P पपरिपातैः· — [d]) P रटति· **417** ○ Sbh. 1383. **418** ○ Srb. p. 259.75. **419** — [c]) K om. ○ Vid. 1.33; Srb. p. 272.57.

रेखा कापि रदच्छदे च सुतनोर्गात्रे च तत्कामिनीम्
एनां वर्णयिता स्मरो यदि स चेद् वैदग्ध्यमभ्यस्यति ॥ ३६ ॥
राजशेखरस्यैतौ ॥

चण्डीशदर्पदलनात्प्रभृति स्मरस्य वामभ्रुवां वदनमेव हि राजधानी । 420 P. 10b
निःशङ्कमङ्कुरितपुष्पितकान्तिकाशे तत्राधुना तुहिन↑धाम्नि मृगाश्चरन्ति ॥३७॥ ↑N. 13a
सरोकस्य ॥

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन् स्मेरेऽधुना तव मुखे तरलायताक्षि । (421)
क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं [प]योधिः ॥३८॥
आनन्दवर्धनस्य ॥

अधीराक्ष्याः पीनस्तनकलशमास्कन्दसि मुहुः (422) S. 2.96.4 P. 110a
क्रमादूरुद्वन्द्वं कलयसि च लावण्यललितम् ।
भुजाश्लिष्टो हर्षादनुभवसि हस्ताहतिकलाम्
इदं वीणादण्ड प्रकटय फलं कस्य तपसः ॥ ३९ ॥
वाचस्पतेः ॥

न तावद् बिम्बोष्ठि स्फुरितनवरागोऽयमधरो 423
न चामी ते दन्ताः सुदति जितकुन्देन्दुमहसः ।
इमां मन्ये मुद्रामतनुतरसिन्दूरसुभगाम्
इदं मुक्तारत्नं मदननृपतेर्मुद्रितमिव ॥ ४० ॥
कमलाधरस्य ॥

इमौ रम्भास्तम्भौ द्विरदपतिकुम्भद्वयमिदं 424
तदेतल्लीलाब्जं शरदमृतरश्मिः स्फुटमयम् ।
किमङ्ग तन्वङ्ग्याः कलयति जगत्कान्तमधिकं
यदेतस्यां शश्वत्परवशमिवोन्मत्तमिव↑ च ॥ ४१ ॥ ↑K. 32a

---

**420** — [a]) P °त्प्रकृति. — [b]) K राजधानीम् ।. — [c]) P कांतिदेशे. — [e]) N ? सुरोकस्य ॥. **421** ○ Dhv. ad 2.28 (यथा वा ममैव); Sbh. 2031 (जयवर्धनस्य); Srb. p. 306.28; Daś. ad 4.36 (अलंकारेष्वपि); KHV. 177; Amd. 257; Vyk. ad 1.20, 3 27. **422** — [a]) S °कलस°. — [c]) K हस्तादति-; P हस्ता इति. — [d]) S अये (इदं). **423** ○ Smk. 74.10. **424** — [c]) K जगत्कांति°.

425 S. 1.75.4 2.73.2 (both मुरारेः)

जनानन्दश्चन्द्रो भवति न कथं नाम सुकृती
प्रयातोऽवस्थाभिस्तिसृभिरपि यः कोटिमियतीम् ।
भ्रुवोर्लीलां बालः श्रियमलिकपट्टस्य तरुणो
मुखेन्दोः सर्वस्वं हरति हरिणाक्ष्याः परिणतः ॥ ४२ ॥

वामदेवस्य ॥

426 S. 2.4.4

लावण्यसिन्धुरपरैव हि केयमत्र यत्रोत्पलानि शशिना सह संप्लवन्ते । N.um.14b
उन्मज्जति द्विरदकुम्भतटी च यत्र यत्रापरे कदलकाण्डमृणालदण्डाः ॥ ४३ ॥

श्रीविक्रमादित्यदेवस्य ॥

427 P. 110a

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयोर्
असावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकरसः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ ४४ ॥

भवभूतेः ॥

428 T. 176 P. 110a

↑ नितम्बश्रीः कं न स्वगतमितयानं जनयति ↑ T. 39a
स्तनाभोगो मुग्धे हृदयमपरस्यापि हरति ।
तवाक्ष्णोऽपभ्रष्टं स्मरकरशरेन्दीवरदलं
मुखं तद्यस्येन्दुः प्रथमलिखनप्रोञ्छनपदम् ॥ ४५ ॥

वल्लणस्य ॥

429 T. 177 S. 2.76.4 (राजशेखरस्य)

सजन्मानौ तुल्यावभिजनभुवाजन्म च सह-
प्रवृद्धौ नाम्ना च स्तन इति समानावुदयिनौ ।
मिथः सीमामात्रे यदिदमनयोर्मण्डलवतोर्
अपि स्पर्धायुद्धं तदिह हि नमस्यः कठिनिमा ॥ ४६ ॥

भावकदेव्याः ॥

---

**425** [a]) S भवतु. ○ Smk. 53.33 (अभिनन्दस्य); Shv. D. 8a.78. **426** [c]) S1.2 विक्रमादित्यस्य; S3 विकटनितम्बायाः. ○ Smk. 49.17 (विक्रमादित्यस्य); Shv. D. 17b, 99 (विक्रमादित्यस्य); Dhv. ad 2.35; Kvv. p. 36; Skb. 4.102; ŚB. 2.38, 3.213, 3.231; Vām. ad 4.3.4; Amd. 823; Kāvyālaṃkāra ad 2.8. **427** — [c]) P स्वयं कंठे. K मौक्तिकसरः. ○ Ut. 1.38; Daś. ad 3.18 (उत्तरचरिते); KHA. 690; Skb. 5.86; ŚB. 2.98, 2.152, 2.331, 3.21, 3.312, 3.371; Han. (Mdhs.) 4.27; JSV. 221.3; Amd. 137; Vyk. ad 2.101; Vām. ad 4.3.6; Nāṭ ad 97 (Ut.). **428** — [a]) P °श्रीः कर्णसुगन-. — [d]) P तत्पूर्णेंदुः. K प्रोंछल-; P प्रांजन-. **429** — [a]) K °जनभुवो. S1.3 °वपि जनितुराजन्म. S2 °वपि जनिभृतां जन्म. — [c]) S मंडलभृतोर्-. — [d]) S1.2 स्पर्धालुत्वं; S3 स्पर्धा नूनं. S नमस्या कठिनता. — [e]) T भावाक°.

शृङ्गारद्रुममञ्जरी सुखसुधासर्वस्वनिक्षेपभूः 430 T. 178
सर्गाभ्यासफलं विधेर्मधुमयी वर्तिर्जगच्चक्षुषाम् ।
लीलानिर्झरिणी मनोजनृपतेर्लावण्यसिन्धोरियं
वेला कस्य मृगेक्षणा सुकृतिनः सौन्दर्यसीमास्थली ॥ ४७ ॥
हिमाङ्गस्य ॥

किमियममृतवर्तिः किं नु लावण्यसिन्धुः 431 T. 179 P. 110b
किमथ नलिनलक्ष्मीः किं नु शृ↑ङ्गारवल्ली । ↑K. 32b
इति नवहरिणाक्ष्याः कान्तिमालोकयन्तो
जगदखिलमसारं भारमालोचयामः ॥ ४८ ॥

स्मितज्योत्स्नाधौतं स्फुरदधरपत्रं मृगदृशां 432 T. 180
मुखाब्जं चेत्पीतं तदलमिह पीयूषकथया ।
अहो मोहः कोऽयं शतमखमुखानां सुमनसां
यदस्यार्थेऽव्यर्थं जलधिमथनायासमविशन् ॥ ४९ ॥

एतल्लोचनमुत्पलभ्रमवशात्पद्मभ्रमादाननं 433 T. 181
भ्रान्त्या बिम्बफलस्य चाजनि दधद्धामाधरो वेधसा ।
तस्याः सत्यमनङ्गविभ्रमभुवः प्रत्यङ्गमासङ्गिनी
भ्रान्तिर्विश्वसृजोऽपि यत्र कियती तत्रास्मदादेर्मतिः ॥ ५० ॥
वीर्यमित्रस्य ॥

आनीलचूचुकशिलीमुखमुद्गतैकरोमावलीविपुलनालमिदं प्रि↑यायाः । 434 T. 182 P. 110b
उत्तुङ्गसंगतपयोधरपद्मयुग्मं नाभेरधः कथयतीव महानिधानम् ॥५१॥ ↑N. 13b

यन्नामापि सुखाकरोति कलयत्युर्वीमपि द्यामिव (435) T. 183 S. 2.22.4
प्राप्तिर्यस्य यदङ्गसङ्गविधिना किं यन्न निह्नूयते ।
अन्तः किं च सुधासपत्नमनिशं जागर्ति यद्रागिणां
विश्रम्भास्पदमद्भुतं किमपि तत्कान्तेति तत्त्वान्तरम् ॥ ५२ ॥

---

**430** — [b]) K स्वर्गाभ्यास-. **431** — [a]) $T_1$ P किमय°. T वृत्तिः. — [c]) TK °मालोचयंतो. — [d]) K जगति * * म°. P भावमालोकयामः. **432** — [a]) T धौतस्फुर°. **433** — [b]) $T_2$ भ्रान्ति. — [c]) $T_1$ वीर्यमिन्द्रस्य. **434** — [a]) K आनाल-; P स्वालीन°. — [b]) P °विदल-(°विपुल-). ○ Sbh. 1545; Smk. 53.67; Shv. D. 14b.66. **435** — [c]) $T_1$ सुधासयत्न°; K सुधायत्न°. — [d]) $S_{1.2}$ विश्रांतास्पद°. $S_1$ °मस्तुतं.

436 T. 184 तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् ।
हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥ ५३ ॥
भोज्यदेवस्य ॥

437 T. 185 P. 110b (anon) हन्तु नाम जगत्सर्वमविवेकि कुचद्वयम् ।
प्राप्तश्रवणयोरक्ष्णोर्न मुक्तं जनमारणम् ॥ ५४ ॥
धर्मकीर्तेः ॥

438 T. 186 P. 110b (anon) तन्वङ्गीनां स्तनौ दृष्ट्वा शिरः कम्पयते युवा ।
तयोरन्तरसंलग्नां दृष्टिमुत्पाटयन्निव ॥ ५५ ॥
पाणिनेः ॥

(439) T. 187 S. 2.96.1 (धर्मकीर्तेः) शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
तरुणि येन तवाधरपाटलं दशति विम्बफलं शुकशावकः ॥५६॥ ↑K. 33a

440 T. 188 याता लोचनगोचरं यदि विधेरेणेक्षणा सुन्दरी
नेयं कुङ्कुमपङ्कपिञ्जरमुखी तेनोज्झिता स्यात्क्षणम् ।
नाप्यामीलितलोचनस्य रचनाद्रूपं भवेदीदृशं
तस्मात्सर्वमकर्तृकं जगदिदं श्रेयो मतं सौगतम् ॥ ५७ ॥
धर्मकीर्तेः ॥

(441) T. 189 S. 2.22.5 व्यर्थं विलोक्य कुसुमेषुमसुव्ययेऽपि गौरीपतीक्षणशिखिज्वलितो मनोभूः ।
रोषाद्वशीकरणमस्त्रमुपाददे यां सा सुभ्रुवां विजयते जगति प्रतिष्ठा ॥ ५८ ॥
मनोविनोदकृतः ॥

---

**436** — [b]) K सुखं. — [d]) K दत्तमपि. — [e]) T भोज°; K श्रीभोज°. ○ Sp. 3340; SG. 69*a*; Sd. ad 10.43; Smk. 53.55; SG. 69*a*; Srb. p. 264.248. **437** — [b]) K आविवेकि; P अविवेकी. — [d]) K न युक्तं. **438** — [e]) K श्रीभोजकालिदासयोः ॥. ○ Daś. ad 4.50; Kvv. p. 14. **439** — [b]) K °मसादकरो°. ○ Sbh. 2030; Srb. p. 313.13; Kuv. p. 99; Sd. ad 4.9; Dhv. ad 1.16; Ssm. 571; KHV. 142; BIS. 6455 (2981); Vyk. ad 3 (preamble); ŚB. 2.36, 3.19, 4.447. **440** — [c]) K रचनारूपं. [e]) K श्रीधर्म°. **441** — [c]) T1 -यां; T2 S यत् (यां). — [e]) S °नोदस्य.

आरब्धे दयितामुखप्रतिसमे निर्मातुमस्मिन्नपि (442) T. 190
व्यक्तं जन्मसमानकालमिलितामंशुच्छटां वर्षति ।
आत्मद्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः
संकोचादतिदुःस्थितस्य न विधेस्तच्छिल्पमुन्मीलितम् ॥ ५९ ॥

अनेन रम्भोरु भवन्मुखेन तुषारभानोस्तुलया जितस्य । (443) T. 191 P. 110b (anon)
ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः ॥ ६० ॥

गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः (444) T. 192 P. 62a (anon)
शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान् ।
एकाग्रां यद्दधति भगवत्युष्णभानौ च भक्तिं
तत्प्रापुस्ते सुतनु वदनौपम्यमम्भोरुहाणि ॥ ६१ ॥
मुरारेरमी ॥

कोषः स्फीततरः स्थितानि परितः पत्राणि दुर्गं जलं N. lm. 13a 445 T. 193 S. 2.73.5
मैत्रं मण्डलमुज्ज्वलं चिरमधो नीतास्तथा कण्टकाः ।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदत्यद्भुतं
यत्पद्मेन जिगीषुणापि न जितं मुग्धे त्वदीयं मुखम् ॥ ६२ ॥

सा रामणीयकनिधेरधिदेवता वा 446 T. 194
सौन्दर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे नियतमिन्दुसुधामृणाल- ↑K. 33b
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ ६३ ॥
भवभूतेः ॥

उपप्राकाराग्रं प्रहिणु नयने तर्कय मनाग् (447) T. 195
अनाकाशे कोऽयं गलितहरिणः शीतकिरणः ।

---

**442** ○ Anr. 7.80; Śp. 3325 (मुरारेः); Smk. 53.29 (मुरारेः); Shv. D 8b. 84 (श्रीमुरारेः); Ak. p. 392; Srb. p. 263.203. **443** — a) P तवाननेन· — b) P °भानोः कलयां· T धृतस्य; P चितस्य· — c) T प्रतिपूर°· — d) T स्फुटंति· ○ Anr. 7.81; Śp. 3221; Smk. 74.11 (मुरारेः); Shv. D. 9a. 89; Srb. p. 262.180. **444** — a) P भगवानेव· — c) T1 K एकाग्रं· ○ Anr. 7.82; Smk. 74. 2 (मुरारेः); Ak. p. 392; Srb. p. 313.59. **445** — a) T1 स्फीततरुः· — b) S1, 2 चरमधो· — d) S मुग्धे तवेदं· ○ Sbh. 1523 (विज्जाकायाः); Śp. 3322 (विज्जकायाः); Srb. p. 263.202; Shv. D. 7b. 74 (विज्जायाः). **446** ○ Māl. 1.24; Ak. p. 281; Srb. p. 271.34. **447** ○ Vid. 1.31; Smk. 49.13 (राजशेखरस्य); Śp. 3516; Skb. 4.100; KHA. 567; Daś. ad 4.50; Kuv. ad 33 (p. 41); Cit. p. 45. Order often *cdab*.

सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरञ् ज्योत्स्नामच्छां नवलवलपाकप्रणयिनीम् ॥ ६४ ॥
राजशेखरस्य ॥

(448) T. 196 चन्द्रो जडः कदलकाण्डमकाण्डशीतमिन्दीवराणि च विसूत्रितविभ्रमाणि ।
येनाक्रियन्त सुतनोः स कथं विधाता किं चन्द्रिकां क्वचिदशीतरुचिः प्रसूते ॥६५॥
अयमपि तस्यैव ॥

449 T. 197 अलीकव्यामुक्तप्रचुरकबरीबन्धनमिषाद्
उदञ्चद्दोर्वल्लीद्वयधृतपरीवेशनिहितः ।
अयं जृम्भारम्भस्फटिकशुचिदन्तांशुनिचयो
मुखेन्दुर्गौराङ्ग्या गलितमृगलक्ष्मा विजयते ॥ ६६ ॥

450 T. 198 S. 2.49.1 (भेरीभ्रमकस्य) रम्भोरु क्षिप लोचनार्धमभितो बाणान्वृथा मन्मथः
संधत्तां धनुरुज्झतु क्षणमितो भ्रूवल्लिमुल्लासय ।
किं चान्तर्निहितानुरागमधुरामव्यक्तवर्णक्रमां
मुग्धे वाचमुदीरयास्तु जगतो वीणासु भेरीभ्रमः ॥ ६७ ॥

451 T. 199 S. 2.122.1 (पाणिनेः) पाणौ पद्मधिया मधूकमुकुलभ्रान्त्या तथा गण्डयोर्
नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे ।
लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति सुतनु स्थानानि रक्षिष्यसि ॥ ६८ ॥

(452) T. 200 S. 2.4.3 (रथाङ्गस्य) दृष्टाः शैवलमञ्जरीपरिचिताः सिन्धोश्चिरं वीचयो
रत्नान्यप्यवलोकितानि बहुशो युक्तानि मुक्ताफलैः ।
यत्तु प्रोञ्छितलाञ्छने हिमरुचावुन्निद्रमिन्दीवरं
संसक्तं च मिथो रथाङ्गयुगलं तत्केन दृष्टं पुनः ॥ ६९ ॥
विक्रमादित्यस्य ॥ ↑K. 34a

---

**448** — [e]) K om. अयमपि. ○ Vid. 2.4; Srb, p. 253.22. **449** — [d]) T1 °मृगलक्ष्मी. **450** — [e]) S2 भेरीभ्रमरस्य. **451** — [a]) KS °कुसुम- (°मुकुल-). — [c]) S2.3 °मोहमुग्धाशया. — [d]) S तरुणि (सुतनु). ○ Smk. 65.10; Śp. 3803 (अचलस्य); Srb. p. 334.119; Aś p. 7; Pad. p. 64.32 (अचलस्य); Ssm. 788 (अचलस्य); SG. 81b. **452** — [c]) S3 प्रोज्झित-. — [d]) S रथांगमिथुनं तत्कुत्र. — [e]) K विक्रमादि ॥.

अन्योन्योपमितं युगं निरुपमं तेऽयुग्ममङ्गेषु यत् (453) T. 201
सोऽयं सिक्थकमास्यकान्तिमधुनस्तन्वङ्गि चन्द्रस्तव ।
त्वद्वाचां स्वरमात्रिकां मदकलः पुंस्कोकिलो घोषयत्य्
अभ्यासस्य किमस्त्यगोचरमिति प्रत्याशया मोहितः ॥ ७० ॥

लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः N. *um.* 13*b* 454 T. 202 S. 2.68.4
स्वच्छन्दं वसतो जनस्य हृदये चिन्ताज्वरो निर्मितः ।
एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥ ७१ ॥
धर्मकीर्तेः ॥

किं कौमुदीः शशिकलाः सकला विचूर्ण्य 455 T. 203
संयोज्य चामृतरसेन पुनः प्रयत्नात् ।
कामस्य घोरहरहूंकृतिदग्धमूर्तेः
संजीवनौषधिरियं विहिता विधात्रा ॥ ७२ ॥
भट्टोद्भटस्य ॥

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः 456 T. 204
शृङ्गारैकरसः स्वयं नु मदनो मासः स पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ७३ ॥
कालिदासस्य ॥

---

**453** — *c*) T2 °लोऽप्येषय-. **454** ○ Sbh. 1472 (धर्मकीर्तेः); Smk. 50.9; (भदन्तधर्मकीर्तेः); Srb. p. 286.29; Auc. ad 5.11; As. ad 22; Sab. 1.25; Slp. 3.87; SK. 5.337; Shv. D. 16*a*. 88; Dhv. ad 3.4 KHV. 552; Kpk. p. 494; SG. 65*a*; Kuv. ad 72; BIS. 5850 (2667). **455** — *c*) K भट्टः or भट्टेः. ○ Śp. 3269; Sbh. 1463 (भट्टोद्भटस्य); Srb. p. 253.19; Pmt. 119; Pad. p. 29.3. **456** ○ Vik. 1.10; Sbh. 1467 (कालिदासस्य); Śp. 3268 (कालिदासस्य); Srb. p. 254.42; Sd. ad 10.47; Daś. ad 4.2; Skb. 3.121; Kpk. 420; Kpd. p. 326; As. ad 22; Cit. p. 66, p. 102; Citkh. p. 29; Shv. D. 17*a*. 198 (कालिदासस्य); ŚB. 2.313, 3.42, 3.314, 4.448; Pk. 207; Kvv. p. 39; Ak. p. 199, p. 282; Amd. 618.

457 T. 205 S. 2.99.1 तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम सा चेद् द्युतिस्
तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत्स्मितं का सुधा ।
धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥ ७४ ॥
राजशेखरस्य ॥

(458) T. 206 तस्या मुखस्यायतलोचनायाः कर्तुं न शक्तः सदृशं प्रियायाः ।
इतीव शीतद्युतिरात्मबिम्बं निर्माय निर्माय पुनर्भिनत्ति ॥ ७५ ॥

459 T. 207 P. 119a तुलि↑तस्त्वन्मुखेनायं यदुन्नमति चन्द्रमाः । ↑N. 14a
अवनम्रमुखि व्यक्तमेतेनैवास्य लाघवम् ॥ ७६ ॥

460 T. 208 S. 2.73.3 P. 119a तपस्यतीव ↑ चन्द्रोऽयं त्वन्मुखेन्दुजिगीषया । ↑K. 34b
कृशः शम्भुजटाजूटतटिनीतटमाश्रितः ॥ ७७ ॥

461 T. 209 तव तन्वि स्तनावेतौ कुर्वाते विग्रहं गुरुम् ।
अन्योन्यमण्डलाक्रान्तौ नष्टसंधी नृपाविव ॥ ७८ ॥

462 T. 210 P. 119a प्रायः स्तनतटीभूमिः प्रकामफलदायिनी ।
यस्यामग्रे करं दत्वा योज्यते नखलाङ्गलम् ॥ ७९ ॥

463 T. 211 P. 119b अमीषां मण्डलाभोगः स्तनानामेव शोभते ।
येषामुपेत्य सोत्कम्पा राजानोऽपि करप्रदाः ॥ ८० ॥

---

**457** — [a]) T शशिकला· — [b]) S3 किं सुधा· — [c]) S च यदि ते· — [d]) T1 स्वर्गक्रमो. — [e]) S3 om. ○ Bāl. 2.17; Vid. 1.14; Śp. 3373; Smk. 53.100 (राजशेखरस्य); Srb. p. 271.51; Sab. 1.35 (राजशेखरस्य); Skb. 4.72; Sd. ad 10.87; Shv. D. 15*b*. 80 (श्रीराजशेखरस्य); Kvv. p. 38, p. 59; KHA. 272; (as in Bāl, *acbd*); Vyk. ad 2.5, 2.31. [Bāl. varies]. **458** ○ Śp. 3320; Sbh. 1517 (श्रीहर्षस्य); Srb. p. 262.179; Slp. 2.37; SK. 5.154; Shv. D. 9*a*. 88; **459** N interchanges this with the next. — [c]) T °नम्रमुखे; KP °नम्रमुखी. **460** — [a]) S शीतांशुस् (चंद्रोऽयं). — [b]) T °जयाशया ।. **463** — [c] P येषामुत्पाद्य·

लक्ष्मीं वक्षसि कौस्तुभस्तबकिनि प्रेम्णा करोत्यच्युतो 464
देहार्धे वहति त्रिपिष्टपगुरुर्गौरीं स्वयं शंकरः । T. 212
शङ्के पङ्कजसंभवस्तु भगवानद्यापि बाल्यावधिः P. 119b
सर्वाङ्गप्रणयां प्रियां कलयितुं दीर्घं तपस्तप्यते ॥ ८१ ॥

॥ इति युवतिवर्णनव्रज्या ॥ १६ ॥

## ॥ ततोऽनुरागव्रज्या ॥ १७ ॥

दत्त्वा वामकरं नितम्बफलके लीलावलन्मध्यया 465
व्यावृत्तस्तनमङ्गचुम्बिचिबुकं स्थित्वा तया मां प्रति । T. 213
अन्तर्विस्फुरदिन्द्रनीलमणिमन्मुक्तावलीमांसलाः
सप्रेम प्रहिताः स्मरज्वरमुचो द्वित्राः कटाक्षच्छटाः ॥ १ ॥

आकर्णान्तविसर्पिणः कुवलयच्छायामुषश्चक्षुषः (466)
क्षेपा एव तवाहरन्ति हृदयं किं संभ्रमेणामुना । T. 214
मुग्धे केवलमेतदाहितनखोत्खाताङ्कमुत्पांशुलम् P. 119b
बाह्वोर्मूलमलीकमुक्तकबरीबन्धच्छलाद्दर्शितम् ॥ २ ॥

तरत्तारं तावत्प्रथममथ चित्रार्पितमिव 467
क्रमादेवापाङ्गे सहजमिव लीलामुकुलितम् । T. 215
ततः किंचित्फुल्लं तदनु घनबाष्पाम्बुलहरी- S. 2.93.4
परिक्षामं चक्षुः पततु मयि तस्या मृगदृशः ॥ ३ ॥
वीर्यमित्रस्य ॥

लीलाताण्डवितभ्रु विभ्रमवलद्वक्त्रं कुरङ्गीदृशा 468
साकूतं च सकौतुकं च सुचिरं न्यस्ताः किलास्मान्प्रति । ↑K. 35a T. 216
नीलाब्जव्यतिमिश्रकेतकदलद्राघीयसीनां स्रजां P. 119b
सोदर्याः सुहृदः स्मरस्य सुधया दिग्धाः कटाक्षच्छटाः ॥ ४ ॥ (anon)
राजशेखरस्य ॥

---

**464** — [a]) P वक्ष्यसि. P °करोदच्युतो. — [c]) K °शंभवस्तु. T बाल्यावधेः. — [d]) P °प्रणयप्रिया. ○ Bāl. 10.42. **465** — [c]) K °मणिमिर्मुक्ता-. ○ ŚB. 3.210. **466** — [a]) P °छायामुख°. — [d]) P °कवलीबंधु-. **467** — [b]) S3 °देवापांगं. — [c]) S किंचित्क्षुण्णं. ○ Skm. 43.12 (वीर्यमित्रस्य); SG. 62*b*. **468** P only लीलातांडवितेत्यादि ॥. cf. 795. ○ Smk. 43.11; Shv. C. 216 (वीर्यमित्रस्य).

469 T. 217 S. 2.9.1 2.131.1 (श्रीहर्षदेवस्य) P. 120a

दृष्टा दृष्टिमधो ददाति कुरुते नालपमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
याता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥ ५ ॥

470 T. 218 S. 2.93.5

तद्व्रीडाभरभुग्नमास्यकमलं विन्यस्य जानूपरि
प्रोद्यत्पक्ष्मनिरीक्षितं विजयते सप्रेम वामभ्रुवः ।
हास्यश्रीलवलाञ्छिता च यदसावस्याः कपोलस्थली
लोलल्लोचनगोचरं व्रजति स स्वर्गादपूर्वो विधिः ॥ ६ ॥

**प्रद्युम्नस्य ॥**

(471) T. 219

बिसकवलनलीलामग्नपूर्वार्धकायं कमलमिति गृहीतं हंसमाशु त्यजन्त्याः ।
विरतचरिततारस्फारनेत्रं यदस्याश्चकितमिह न दृष्टं मूढ तद्वञ्चितोऽसि ॥ ७ ॥

472 T. 220 S. 2.76.3

अयं लोलन्मुक्तावलिकिरणमालापरिकरः
स्फुटस्येन्दोर्लक्ष्मीं क्षपयितुमलं मन्मथसुहृत् ।
विशालः श्यामायाः स्खलितघननीलांशुकवृतिः
स्तनाभोगः स्विद्यन्मसृणघुसृणालेपसुभगः ॥ ८ ॥

473 T. 221

मन्ये हीनं स्तनजघनयोरेकमाशङ्क्य धात्रा
प्रारब्धोऽस्याः परिकलयितुं पाणिनादाय मध्यः ।
लावण्यार्द्रे कथमितरथा तत्र तस्याङ्गुलीनाम्
आमग्नानां त्रिवलिवलयच्छद्मना भान्ति मुद्राः ॥ ९ ॥

N. **मनोविनोदस्यैतौ ॥**

---

**469** — [a]) T दधाति. P नालप्य°. — [b]) K परिवर्त्य. — [d]) TS जाता (याता). P यूनि (मेऽद्य). S (2nd) संप्रति मम प्रीत्यै. — [e]) S2.3 (1st) श्रीहर्षस्य. ○ Nāg. 3.4; Śp. 3672 (श्रीहर्षस्य); Sbh. 2072 (श्रीहर्षदेवस्य); Smk. 77.2 (श्रीहर्षस्य); Ssm.368; Srb. p. 318.14; Sd. ad 3.58; Skb. 5.272; Sab. 4.127; (श्रीहर्षस्य); BIS. 2932 (1230); Bh. 532; ŚB. 3.372, 3.395. **470** N gives *cd* in *lm.* 14*a*. — [a]) S यद्व्रीडा. — [c]) S1.2 °लवणांचिता. **471** — [c]) T चलित°. **472** — [b]) N (?) स्थपयतुमलं. S1.2 lac.; S3 वर्तुलतरः ।. — [c]) S स्थगितघनली(S3 °नी°)लांशुकवृतः. — [d]) S3 स्विद्यन्मसृण°. — [e]) S मनोविनोदकृतः. **473** — [b]) K मध्ये ।. — [e]) TK om., because of next stanza.

यत्रैतन्मृगनाभिपत्रतिलकं पुष्णाति लक्ष्मश्रियं (474) T. 222
यस्मिन् हासमयो विलिम्पति दिशो लावण्यबालातपः ।
तन्मित्रं कुसुमायुधस्य दधती बालान्धकाराञ्चिता
तारैकावलिमण्डनेयमनघा श्यामा वधूर्दृश्यताम् ॥१०॥ ↑K. 35b
मनोविनोदस्यामी ॥

वक्त्राम्बुजं भुजमृणाललतं प्रियाया लावण्यवारि वलिवीचि वपुस्तडागम् । 475 T. 223
तत्प्रेमपङ्कपतितो न समुज्जिहीते मच्चित्तकुञ्जरपतिः परिगाहमानः ॥११॥ ↑N. 14b

कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले 476 T. 224 P. 120a (श्रीहर्षस्य)
मध्येऽस्यास्त्रिवलीविभङ्गविषमे निष्पन्दतामागता ।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥ १२ ॥
श्रीहर्षदेवस्य ॥

अलमतिचपलत्वात्स्वप्नमायोपमत्वात् 477 T. 225 P. 120a
परिणतिविरसत्वात्संगमेन प्रियायाः ।
इति यदि शतकृत्वस्तत्त्वमालोकयामस्
तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ १३ ॥

नपुंसकमिति ज्ञात्वा तां प्रति प्रहितं मनः । 478 T. 226
रमते तच्च तत्रैव हताः पाणिनिना वयम् ॥ १४ ॥

हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले । 479 T. 227 P. 120a (anon)
मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः ॥ १५ ॥
धर्मकीर्तेरमी ॥

---

**476** — [a]) P भ्रान्त्या· — [b]) TKP °तरंग° (विभंग). P °विषये निःपन्नताम्· — [c]) K पीनौ स्तनौ; P पीनस्तनौ· — [e]) P om. °देव°. ○ Rat. 2.10; Dhv. ad 2.4 (com.); Smk. 49.22 (श्रीहर्षस्य); KHV. 178; Skb. 5.488; ŚB. 3.228. **477** — [b]) P संगमेनांगनाया ।. — [c]) T lac. K °मालोचयामस्; P °मालोचयंतस्. ○ Śp. 566 (Bilhaṇa and his guru); Śān. 2.23, Kpk. 198; Kpd. ad 7.4; Bh. 839; BIS. 637; Srb. p. 252.44; SK. 7.3; Amd. 391. ŚB 3.82. **478** — [a]) N नपुंसमिति· — [b]) T प्रियायां; K प्रियायै (तां प्रति). ○ Śp. 3451; Sbh. 1232; Kuv. p. 115; Aś. ad 20.17; SK. 6.462; BIS. 3339 (1417). **479** — [e]) K om. ○ Amś. 138; Sd. ad 10.83; Sāhityak. ad 11.8; BIS. 7386 (3350).

480 T. 228 P. 120a सा सुन्दरीति तरुणीति तनूदरीति मुग्धेति मुग्धवदनेति मुहुर्मुहुर्मे ।
कान्तामयं विरहिणीमनुरन्तुकामः कामातुरो जपति मन्त्रमिवान्तरात्मा ॥ १६ ॥
वीर्यमित्रस्य ॥

481 T. 229 S. 2.80.2 (अमरोः) P. 120b सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयम् ।
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ १७ ॥
धर्मकीर्तेः ॥

482 T. 230 P. 120b अलसवलितमुग्धस्निग्धनिष्पन्दमन्दैर्
अधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे ↑ पक्ष्मलाक्ष्याः कटाक्षैर् ↑ K. 36a
अपहृतमपविद्धं पीतमुन्मूलितं च ॥ १८ ॥

483 T. 231 P. 120b यान्त्या मुहुर्वलितकन्धरमाननं तद्
आवृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ १९ ॥

484 T. 232 P. 121a परिच्छेदव्यक्तिर्भवति न पुरःस्थेऽपि विषये
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम् ।

---

**480** K intercharges this with next to get 4 st. by Dharmakīrti in a row. — [b]) P कांतेति कांतवदनेति· — [c]) T1 lac.; T2 विरहिणा°. P वर्णकामः ○ ŚB. 4.689. **481** SP *acbd*. — [b]) P आक्रांता· — [d]) P जनाश्रयैव· ○ Amś. 34; Bh. 851; BIS. 7002 (3236); Srb. p. 280.92; Sbh. 1346; Srh. 195.14; (अमरुकस्य); [all these in order *acbd*]. Vām. ad 4.3.12; Skb. 3.42; ŚB. 2.305; Amd. 842; Sd. ad 10.69; Slp. 1.45; Aś. p. 36 (13.1); As. ad 44 (*acbd*). **482** — [a]) P °निःपन्न-. — [c]) T1 कटाक्ष्यैर्· — [d]) T1P °मुन्मीलितं· ○ Māl. 1.31; Sbh. 1297 (भवभूतेः); Skb. 5.84; ŚB. 3.53; Kvv. p. 41; Srb. p. 279.59; Amd. 135; Kav. p. 48. **483** — [c]) P दग्धो मृतेन. P पक्ष्मलाक्षा· ○ Māl. 1.32; Daś. ad 1.28, 4.48. Skb. 5.6; As. ad 11. Ak. pp. 30,46; Cit. p. 18; Sab. 36*a* (भवभूतेः); KHV. 392; Srb. p. 278.51; Ssm. 741 (भवभूतेः); Amd. 205, 653; Vyk. ad 2.13; ŚB. 3.12, 3.231, 4.413. **484** — [a]) P पुरस्थोपि· — [b]) N विसरं ।; P °विवसं ।. ○ Māl. 1.34.

न संतापच्छेदो हिमसरसि वा चन्द्रमसि वा
　मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥ २० ॥

परिच्छेदातीतः सकलवचनानामविषयः 485 T. 233
　पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
　विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ २१ ॥
भवभूतेरमी ॥

गच्छन्त्या मुहुरर्पितं मृगदृशा तारस्फुरद्वीक्षणं 486 T. 234
　प्रान्तभ्राम्यदसञ्जितभ्रु यदिदं किं तन्न जानीमहे ।
क्वापि स्वेदसमुच्चयः स्नपयति क्वापि प्रकम्पोद्गमः
　क्वाप्यङ्गेषु तुषानलप्रतिसमः कन्दर्पदर्पक्रमः ॥ २२ ॥

अमृतसिक्तमिवाङ्गमिदं यदि भवति तन्वि तवाद्भुतवीक्षितैः । 487 T. 235
अधरमिन्दुकरादपि शुभ्रयन्त्यरुणयन्त्यरुणादपि किं दृशम् ॥२३॥

सा नेत्राञ्जनतां पुनर्व्रजति मे वाचामयं विभ्रमः 488 T. 236
　प्रत्यासन्नकरग्रहेति च करी हस्तोदरे शायितः ।
एतावद्बहु यद्बभूव कथमप्येकत्र मन्वन्तरे
　निर्माणं वपुषो ममोरुतपसस्तस्याश्च वामभ्रुवः ॥ २४ ॥ ↑N. 15a
वल्लणस्य ॥

　नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः । 489 T. 237
　यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ २५ ॥

आदौ विस्मयनिस्तरङ्गमनु च प्रेङ्खोलितं साध्वसैर् ↑K. 36b (490) T. 238
　व्रीडानम्रमथ क्षणं प्रविकसत्तारं दिदृक्षारसैः ।

---

**485** ○ Māl. 1.33; As. ad 40; Kpk. 108, 489; Kpd. p. 127, p. 356; Daś. ad 4.24, 4.63 (*d* as in Ut. 1.36); Smk. 43.40 (भवभूतेः); Srb. p. 375.247; Amd. 268 (partially, after 837); ŚB. 4.411. **488** — [a]) K नेतांजनतां. **489** ○ Bh. 127; BIS. 3807 (1637); Śp. 3298; Srb. p. 259.60; Sbh. 1227; Smk. 53.10; SK. 5. 133; Slp. 5.7 (भर्तृहरेः); Shv. D. 4*b*. 37. **490** : T lacunary. — [b]) K पिदृक्षा°.

आक्रुष्टं सहजाभिजात्यकलनात्प्रेम्णा पुरः प्रेरितं
चक्षुर्भूरि कथंकथंचिदगमत्प्रेयांसमेणीदृशः ॥ २६ ॥
चित्तूकस्य ॥

491 T. 239 गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ २७ ॥
कालिदासस्य ॥

492 T. 240 S. 2.72.3 (कस्यचित्) P. 121a अयं ते विद्रुमच्छायो मरुमार्ग इवाधरः ।
करोति कस्य नो बाले पिपासाकुलितं मनः ॥ २८ ॥
दण्डिनः ॥

(493) T. 241 अस्यास्तुङ्गमिव स्तनद्वयमिदं निम्नेव नाभि[ः] स्थिता
दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि ।
अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धस्वभावश्चिरं
प्रेम्णा मन्मुखचन्द्रमीक्षत इव स्मेरेव वक्तीति च ॥ २९ ॥

494 T. 242 स्वच्छन्दं स्वगृहाङ्गणं भ्रमति सा मद्दर्शनालीयते
धन्यान् पश्यति लोचनेन सकलेनार्धेन मां वीक्षते ।
अन्यान्मन्त्रयते पुनर्मयि गते मौनं समालम्बते
नीतो दूरमहं तया दयितया सामान्यलोकादपि ॥ ३० ॥

495 T. 243 स खलु सुकृतिभाजामग्रणीः सोऽतिधन्यो
विनिहितकुचकुम्भा पृष्ठतो यन्मृगाक्षी ।
बहलतरनखाग्रक्षोदविन्यस्तमार्गे
शिरसि टसिति लिक्षां हन्ति हूंकारगर्भम् ॥ ३१ ॥

---

**491** — [a]) K पुरः सखीनं. — [b]) N °दशंश्छ्त्रं. ○ Śāk. 1.30; Sab. 36*a* (कालिदासस्य). **492** — [a]) P अपास्तविद्रुम-. — [b]) K मरुमार्गम्; S मरुदेश; P मेरुमार्ग. — [c]) S मुग्धे (बाले). — [d]) S1, 2 पिपासातरलं. ○ Kuv. p. 181, Skb. 5.90 (*cdab*); ŚB. 1.191 (*cd* only), 3.18; Pv. 3.44. **493** — [a]) T नाभी; K नाभि-. — [c]) T स्निग्धः-. — [d]) T वक्तीव च. ○ Śāk. Bengal recension p. 222. **495** — [a]) TK सुकृत-. — [d]) T ढमिति. N °गर्भ doubtful.

अलसयति गात्रमधिकं भ्रमयति चेतस्तनोति संतापम् । 496
मोहं च मुहुः कुरुते विषमविषं वीक्षितं तस्याः ॥ ३२ ॥ T. 244

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे कान्तापयोधरयुगे रतिखेदखिन्नः । 497
वक्षो निधाय भुजपञ्जरमध्यवर्ती धन्यः क्षपाः क्षपयति क्षण↑लब्धनिद्रः॥३३॥ ↑K. 37a T. 245

धिक्तस्य मूढमनसः कुकवेः कवित्वं यः स्त्रीमुखं च शशिनं च समीकरोति। 498
भ्रूभङ्गविभ्रमविलासनिरीक्षितानि कोपप्रसादहसितानि कुतः शशाङ्के ॥ ३४ ॥ T. 246

तावज्जरामरणबन्धुवियोगशोकसंवेगभिन्नमनसामपवर्गवाञ्छा । 499
यावन्न वक्रगतिरञ्जननीलरोचिरेणीदृशां दशति लोचनदन्दशूकः ॥ ३५ ॥ T. 247

सा यैर्दृष्टा न वा दृष्टा मुषिताः सममेव ते । 500 T. 248
हृतं हृदयमेकेषामन्येषां चक्षुषः फलम् ॥ ३६ ॥ S. 2.99.4 P. 121a

सा बालेति मृगेक्षणेति विकसत्पद्माननेति क्रम- 501 T. 249
प्रोन्मीलत्कुचकुड्मलेति हृदय त्वां धिग्वृथा श्राम्यसि । P. 121a
मायेयं मृगतृष्णिकास्वपि पयः पातुं समीहा तव
त्यक्तव्ये पथि मा कृथाः पुनरपि प्रेमप्रमादास्पदम् ॥ ३७ ॥
धर्मकीर्तेः ॥

अवचनं वचनं प्रियसंनिधावनवलोकनमेव विलोकनम् । (502) T. 250
अवयवावरणं च यदञ्चलव्यतिकरेण तदङ्गसमर्पणम् ॥ ३८ ॥ S.2.8.4 (कालिदासस्य) P. 121b

---

**496** — [d]) T विषविषमं; K विषविमं ○ Sbh. 1262 (भट्टकर्णाटकस्य); Śp. 3302; Sab. 29b. cf. Āryā-Saptaśatī of Govardhana, 54. **497** ○ Bh. 297; BIS. 4663 (2092); Pañc. ed. Koseg. 1.224, ed. Orn. 213; Śp. 3693 (भर्तृहरेः), 3951; Srb. p. 319.27; Sbh. 1292; Ssm. 702 or 704 (भर्तृहरेः); Slp. 3.77; Sab. 21a (भर्तृहरेः) Pad. p. 59.39 (भर्तृहरेः); Śṛṅgāratilaka 22. **498** ○ Bh. 262; BIS. 3149; Śp. 3323 (श्रीधनददेवानाम्); Sbh. 1977; Srb. p. 262.188; Shv. D. 8b. 85 (धनदस्य); SK. 5.155; Slp. 4.14. **499** — [d]) K °दण्डशूकः. **500** — [b]) P मुषिता. — [d]) P °मेतेषां ○ Sbh. 1254 (शक्रदेवस्य); Śp. 3368 (प्रभाकरदेवस्य); KHV. 542; SK. 5.214; Smk. 43.3 (प्रभाकरदेवस्य). **501** — [a]) P स्फुटं (क्रम-). — [b]) T2 K हृदयं. P त्वं. — [d]) P°प्रमोदा-. **502** — [a]) P सुवचनं — [c]) P यदञ्चन- ○ Sbh. 2052 (वामनस्वामिनः); Śp. 3957 (वामनस्वामिनः); Bh. 384; Smk. 88.18; ŚB. 1.328, 4.428.

(503) T. 251 रोमाञ्चैरिव कीलिता चलति नो दृष्टिः कपोलस्थले
स्वान्तं प्रेमपयोधिपङ्कपतनान्निश्चेष्टमास्ते गतम् ।
उद्धाराय तयोर्गता इव पुनस्त्रासान्निवृत्ता इव
श्वासा दीर्घमहो गतागतममी कुर्वन्त एवासते ॥ ३९ ॥

(504) T. 252 यदि सरोजमिदं क्व निशि प्रभा यदि निशापतिरह्नि कुतो नु सः ।
रचयतोभयधर्मि तवाननं प्रकटितं विधिना बहु नैपुणम् ॥ ४० ॥

(505) T. 253 P. 121b अभिमुखे मयि संवृतमीक्षितं हसितमन्यनिमित्तकथोदयम् ।
विनयवारितवृत्तिरतस्तया न विवृतो मदनो न च संवृतः ॥ ४१ ॥

506 T. 254 P. 121b कोऽसौ कृती कथय को मदनैकबन्धुर्
उद्ग्रीवमर्चयसि कस्य ↑ मृगाक्षि मार्गम् । ↑ K. 37b
नीलाब्जकर्बुरितमध्यविनिद्रकुन्द-
दामाभिरामरुचिभिस्तरलैः कटाक्षैः ॥ ४२ ॥

507 T. 255 P. 121b गुरुणा स्त↑नभारेण मुखचन्द्रेण भास्वता । ↑ T. 44b
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ ४३ ॥

सावर्णेः ॥

508 S. 2.37.3 (अमरोः) अलसवलितैः प्रेमार्द्रार्द्रैर्निमेषपराङ्मुखैः
क्षणमभिमुखं लज्जालोलैर्मुहुर्मुकुलीकृतैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽसौ मुग्धे त्वयाद्य विलोक्यते ↑ ॥४४॥ ↑ N. 15b

श्रीहर्षस्य ॥

---

**503** — c) T1 K पुनस्तासा°; — d) T1 K कुर्वन्तु. **504** — d) T1 प्रकटितुं. **505** — a) T2 संहृत°; P संभृत°. P°मीलितं. — c) P °विनस्तया. ○ Śāk. 2.11; Smk. 43.8 (कालिदासस्य); Kav. p. 24; ŚB. 1.329, 3.52, 3.200, 3.310, 4.431. **506** — c) P लीलाब्ज°. **507** ○ Bh. 132*; BIS. 2169 (865); Srb. p. 270.3 (शंखक); Sbh. 1233; Smk. 53.93; Shv. D 18a. 7; Slp. 5.10 (भर्तृहरेः); Mandāramarandacampū of Kṛṣṇakavi 10.178. (KM. 52. p. 144). **508** S interchanges portions after caesura in *ab*. — b) S °मभिमुखैर्. — c) N °निहितं. — d) S कोयं (कोसौ). ○ Amś. 4; Sbh. 1098; Śp. 3416 (अमरुकस्य); Smk. 39.4 (अमरुकस्य); Srb. p. 286.13; Shv. D. 25a. 3 (beginning only; अमरुकस्य); Kpk. 202; KHA. 203; BIS. 640; Amd. 389; JSV. 222.2.

उपरि कवरीबन्धग्रन्थेरथ ग्रथिताङ्गुली (509) S. 2.121.3 (परमेश्वरस्य)
निजभुजलते तिर्यक्तन्व्या वितत्य विवृत्तया ।
विवृतविलसद्वामापाङ्गस्तनार्धकपोलया
कुवलयदलस्रक्सन्दिग्धश्रियः प्रहिता दृशः ॥ ४५ ॥

साकूतं दयितेन सा परिजनाभ्याशे समालोकिता 510
स्वाकूतप्रतिपादनाय रभसादाश्वासयन्ती प्रियम् ।
वैदर्भाक्षरगर्भिणीं गिरमुदीर्यान्यापदेशाच्छिशुं
प्रीत्या कर्षति चुम्बति त्वरयति श्लिष्यत्यसूयत्यपि ॥ ४६ ॥

व्यावृत्त्या शिथिलीकरोति वसनं जाग्रत्यपि व्रीडया 511 S. 2.84.5 (अमरोः) P. 121b
स्वप्नभ्रान्तिपरिप्लुतेन मनसा गाढं समालिङ्गति ।
दत्वाङ्गं स्वपिति प्रियस्य रतये व्याजेन निद्रां गता
तन्वङ्ग्या विफलं विचेष्टितमहो भावानभिज्ञे जने ॥ ४७ ॥

आयाते दयिते मरुस्थलभुवामुल्लङ्घ्य दुर्लङ्घ्यतां (512) S. 2.60.1
गेहिन्या परितोषबाष्पतरलामासज्य दृष्टिं मुखे ।
दत्वा पीलुशमीकरीरकवलान् स्वेनाञ्चलेनादराद्
आमृष्टं करभस्य केशरसटाभारावलग्नं रजः ॥ ४८ ॥

केशटस्य ॥

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे तन्वी स्थिता कतिचिदेव पदानि गत्वा ।↑K. 38a 513
आसीद्विवृत्तवदना च विमोचयन्ती शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ ४९ ॥

कालिदासस्य ॥

---

**509** — [a]) S °ग्रंथीनथ. S1 °तांगुरीन्; S2.3 °तांगुलीन्. — [b]) S °भुजतले. S1 विवृत्यया. — [c]) S °द्वामापाङ्ग-. — [d]) K °स्रक्षन्दिग्ध-. **510** — [a]) K °जनाभ्यासे. — [d]) K त्वरति सा. **511** — [a]) P जागर्त्यपि क्रीडया. — [b]) S1.2 सुप्तभ्रांति-. — [c]) S1 दत्तांगं. N स्वपति. — [d]) S विचेष्टितमभूद्. P जनम्. **512** — [a]) S °भुवामुत्प्रेक्ष्य. — [d]) S1.2 उन्मृष्टं. S °भाराग्रलग्नं. ○ Sbh. 2075; Śp. 3528 (अद्भुतपुण्यस्य); Smk. 54.4 (अद्भुतपुण्यस्य); Srb. p. 305.1, Daś. ad 41.4; KHA. 137. Skb. 5.120; ŚB. 2.195, 3.11, 3.393, 4.729, 4.885; Any. p. 42.35; SG. 71.a (अद्भुतपुण्यस्य). **513** ○ Śāk. 2.12; Ssm. 742; Skb. 1.112; ŚB. 2.220, 4. 418.

514 P. 122a दूरादेव कृतोऽञ्जलिर्न स पुनः पानीयपानोचितो
रूपालोकनविस्मितेन चलितं मूर्ध्ना न शान्त्या तृषः ।
रोमाञ्चोऽपि निरन्तरं प्रकटितः प्रीत्या न शैत्यादपाम्
अक्षुण्णो विधिरध्वगेन घटितो वीक्ष्य प्रपापालिकाम् ॥ ५० ॥
बाणस्य ॥

515 चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव मृशसि मृदु कर्णान्तिकगतः ।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ ५१ ॥

516 स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेषयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विषादादिव ।
मा गा इत्युपरुद्धया यदपि तत्सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो कामः स्वतां पश्यति ॥ ५२ ॥
कालिदासस्यैतौ ॥

517 वक्त्रश्रीजितलज्जितेन्दुमलिनं कृत्वा करे कन्दुकं
क्रीडाकौतुकमिश्रभावमनया ताम्रं वहन्त्याननम् ।
भृङ्गाग्रग्रहकृष्टकेतकदलस्पर्धावतीनां दृशां
दीर्घापाङ्गतरङ्गणैकसुहृदामेषोऽस्मि पात्रीकृतः ॥ ५३ ॥
राजशेखरस्य ॥

(518) तरङ्गय दृशोऽङ्गने पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
मनाग्वपुरपावृणु स्पृशतु काञ्चनं कालिकाम्
उदञ्चय निजाननं भवतु च द्विचन्द्रं नभः ॥ ५४ ॥

---

**514** ○ Sbh. 1709 (भट्टबाणस्य); Śp. 3859 (बाणभट्टस्य); Smk. 57.33; Srb. p. 339.119; Sab. 5 (f. 31*b* बाणभट्टस्य). **515** — *b*) K स्वनसि (मृशसि). ○ Śāk; 1.20; Srb. p. 283.160; Smk. 65.8 (कालिदासस्य); KHA. 2; Dhv. ad. 2.20. Amd. 210; Bps. 84; SG. 81*b*; Sd. ad 4.11; ŚB. 3.359. **516** ○ Śāk. 2.2 — *d*) कामी; Smk. 43.9 (कालिदासस्य); ŚB. 3.301, 4.556; Nāṭ. ad 48 (Śāk.). **517** — *b*) N °त्यस्त्रं or भ्यस्त्रं; K °भ्यग्रं or °भ्यश्रं (ताम्रं). ○ Vid. 2.11; Śp. 3928 (राजशेखरस्य); Srb. p. 347.40. **518** — *b*) K व्रजति. ○ Vid. 3.27; Bāl. 3.25; cf. Bālabhārata 1.31; Śp. 3659 (राजशेखरस्य order *acbd*); Srb. p. 306.38; Smk. 74.15 (राजशेखरस्य); KHA. 271; Skb. 4.69; ŚB. 2.334; Amd. 317; Vyk. ad 2.31.

एको जयति सद्वृत्तः किं पुनर्द्वौ सुसंहतौ । (519)
किं चित्रं यदि तन्वङ्ग्याः स्तनाभ्यां निर्जितं जगत् ↑ ॥५५॥ ↑ K. 38b P. 122a

प्रणालीदीर्घस्य प्रतिकलमपाङ्ग↑स्य सुहृदः ↑ T. 46a (520) T. 256
  कटाक्षव्याक्षेपाः शिशुशफरफालप्रतिभुवः । S. 2.121.1
स्नुवानाः सर्वस्वं कुसुमधनुषोऽस्मान् प्रति सखे (S1. 2 राजशेखरस्य)
  नवं नेत्राद्वैतं कुवलयदृशः संनिदधति ॥ ५६ ॥

भवनभुवि सृजन्तस्तारहारावतारान् 521
  दिशि दिशि विकिरन्तः केतकानां कुटुम्बम् । T. 257
वियति विरचयन्तश्चन्द्रिकां दुग्धमुग्धां S. 2.93.3
  प्रतिनयननिपाताः सुभ्रुवो विभ्रमन्ति ॥ ५७ ॥ (राजशेखरस्य)

N. **राजशेखरस्य** ॥

यत्पश्यन्ति झगित्यपाङ्गसरणिद्रोणीजुषा चक्षुषा (522)
  विङ्खन्ति क्रमदोलितोभयभुजं यन्नाम वामभ्रुवः । T. 258
भाषन्ते च यदुक्तिभि[:] स्तबकितं वैदग्ध्यमुद्रात्मभिस्
  तद्देवस्य रसायनं रसनिधेर्मन्ये मनोजन्मनः ॥ ५८ ॥

क्रमसरलितकण्ठप्रक्रमोल्लासितोरस्तरलितवलिरेखासूत्रसर्वस्वमस्याः । (523) T. 259
स्थितमतिचिरमुच्चैरग्रपादाङ्गुलीभिः करकलितसखीकं मां दिदृक्षोः स्मरामि ॥ ५९ ॥ S. 2.93.1 (कालिदासस्य)

स्मरशरधिसकाशं कर्णपाशं कृशाङ्गी रयविगलितताडीपत्रताडङ्कमेकम् । (524) T. 260
वहति हृदयचौरं कुङ्कुमन्यासगौरं वलयितमिव नालं लोचनेन्दीवरस्य ॥६०॥ S. 2.71.4 (कस्यचित्)

चोलाञ्चलेन चलहारलताप्रकाण्डैर्वेणीगुणेन च बलाद्वलयीकृतेन । (525) T. 261
हेलाहितभ्रमरकभ्रममण्डलीभिश्छत्त्रत्रयं रचयतीव चिरं नतभ्रूः ॥ ६१ ॥ S. 2.79.3 (राजशेखरस्य)

---

**520** — a) T1 S1. 2 lac, T2 प्रतिपद°. S3 प्रसृमरतरंगस्य. — c) S सुधायाः (स्नुवानाः). — e) S3 om. ○ Vid. 4.14; Srb. p. 260.108. **521** — b) S विदिशंतः. — c) S वियति च रच-. S मुग्धमुग्धां. ○ Vid. 4.13; Srb. p. 260.107. **522** — b) T2 रिंखंति. — c) T1 K °भिस्तबकितं. ○ Vid. extra, MS. B, after 4.6; Pk. 208. **523** — a) T1 °शरलित°; K °शरणित°. S °कंठं. S °तारं. — b) T S3 °वलिलेखा-. ○ Vid. 3.3; Srb. p. 279.60. **524** — a) S °निकाशं. — b) T2 °ताटंक°. — c) S3 °चोरं. S1 °न्यासधोरं. ○ Vid. 2.10; Srb. p. 346.37. **525** — a) S3 lac. to कांडैर. S1. 2 चेलांचलेन. — c) S स्वेच्छाहित°. S3 °भ्रमरय-. S °भ्रमि°. — d) S अन्यं रसं रच-. T नतभ्रुः. ○ Vid. 2.9; Śp. 3912; Smk. 66.9 (राजशेखरस्य) Pad. p. 65.36; Ssm. 79.

(526) T. 262 S. 2.79.1
अमन्दमणिनूपुरक्कणनचारुचारीक्रमं
झणज्झणितमेखलास्खलिततारहारच्छटम् ।
इदं तरलकङ्कणावलिविशेषवाचालितं
मनो हरति सुभ्रुवः किमपि कन्दुकक्रीडितम् ॥ ६२ ॥

(527) T. 263
सा दुग्धमुग्धमधुरच्छ↑विरङ्गयष्टिस्ते लोचने तरुणकेतकपत्रदीर्घे । ↑K. 39a
कम्बोर्विडम्बनकरश्च स एव कण्ठः सैवेयमिन्दुवदना मदनायुधाय ॥ ६३ ॥

(528) T. 264 S. 2.95.4
क्व पातव्या ज्योत्स्नामृतभवनगर्भापि तृषितैर्
मृणालीतन्तुभ्यः सिचयरचना कुत्र घटते ।
क्व वा परीमेयो बत बकुलदाम्नां परिमलः
कथं स्वप्नः साक्षात्कुवलयदृशं कल्पयतु ताम् ॥ ६४ ॥
राजशेखरस्यामी ॥

(529) T. 265 S. 2.126.1
रसवदमृतं कः संदेहो मधून्यपि नान्यथा
मधुरमपि किं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ ६५ ॥

(530) T. 266
कुवलयवनं प्रत्याख्यातं नवं मधु निन्दितं
हसितममृतं हन्त स्वादोः परं रससंपदः ।
विषमुपहितं चिन्ताव्याजान्मनस्यपि कामिनाम्
अलसमधुरैर्लीलातत्रैस्त्रयार्धविलोकितैः ॥ ६६ ॥

(531) T. 267
चञ्चच्चोलाञ्चलानि प्रतिसरणरयव्यस्तवेणीनि बाहोर्
विक्षेपाद्दक्षिणस्य प्रचलितवलयास्फालकोलाहलानि ।

---

**526** — [a]) S °नूपुरप्रचुर°. S3 °चारक्रमं. — [b]) S1.2 ज्झणिति. S3 °हारच्छदं. ○ Vid. 2.6; Śp. 3929; Smk. 66.6; Srb. p. 346.38; Slp. 4.19. **527** — [d]) T1 °मिंदुवचना. ○ Vid. 1.38; Srb. p. 271.36. **528** — [a]) S क्व पेयं ज्योत्स्नांभो वदत विसवल्लीसरणिभिर्. — [b]) S कुत्र भवतु ।. — [d]) K °दृशः. T1 कंपयतु. ○ Vid. 1.20; Sab. 36*b* (राजशेखरस्य); Skb. 2.60 (as in S). **529** — [b]) S मधुरमधिकं. — [c]) S1.2 स एवांतर-. — [d]) S1 °वदन°; S2.3 °रदन° (°दशन). ○ Vām. ad 3.2.11; Skb. 1.110; ŚB. 2.220; Kpk. 216; Kpd. p. 209; Śp. 3312; Srb. p. 252.50; Smk. 53.21; BIS. 532 (3562); AMD. 325; Shv. D. 6*b*. 60; KHV. 251. — [a]) often अमृतममृतं. **530** ○ Vām. ad 4.3.22. **531** ○ Smk. 66.2 (राजशेखरस्य); Srb. p. 347.42; Śp. 3926 (राजशेखरस्य); Ssm. 801.

श्वासत्रुट्यद्वचांसि द्रुतमितरकरोत्क्षिप्तलोलालकानि
स्रस्तस्रञ्जि प्रमोदं दधति मृगदृशां कन्दुकक्रीडितानि ॥ ६७ ॥

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेण वा (532) T. 268 S. 2.90.1 (अमरो:) P. 126b
किमुत सकले यातेऽप्यह्नि त्वमद्य समेष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सबाष्पझलज्झलैः ॥ ६८ ॥

झलज्झलस्य ॥

कल्याणं परिकल्प्यतां पिककुले रोहन्तु वाञ्छाप्तयो (533) T. 269
हंसानामुदयोऽस्तु पूर्णशशिनः स्ताद्भद्रमिन्दीवरे ।
इत्युद्बाष्पवधूगिरः प्रतिपदं संपूरयन्त्यान्तिके
कान्तः प्रस्थिति↑कल्पितोपकरणः सख्या भृशं वारितः ॥६९॥ ↑K.39b

शृङ्गारस्य ॥

सामान्यवाचि पदमप्यभिधीयमानं मां प्राप्य जातमभिधेयविशेषनिष्ठम् । (534) T. 270 P. 127a
स्त्री काचिदित्यभिहिते हि मनो मदीयं तामेव वामनयनां विषयीकरोति ॥ ७० ॥

## ॥ इत्यनुरागव्रज्या ॥ १७ ॥

## ॥ ततो दूतीवचनव्रज्या ॥ १८ ॥

लावण्येन पिधीयतेऽङ्गतनिमा संधार्यते जीवितं 535 T. 271 S. 2.29.2 P. 127a (anon)
त्वद्ध्यानैः सततं कुरङ्गकदृशः किं त्वेतदास्ते नवम् ।
निःश्वासैः कुचकुम्भपीठलुठनप्रत्युद्गमान्मांसलैः
श्यामीभूतकपोलमिन्दुरधुना यत्तन्मुखं स्पर्धते ॥ १ ॥

N. शृङ्गारस्य ॥

---

**532** — [a]) S परेऽथ वा. — [b]) S याते वाह्नि प्रिय त्वमिहे(S1 °हे°)ष्यसि. — [c]) P संदेशं (देशं), — [d]) K °सलज्जलैः ॥; S3 °गलज्जलैः ॥; P °सलिलैः ॥. ○ Śp. 3389 (गलज्जलवसुदेवस्य); Sbh. 1048 (झलज्झलिकावासुदेवयोः); Smk. 37.7 (झलज्झलवासुदेवस्य); Srb. p. 329.11; ŚB. 3.135, 4.416; Amś. 12; Daś. ad 4.59 (अमरुशतके); Cit. p. 4; Citkh p. 5; Sab. 2.7 (अमरकस्य); Rasg. p. 18; BIS. 4291 (1883). **534** — [a]) KP °पदमप्ये°. P प्रवीधी (?). — [b]) P जातिमभि°. ○ Kav. p. 36. **535** — [a]) S1, 2 निश्वासैः. — [b]) T1 कुरंगक-.

(536) T. 272 S. 2.35.2 P. 127a (anon)

सोद्वेगा मृगलाञ्छने मुखमपि स्वं नेक्षते दर्पणे
त्रस्ता कोकिलकूजितादपि गिरं नोन्मुद्रयत्यात्मनः ।
चित्रं दुःसहदाहदायिनि धृतद्वेषापि पुष्पायुधे
बाला सा सुभग त्वयि प्रतिपदं प्रेमाधिकं पुष्यति ॥ २ ॥

शृङ्गारस्यैतौ ॥

537 T. 273 S. 2.30.1 (अचलसिंहस्य) P. 127b

विलिम्पत्येतस्मिन्मलयजरसार्द्रेण महसा
दिशां चक्रं चन्द्रे सुकृतमय तस्या मृगदृशः ।
दृशोर्बाष्पः पाणौ वदनमसवः कण्ठकुहरे
हृदि त्वं ह्रीः पृष्ठे वचसि च गुणा एव भवतः ॥ ३ ॥

(538) T. 274 S. 2.36.2 (चण्डालचन्द्रस्य) P. 127b

अम्भोरुहं वदनमम्बकमिन्दुकान्तः पाथोनिधिः कुसुमचापभृतो विकारः ।
प्रादुर्बभूव सुभग त्वयि दूरसंस्थे चण्डालचन्द्रधवलासु निशासु तस्याः ॥ ४ ॥

539 T. 275 S. 2.29.1 P. 127b (anon)

वक्त्रेन्दोर्न हरन्ति ↑ बाष्पपयसां धारा मनोज्ञां श्रियं ↑ N. 16a
निश्वासा न कदर्थयन्ति मधुरां बिम्बाधरस्य द्युतिम् ।
तस्यास्त्वद्विरहे विपक्वलवलीलावण्यसंवादिनी
छाया कापि कपोलयोरनुदिनं तन्व्याः परं शुष्यति ॥ ५ ॥

धर्मकीर्तेः ॥

(540) T. 276 S. 2.36.3 (राजशेखरस्य)

तापोऽम्भःप्रसृतंपचः प्रचयवान् बाष्पः प्रणालो↑चितः ↑ K. 40a
श्वासा नर्तितदीपवर्तिलतिकाः पाण्डिम्नि मग्नं वपुः ।
किं चान्यत्कथयामि रात्रिमखिलां त्वद्वर्त्मवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥ ६ ॥

---

**536** — a) P स्वं लक्षते. — b) T °कूटितादपि. K नो मुद्रयत्यात्मनः; P नो मुद्रयंभ्या मनः ।. — c) S इत्थं (चित्रं). P दुःसहदायिनि ध्वनितविद्वेषापि. K पुष्पायुधो. — d) S मुग्धा सा सुभग (S3 गे). ○ Śp. 3488; Srb. p. 290.72; Smk. 44.16 (बिल्हणस्य). **537** — a) P सहसा. — b) K चक्रे. — c) P °मवशः. — e) S1 प्रचल°; S3 om. ○ Smk. 44.7 (राजशेखरस्य); Skb. 5.137; ŚB. 3.392, 4.435, 4.509. **538** — a) P वदनमीदृश°. — c) P आविर्बभूव. — d) K चाण्डाल-. **539** — a) K राधा-; P धारां. — c) S तन्व्यास्; P तस्यां. P °विरहेऽपि पंक-. — d) P प्रतिदिनं. S तस्याः परं. ○ Vkj. 1.75. **540** — a) S3 तापोन्तः प्रसृतिं°. — d) S3 हस्तच्छन्न-. ○ Vid.2.21; Sbh. 1411 (राजशेखरस्य); Cit. p. 103; Srb. 290.83; As. ad 22; Vkj. 1.46.

चन्द्रं चन्दनकर्दमेन लिखितं सा मार्ष्टि दष्टाधरा 541 T. 277 S. 2.30.3 P. 127b (anon)
वन्ध्यं निन्दति यच्च मन्मथमसौ भङ्क्त्वाग्रहस्ताङ्गुरीः ।
कामः पुष्पशरः किलेति सुमनोवर्गं लुनीते च यत्
तत्काम्या सुभग त्वया वरतनुर्वातूलतां लम्भिता ॥ ७ ॥
राजशेखरस्य ॥

वपुः शारङ्गाक्ष्यास्तदविरलरोमाञ्चनिचयं 542 T. 278 P. 128a (anon)
त्वयि स्वप्नावाप्ते स्नपयति परः स्वेदविसरः ।
बलाकर्षत्र्युट्यद्वलयजकडत्कारनिनदैर्
विनिद्रायाः पश्चादनवरतबाष्पाम्बुनिवहाः ॥ ८ ॥
वसुकल्पस्य ॥

नो शक्या गदितुं स्मरानलदशा यास्यास्त्वयि प्रस्थिते 543 T. 279 P. 128a (anon)
पत्रैः सास्रसखीजनोपरचिते तल्पे लुठन्त्या मुहुः ।
यल्लिप्तं कुचचन्दनेन सुतनोरद्यापि चन्द्रच्छलाच्
छ्वासोड्डीनविशुष्कपाण्डुबिसिनीपत्रं दिवि भ्राम्यति ॥ ९ ॥
रुद्रस्य ॥

प्रकटयति क्षणभङ्गं पश्यति सर्वं जगद्गतं शून्यम् । 544 T. 280 P. 128a
आचरति स्मृतिबाह्यं जाता सा बौद्धबुद्धिरिव ॥ १० ॥

त्वदर्थिनी चन्दनभस्मदिग्धललाटलेखाश्रुजलाभिषिक्ता । 545 T. 281 S. 2.29.3
मृणालचीरं दधती स्तनाभ्यां स्मरोपदिष्टं चरति व्रतं सा ॥ ११ ॥

ये निर्दहन्ति दशनश्वसितावलोकैः क्रूरं द्विजिह्वकुटिलाः क्व विलासिनस्ते । (546) T. 282 P. 128a
भीष्मोष्मभिः स्मरणमात्रविषैस्तवेयमव्याल मारयति कापि भुजङ्गभङ्गिः ॥ १२ ॥

---

**541** P order *acbd*. — [a]) P यन्मार्ष्टि. — [b]) T वन्ध्यं (वन्द्यं). SP °हस्तांगुलीः. — [c]) KP पुष्पसरः. P सुमनोरंगं. — [d]) S3 तत्कां सा; P सोत्कंपा. ○ Vid. 2.20 (*acbd*); Srb. p. 290.82 (*acbd*); Smk. 44.9 (*acbd* नन्दनस्य); ŚB. 4.509. **542** — [a]) P सारंगाक्ष्या°. — [b]) P स्वप्नप्राप्ते. K स्वेदविरसः. — [c]) T2 P °त्रुट्य° (grammatically correct). T कटुत्कार-. P °निनदे. — [d]) P °निचयः ॥. **543** — [a]) P यस्या°. — [b]) T2P साश्रुसखी-. KP °परिचिते. — [c]) P या लुप्तं. T चंद्रस्थलाच्. — [d]) P च्छ्वासोदीर्णविशुद्ध-. **544** — [a]) P सा भंगं. — [c]) P स्मृतिराज्यं. — [d]) P याता सा रौन्वबुद्धि-. ○ Sbh. 1382. **545** — [d]) K चरितं. ○ Sbh. 1393. **546** — [a]) P दहनश्च सिता°. — [b]) T क्रूर-; P क्रूरा. — [d]) P अव्यास-. ○ Sbh. 1400 (भट्टवासुदेवस्य).

547 T. 283 स्वेदापूरविलुप्तकुङ्कुमरसाश्लेषाविलप्रच्छदात्
तल्पाद् व्यक्तमनोभवानलशिखालीढादिवाशङ्किता ।
सा बाला बलवन्मृगाङ्ककिरणैरुत्पादितान्तर्ज्वरा ↑K. 40b
त्वत्संकल्पजडे त्वदङ्कशयने निद्रासुखं वाञ्छति ॥ १३ ॥

548 T. 284 धूमेनेव हृते दृशौ विसृजतो बाष्पं प्रवाहक्षमं
क्वाथोत्फेणमिवात्तचन्दनरसं स्वेदं वपुर्मुञ्चति ।
अन्तःप्रज्वलितस्य कामशिखिनो दाहार्जितैर्भस्मभिः
श्वासावेगविनिर्गतैरिव तनोः पाण्डुत्वमुन्मीलति ॥ १४ ॥
मनोविनोदस्यैतौ ॥

(549) T. 285 S. 2.32.4 (वाक्कूटस्य) P. 128b (anon) अत्रैष स्वयमेव चित्रफलके कम्पस्खलल्लेखया
संतापार्तिविनोदनाय कथमप्यालिख्य सख्या भवान् ।
बाष्पव्याकुलमीक्षितः सरभसं चूताङ्कुरैरर्चितो
मूर्ध्ना च प्रणतः सखीषु मदनव्याजेन चापह्नुतः ॥ १५ ॥
डिम्बोकस्य ॥

550 T. 286 P. 128b (anon) सा सुन्दरी तव वियोगहुताशनेऽस्मिन्नभ्युक्ष्य बाष्पसलिलैर्निजदेहहव्यम् ।
जन्मान्तरे विरहदुःखविनाशकामा पुंस्कोकिलाभिहितिमन्त्रपदैर्जुहोति ॥ १६ ॥
प्रभाकरस्य ॥

(551) T. 287 P. 130a (anon) सुभग सुकृतप्राप्यो यद्यप्यसि त्वमसावपि
प्रियसहचरी नाधन्यानामुपैति विधेयताम् ।
तदलमधुना निर्बन्धेन प्रसीद परस्परं
प्रणयमधुरः सद्भावो वां चिराय विवर्धताम् ॥ १७ ॥
वाक्कूटस्य ॥

---

**548** — [b]) T °फेन°; K °फेन्न°. T °मिवात्त-. — [c]) T °नोविद°; K °नोविमोद°. **549** — [a]) S अत्रैव. — [b]) P विख्यातवान् ।. — [c]) S सपुलकं. K च्यूतांकुरैर्. — [d]) P मूद्ध्री च प्रणतः सखी सुमदन-. — [e]) T विम्बोकस्य. **550** — [a]) P प्रियवियोग-. — [b]) P अत्युक्ष्य. — [d]) TKP °भिहितमंत्र-. **551** — [a]) T सुकृतप्रायो. — [c]) P परंपरं.

दोलालोलाः श्वसनमरुतश्चक्षुषी निर्झराभे (552) T. 288 S. 2.34.1 (राजशेखरस्य) P. 130a
तस्याः शुष्यत्तगरसुमनःपाण्डरा गण्डभित्तिः ।
तद्गात्राणां किमिव हि वयं ब्रूमहे दुर्बलत्वं
येषामग्रे प्रतिपदुदिता चन्द्रलेखाप्यतन्वी ॥ १८ ॥

तस्यास्तापभुवं नृशंस कथयाम्येणीदृशस्ते कथम् 553 T. 289 S. 2.31.1 (कस्यचित्) P. 130b (anon)
पद्मिन्याः सरसं दलं विनिहितं यस्याः शमायोरसि ।
आदौ शुष्यति संकुचत्यनु ततश्चूर्णत्वमापद्यते
पश्चान्मुर्मुरतां दधद्दहति च श्वासावधूतं सखीम् ॥१९॥ ↑ K. 41a

उत्पलराजस्य ॥

विषं चन्द्रालोकः कुमुदवनवातो हुतवहः 554 T. 290 S. 2.35.3 P. 130b (anon)
क्षतक्षारो हारः स खलु पुटपाको मलयजः ।
अये किंचिद्वक्रे त्वयि सुभग सर्वे कथममी
समं जातास्तस्यामहह विपरीतप्रकृतयः ॥ २० ॥

अचलसिंहस्य ॥

त्वां चिन्तापरिकल्पितं सुभग सा संभाव्य रोमाञ्चिता ↑ N. 16b 555 T. 291 S. 2.32.1
शून्यालिङ्गनसंवलद्भुजयुगेनात्मानमालिङ्गति ।
किं चान्यद्विरहव्यथाप्रणयिनी संप्राप्य मूर्च्छां चिरात्
प्रत्युज्जीवति कर्णमूलपठितैस्त्वन्नाममन्त्राक्षरैः ॥ २१ ॥

गाढावधःकृतवलित्रितयौ सुसङ्गौ तुङ्गौ स्तनाविति तयोस्तलमार्तमागात् । 556 T. 292
तस्याः स्फुटं हृदयमित्यपि न स्मरेषून्तौ रक्षतः प्रविशतो विमुखोऽथ वा क ॥२२॥

वल्लणस्य ॥

---

**552** — a) P दोलादोलाः. S1 निर्झराव्ये; P निर्ववाते. — b) P शुष्यत्तरल०. S पाण्डुरा. — c) S हि बहु. P दुर्लभत्वं. — d) P प्रतीपत्वसिलता. ○ Vid. B MS. extra after 4 .6; Sab. 5a 3. **553** — a) S °स्तापमहं. — b) P सरसं कुलं. S1 समायोरसि; P समायामपि. — d) S दधाति दहति; P ददद्दहति च. KS °धूतं सखीः. ○ Smk. 44.25; Shv. D. 37a. 108; PG. 357 (शान्तिकरस्य); ŚB. 4.570. **554** — a) T चांद्रालोकः. — c) P किंचिद्वक्र. T lac. from स खलु in b to °लिङ्ग° in b of 555. — e) T lac.; S2.3 अचलनृसिंहस्य. **555** — a) S1 °कल्पितः. — c) TS प्रणयिनीं. ○ Smk. 44.23; Śp. 3487; Sab. 7b. 1. **556** — d) T2 त्वम् (क).

557 T. 293 S. 2.33.2 (वाचस्पतेः) मृगशिशुदृशस्तस्यास्तापं कथं कथयामि ते
दहनपतिता दृष्टा मूर्तिर्मया न हि वैधवी ।
इति तु नियतं नारीरूपः स लोकदृशां प्रियस्
तव शठतया शिल्पोत्कर्षो विधेर्विघटिष्यते ॥ २३ ॥

558 T. 294 S. 2.32.3 पुनरुक्तावधि वासरमेतस्याः कितव पश्य गणयन्त्याः ।
इयमिव करजः क्षीणस्त्वमिव कठोराणि पर्वाणि ॥ २४ ॥
धरणीधरस्य ॥

॥ इति दूतीवचनव्रज्या ॥ १८ ॥

## ॥ ततः संभोगव्रज्या ॥ १९ ॥

559 T. 295 प्रौढप्रेमरसान्नितम्बफलकाद्विश्रंसितेऽप्यंशुके
काञ्चीदाममणिप्रभाभिरनु चारब्धे दुकूलान्तरे ।
कान्तेनाशु मुधा विलोकितमथो तन्व्या मुधा लज्जि↑तं ↑ T. 48b
भूयोऽनेन मुधावकृष्टमथ तत्तन्व्या मुधा संवृतम् ॥ १ ॥

560 P. 130b रूढे रतिव्यतिकरे करणीयशेषमायासभाजि दयिते मुहुरातुरायाः ।
प्रत्यक्षरं मदनमन्थरमर्थयन्त्याः किं किं न हन्त हृदयङ्गमम↑ङ्गनायाः ॥२॥ ↑K. 41b

561 P. 134a (कविशेखरस्य) रतान्तश्रान्तायाः स्तनजघनसंदानितदृशि
स्मरावेशव्यग्रे दवयति दुकूलं प्रणयिनि ।
क्षणं श्रोणौ पाणी क्षणमपि कुचाग्रे प्रियदृशोः
क्षणं विन्यस्यन्त्या जगदपि न मूल्यं मृगदृशः ॥ ३ ॥

562 P. 131a तैस्तैर्विजृम्भितशतैर्मदनोपदेशैर्मुग्धा विधाय ललितानि च तानि तानि ।
अङ्के निलीय कमितुः शिथिलाङ्गमुद्रा निद्राति नाल्पतपसः फलसंपदेषा ॥ ४ ॥

---

**557** — [d]) S1 शठ तथा· ○ Daś. ad 2.29; Srb. p. 289.65. **559** — [a]) T2 विस्रंसिते· — [c]) T सुधाविलोकित-· **560** — [d]) P °मलमंगनाय ॥. **561** — [a]) P रतांते· P °मंदालित-· — [b]) P स्मरावेग-· P दरयति· P मृगदृशि· — [c]) N श्रौणौ· **562** — [b]) P ललितानि· — [c]) P कमितुं शिथिलांक-·

यद्व्रीडाभरभुग्नमास्यकमलं यच्चक्षुरत्युल्लसत्- 563 P. 131a
पक्ष्मश्रेणि यदङ्गमङ्गजमनोराज्यश्रियामाश्रयः ।
यद्वर्धिष्णु मनोभवप्रणयिता यन्मन्दमन्युग्रहस्
तेनैवेह मनो हरत्यधरितप्रौढा नवोढा न किम् ॥ ५ ॥

स स्वर्गादपरो विधिः स च सुधासेकः क्षणं नेत्रयोस् (564) S. 2.139.2 (कस्यापि) P. 134a (?कविशेखरस्य)
तत्साम्राज्यमगञ्जितं तदपरं प्रेम्णः प्रतिष्ठास्पदम् ।
यद्बाला बलवन्मनोभवभयभ्रश्यत्त्रपं सत्रपा
तत्कालोचितनर्मकर्म दयितादभ्यासमभ्यस्यति ॥ ६ ॥

समालिङ्गत्यङ्गैरपसरति यत्प्रेयसि वपुः 565 S. 2.132.3 P. 131a
पिधातुं यद्दृश्यं घटयति घनालिङ्गनमपि ।
तपोभिर्भूयोभिः किमु न कमनीयं सुकृतिनाम्
इदं रम्यं वाम्यं मदनविवशाया मृगदृशः ॥ ७ ॥

इदममृतममेयं सेयमानन्दसिन्धुर्मधुमधुरमपीदं किंचिदन्तर्धुनोति । 566 P. 131a
यदयमुदयलीलालालसानां वधूनां रतिविनिमयभाजां केलिभिर्याति कालः ॥ ८ ॥

कोऽसौ सुन्दरि पुष्पसायकसखः सौभाग्यवारांनिधिः 567 P. 131b (anon)
कोऽसाविन्दुमुखि प्रसन्नहृदयः कः कुम्भिकुम्भस्तनि ।
यस्मिन्विस्मय↑नीयतप्ततपसि स्वैरं समुच्छृङ्खला ↑K. 42a
विश्राम्यन्ति तव स्मरज्वरहराः कन्दर्पकेलिश्रि↑यः ॥९॥ ↑N. 17a
N. प्रद्युम्नस्य ॥

आत्ते वाससि रोद्धुमक्षमतया दोःकन्दलीभ्यां स्तनौ 568 S. 2.140.3 P. 131b (anon)
तस्योरःस्थलमुत्तरीयविषये सद्यो मया सज्जितम् ।

---

**563** cf. 470. — [d]) KP °प्रोढा. **564** — [a]) P सत्यंगादपरो. S2, 3 क्षणान्नेत्र°. — [b]) S1, 2 °मसंचितं; S3 °मर्खडितं; P °मगञ्जितं. — [c]) S °भ्रश्यत्रपं; P त्रस्यत्रपं. KP मात्रया; S1. 2 सत्रपात् (सत्रपा). — [d]) S3 °तादभ्यास°; P °तादभ्यस्य°. **565** — [b]) P घटालिंगन°. — [d]) P बाल्यं (वाम्यं). **566** — [b]) P °मपीयं. P °धिनोति ।. **567** — [a]) K °वारांनिधेः. — [b]) P °कुंभस्थलि ।. — [d]) P विश्रामंति यतस्तवस्मरहराः. P °केलिप्रियः. — [e]) K om. **568** — [a]) P अंते वाससि N दोः स्कन्दलीभ्यां. — [b]) S सख्यो मया चिंतितम् (S1 var. संचितम्) ।. — [c]) P पुनक्रीडां. — [d]) P °मुदधारयन्. — [e]) K एते प्रद्युम्नस्य ॥.

श्रोणीं तस्य करेऽधिरोहति पुनर्व्रीडाम्बुधौ मामथो
मज्जन्तीमुदतारयन्मनसिजो देवः स मूर्च्छागुरुः ॥ १० ॥
वल्लणस्य ॥

(569) P. 124a (शतानन्दस्य) यदेतद्धन्यानामुरसि युवतीसङ्गसमये
समारूढं किंचित्पुलकमिदमाहुः किल जनाः ।
मतिस्त्वेषास्माकं कुचयुगतटीचुम्बकशिला-
निवेशादाकृष्टः स्मरशरशलाकोत्कर इति ॥ ११ ॥
संकर्षणस्य ॥

570 S. 2.130.1 (कर्णोत्पलस्य) P. 131b अङ्गाकृष्टदुकूलया सरभसं गूढौ भुजाभ्यां स्तनाव्
आकृष्टे जघनांशुके कृतमधःसंसक्तमूरुद्वयम् ।
नाभीमूलनिबद्धचक्षुषि मयि व्रीडानताङ्ग्या तया
दीपः स्फूत्कृतवातवेपितशिखः कर्णोत्पलेनाहतः ॥ १२ ॥

571 P. 132a (anon) जिह्रेमि जागर्ति गृहोपकण्ठे सखीजनो वल्लभकौतुकेन ।
तदंशुकाक्षेपमधीरपाणे विमुञ्च काञ्चीमणयो रणन्ति ॥ १३ ॥
महोदधेः ॥

572 T. 296 S. 2.140.1 P. 132a (anon) कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनाद्
वासश्च श्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं नु किं कथमपि स्व↑ल्पापि मे न स्मृतिः ॥१४॥ ↑T. 50a
विकटनितम्बायाः ॥

---

**569** — [c]) P वयं त्वेवं भ्रमः. — [d]) P समावेशाकृष्टः. P इव (इति). ○ ŚB. 3.314. **570** — [a]) S अंसाकृष्ट-; P अंसाहृष्ट-. — [b]) P हृतमधः. — [c]) P °निरुद्ध°. S तया (मयि). S प्रिये (तया). — [d]) S फूत्कृति°. ○ Smk. 77.9 (कर्णोत्पलस्य); Srb. p. 318.15; Śp. 3674 (कर्णोत्पलस्य). **571** — [b]) K वल्लभकंठकेन ।. **572** — [a]) P विलुलिता. — [b]) P °मेखलं विगलितं. — [d]) S1 रतं च किं शखि शपे; S2, 3 रतं च कीदृशमिति. ○ Amś. 101; Śp. 3747 (अमरुकस्य); Sbh. 2147 (अमरुकस्य); Smk. 86.17; Srb. p. 329.21; Skb. 5.44; ŚB. 2.387, 3.201; Daś. ad. 2.17; Rasm. 15; Vetālp. p. 49; Slp. 1.92; Kav. p. 67; KHA. 146; Smv. 17.5; Sl. 8a (रसमंजरी); Amd. 198.

अतिप्रौढा रात्रिर्बहलशिखदीपः प्रभवति 573 T. 297 P. 132a
प्रियः प्रेमारब्धस्मरविधिरसङ्गः परमसौ ।
सखि स्वैरं स्वैरं सुरतमकरोद्व्रीडितवपुर् ↑K. 42b
यतः पर्यङ्कोऽयं रिपुरिव कडत्कारमुखरः ॥ १५ ॥

धन्यासि यत्कथयसि प्रियसंगमेन नर्मस्मितं च वचनं च रसं च तस्य । 574 T. 298 S. 2.140.2 P. 132b
नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥१६॥
विद्यायाः ॥

जयति समरतान्तान्दोलनापाण्डगण्ड- 575 T. 299 P. 132b
स्थलकृतनिजवासस्वेदपूरानुजन्मा ।
श्लथतनुभुजबन्धप्राप्तदीर्घप्रसारो
मुखपरिमलमुग्धः कान्तयोः श्वासवातः ॥ १७ ॥

मनोजन्मप्रौढव्यतिकरशतायासविधिषु (576) T. 300 P. 133a
प्रियः प्रायो मुग्धो झगिति कृतचेतोभवविधिः ।
सहूंकारोज्जृम्भा स्मरपरवशा कान्तविमुखं
मुखं मुग्धापाङ्गं क्षिपति विरसं प्रौढयुवती ॥ १८ ॥

नवनवरहोलीलाभ्यासप्रपञ्चितमन्मथ- 577 T. 301
व्यतिकरकलाकल्लोलान्तर्निमग्नमनस्कयोः ।
अपि तरुणयोः किं स्यात्तस्यां दिवि स्पृहयालुता
मुकुलितदृशोरुद्भिद्यन्ते न चेद्विरहत्विषः ॥ १९ ॥

तस्यापाङ्गविलोकितस्य मधुरप्रोल्लासितार्धभ्रुवस् 578 T. 302
तस्य स्मेरशुचेः क्रमस्य च गिरां मुग्धाक्षराणां ह्रिया ।

---

**573** — [a]) T1 °प्रोढी; T2 प्रौढी; P °प्रोढा· — [b]) P °विधिरसंगः· — [d]) T1 कडुंकौर-; T2 कडुत्कार-; P रटत्काल-· **574** — [a]) S °संगमेपि; P °संगमेथ. — [b]) P च रतिं च· — [c]) P करे तदीये· — [e]) P इति विद्यायाः· ○ Sbh. 2142; Sp. 3746 (विज्जकायाः); Kpk. 62; Kpd. p. 102; Bps. 55; Sd. ad 3.60; SK. 5.188; BIS. 3080 (1309) Kav. p. 67; Sm. 379 (अमरुकस्य); Smk. 86.15 (विज्जाकायाः); Ak. p. 166; Arjunavarman's com. on Amś. 101. **575** — [a]) P समरतन्तोर्ल्लोडना-. TP °पाण्डु°. — [b]) P स्तनहृतनिज-· P °स्वेदपूर्वा-· **576** — [a]) P °करलनापाश-· — [b]) P गमितहृतचेतोद्भवविधिः· — [d]) T2 मुग्धापांगा· T विरसप्रौढ-. **577** — [b]) K °वपुरकयोः·

भावानामपि तादृशां मृगदृशो हावानुगानामहो
नाधन्यः कुरुते प्ररूढपुलकैरातिथ्यमङ्गैर्जनः ॥ २० ॥
मनोविनोदस्यैतौ ॥

579 T. 303 S. 2.130.2 P. 133a
समाकृष्टं ↑ वासः कथमपि हठात्पश्यति मयि ↑ K. 43a
क्रमादूरुद्वंद्वं जरठशरगौरं मृगदृशः ।
तया दृष्टिं दत्त्वा महति मणिदीपे निपुणया
निरुद्धं हस्ताभ्यां झगिति मम नेत्रोत्पलयुगम् ॥ २१ ॥

580 T. 304 P. 133a
अनल्पं संतापं शमयति मनोजन्मजनितं
तथा शीतं स्फीतं हिमवति निशीथे ग्लपयति ।
तदेवं कोऽप्यूष्मा रमणपरिरम्भोत्सवमिलत्-
पुरन्ध्रीनीर↑न्ध्रस्तनकलशजन्मा विजयते ॥ २२ ॥ ↑ N. 17b

581 T. 305 S. 2.134.2 (सोह्लोकस्य) P. 133a (विद्याधरस्य)
नाधन्यान्विपरीतमोहनरसप्रेङ्खन्नितम्बस्थली-
लोलद्भूषणकिङ्किणीकलरवव्यामिश्रकण्ठस्वनम् ।
संरम्भश्लथकेशबन्धविगलन्मुक्ताकलापद्रुत-
श्वासच्छेदतरङ्गितस्तनयुगं प्रीणाति शृङ्गारिणी ॥ २३ ॥
सोन्नोकस्य ॥

582 T. 306 S. 2.139.4 P. 133b
शीत्कारवन्ति दरमीलितलोचनानि रोमाञ्चमुञ्चितनुघर्मकणावलीनि ।
एणीदृशां मकरकेतुनिकेतनानि वन्दामहे सुरतविभ्रमचेष्टितानि ॥ २४ ॥

583 T. 307 P. 133b
मुहुर्व्रीडावत्याः प्रतिहसितवत्याः प्रतिमुहुर्
मुहुर्विश्रान्ताया मुहुरभिनिविष्टव्यवसितेः ।
श्रमाम्भोभिस्तिम्यत्तिलकमलिकाघूर्णदलकं
मुखं लीलावत्या हरति विपरीतव्यतिकरे ॥ २५ ॥
सुरभेः ॥

---

**579** — [a]) S तदा (मयि). — [b]) N जठर-. — [c]) P मणिदीपो. — [d]) P झतिति. S निजनेत्रो°. ○ Smk. 77.5; Srb. p. 318.10; Śp. 3677; Sab. 4.124. **580** — [a]) P जनयति मनो°. — [b]) P श्लथयति ।. — [d]) P पुरंध्रीनां रंध्र-. **581** — [a]) S1 °न्यान्परिवीत-. — [c]) S1 संरंभा-; P संरंभ. S °कलापत्रुटच्; P °कलापं द्रुतं. — [e]) T सोनोकस्य. **583** — [b]) P °व्यवसितैः ।.

आस्तां दूरेण विश्लेषः प्रियामालिङ्गतो मम । 584
स्वेदः किं न सरिन्नाथो रोमाञ्चः किं न पर्वतः ॥ २६ ॥ T. 308 P. 133b

चिरारूढप्रेमप्रणयपरिहासेन हृतया (585) T. 309
तदारब्धं तन्व्या न तु यदबलायाः समुचितम् । S. 2.135.5
अनिर्व्यूढे तस्मिन् प्रकृतिसुकुमाराङ्गलतया (कोङ्कस्य)
पुनर्लज्जालोलं मयि विनिहितं लोचनयुगम् ॥ २७ ॥

नखदशननिपातजर्जराङ्गी रतिकलहे परिपीडिता प्रहारैः ↑ । ↑ K. 43b 586
सपदि मरणमेव सा तु यायाद्यदि न पिबेदधरामृतं प्रियस्य ॥ २८ ॥ T. 310 P. 135b

मुग्धे तवास्मि दयिता दयितो भव त्वमित्युक्तया न हि न हीति शिरोऽवधूय । 587 T. 311
स्वस्मात्करान्मम करे वलयं क्षिपन्त्या वाचं विनाभ्युपगमः कथितो मृगाक्ष्या ॥२९॥ P. 136a

पततु तवोरसि सततं दयिताधम्मिल्लमल्लिकाप्रकरः । 588 T. 312
रतिरसरभसकचग्रहलुलितालकवल्लरीगलितः ॥ ३० ॥ P. 136a

बाणस्य ॥

आवृण्वाना झगिति जघनं मृदुकूलाञ्चलेन 589
प्रेङ्खत्क्रीडाकुलितकबरीबन्धनव्यग्रपाणिः । T. 313 S. 2.136.1
अर्धोच्छ्वासस्फुटनखपदालङ्कृताभ्यां स्तनाभ्यां (राजशेखरस्य) P. 137a
दृष्टा धाष्टर्यस्मृतिनतमुखी मोहनान्ते मया सा ॥ ३१ ॥ (राजशेखरस्य)

अभिनन्दस्य ॥

---

**584** — b) T1KP °लिंगितो. — cd) P किल (किं न). ○ Śp. 3679; Sbh. 2087; Srb. p. 318.1. **585** — a) K हृद्यात् (हृतया). — ab) S पुरारूढप्रेमप्रबलरसरागेण कृ(S3 °हृ°)तया समारूढं(S3 °रब्धं)कर्तुं न हि यदबलाभावसदृशम् ।. ○ Sbh. 2129. **586** — a) P नखदर्पनिपात-. T °जर्जरांगा. — b) P विनिपी[डि]ता. ○ Sbh. 2126 (क्षेमेन्द्रस्य); Smk. 78.20 (क्षेमेन्द्रस्य). **587** — a) P पुरुषो भवन्तम्. — b) P विधूयः ।. — c) K क्षपन्त्यां. — d) K वात्रं किना-. P वादं विना-. ○ Sbh. 2127 (? शशिवर्धनस्य); Śp. 3699; Smk. 79.6; Srb. p. 320.13; Sab. 4.162. **588** — b) K °प्रसरः. — c) P °कुत्रग्रह-. — d) P °तालककवरी-. ○ Sbh. 2120 (भट्टबाणस्य); Śp. 3695 (बाणभट्टस्य); Srb. p. 320.2; Smk. 79.2 (बाणस्य). **589** — a) SP झटिति. — b) S प्रेंखह्लीलालुलित-. P °क्रीडाङ्कलितकवली-. — c) P अर्धग्रासस्फुट-. P कुचाभ्यां. — d) SP धाष्टर्यादवनतमुखी सा मया मोहनांते. ○ Smk. 80.5.

590 T. 314 हरति रतिविमर्दे लुप्तपत्राङ्कुरत्वात्
प्रकटनखपदाङ्कः किं च रोमाञ्चमुद्रः ।
हरिणशिशुदृशोऽस्या मुग्धमुग्धं हसन्त्याः
परिणतशरकाण्डस्निग्धपाण्डुः कपोलः ॥ ३२ ॥

वीर्यमित्रस्य ॥

(591) T. 315 S. 2.136.2 करकिसलयं धूत्वा धूत्वा विमार्गति वाससी
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।
स्थगयति करैः पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षितुम् ॥ ३३ ॥

592 T. 316 P. 136a (? बाणस्य) विश्रान्तिं नूपुरे याते श्रूयते रसनाध्वनिः ।
प्रायः कान्ते रतिश्रान्ते कामिनी पुरुषायते ॥ ३४ ॥

(593) T. 317 S. 2.133.2 P. 136a भावोद्गाढमुपोढकम्पपुलकैरङ्गैः समालिङ्गितं
रागाच्चुम्बितमभ्युपेत्य वदनं पीतं च वक्त्रामृतम् ।
जल्पन्त्यैव मुहुर्न ↑ नेति निभृतं प्रध्वस्तचारित्रया ↑K. 44a
निःशेषेण समापितो रतविधिर्वाचा तु नाङ्गीकृतः ॥ ३५ ॥

(594) T. 318 P. 136b यत्पीनस्तनभारलालसलसद्वासःस्फुरद्गण्डया
तन्वङ्ग्या रभसार्पितं सरभसं वक्त्रं मुहुः पीयते ।
तच्छ्लाघ्यं सुरतं च तत्तदमृतं तद्वस्तु तद्ब्रह्म तच्
चेतोहारि तदेव तत्किमपि तत्त्वान्तरं सर्वथा ॥ ३६ ॥

(595) T. 319 न बत विधृतः काञ्चीस्थाने करः श्लथवाससि
प्रहितमसकृद्दीपे चक्षुर्घनस्थिरतेजसि ।
कुचकलशयोरूढः कम्पस्तया मम संनिधौ
मनसिजरुजो भावैरुक्ता वचोभिरपह्नुताः ॥ ३७ ॥

अभिनन्दस्य ॥

---

**591** — [c]) S करं. T पत्युर्नेत्रं. — [d]) S3 °रीक्षते ॥. ○ Sbh. 2105; Śp. 3706 (अमरुकस्य); Smk. 80.3 (अमरुकस्य); Srb. p. 321.17; Vām. ad 5.2.8. (*a* only); Ssm. 705; KHA. 735; Slp. 1.95; Smv. 18.3. **592** — [a]) T नूपुरे. P जाते (याते). ○ Śp. 3696; Sab. 4.161; Srb. 320.1. **593** — [a]) P °समूढकंप-. — [b]) S °मप्युपेत्य. — [c]) S प्रस्तब्ध-. — [d]) P बत (रत-). **594** — [a]) P °लसद्बाष्प-. — [c]) K तत्तदनृतं. — [d]) T चैतोहारि. P तत्वान्तरे.

हर्षाश्रुदूषितविलोचनया मयाद्य किं तस्य तत्सखि निरूपितमङ्गमङ्गम् । 596 T. 320 S. 2.140.4 (अचलदासस्य) P. 136b (anon)
रोमाञ्चकञ्चुकतिरस्कृतदेहया वा ज्ञातानि तानि परिरम्भसुखानि किं वा ॥ ३८ ॥
अचलस्य ॥

स कस्मान्मे प्रेयान् सखि कथमहं तस्य दयिता (597) T. 321
यतो मां स्पृष्ट्वैव स्नपयति करं स्वेदपयसा ।
विलोक्याश्लेषादप्यवहित इवामील्य नयने
व्युदञ्चद्रोमाञ्चस्थगितवपुरालिङ्गति स माम् ॥ ३९ ॥

किमपि किमपि मन्दं मन्दमासत्तियोगाद् 598 T. 322
अविचलितकपोलं जल्पतोश्च क्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णोर्
अविदितगतयामा रात्रिरेव व्यरंसीत् ॥ ४० ॥
भवभूतेः ॥

दाक्षिण्यादभिमानतो रसवशाद्विश्रामहेतोर्मम 599 T. 323 S. 2.135.4 (महाकवेः)
प्रागल्भ्याद्यदनुष्ठितं मृगदृशा शक्यं न त↑द्योषिताम् ↑ । ↑ K. 44b ↑ N. 18a
निर्व्यूढं न यदा तया तदखिलं खिन्नैस्तरत्तारकैः
सव्रीडैश्च विलोकितैर्मयि पुनर्न्यस्तः समस्तो व्ययः ॥ ४१ ॥

वलितमनसोरप्यन्योन्यं समावृतभावयोः (600) T. 324
पुनरुपचितप्रायप्रेम्णोः पुनस्त्रपमाणयोः ।
इह हि निबिडव्रीडानङ्गज्वरातुरचेतसोर्
नवतरुणयोः को जानीते किमद्य फलिष्यति ॥ ४२ ॥
लक्ष्मी↑धरस्य ॥ ↑ T. 51b

द्रष्टुं केतकपत्रगर्भसुभगामूरुप्रभामुत्सुकस् (601) S. 2.125.3
तत्संवाहनलीलया च शनकैराक्षिप्तचण्डातकः ।
लज्जामुग्धविलोचनस्मितसुधानिर्धौतबिम्बाधरं
कम्पप्रश्लथबाहुबन्धनमसावालिङ्गितो बालया ॥ ४३ ॥

---

**596** — a) S हर्षाश्रुपूरित-. — b) T तत्सुखि. P °मंदमंदम् ।. — c) P रोमांचकं चरति निष्कृतदेहयाच्चा. — e) S1 प्रचल-. **598** — d) T रात्रिरेवं. ◯ Ut. 1.27; Daś. ad 4.63; Smk. 78.21 (भवभूतेः); Bps. 81; ŚB. 3.21; Nāṭ. ad 112. **599** — a) S3 °दतिमाननो. S1.2 °हेतुर्मम. — b) KS प्रागल्भ्यात्तदनु-. S यद्योषिताम् ।. — d) TS भरः (व्ययः). **601** — a) S °गर्भपत्र-. — b) S शनकैरुत्क्षिप्त-. — c) S °विलोचनं. — d) S1.2 lac. S3 किंचिद्विश्लथबाहु-.

602 निद्रार्तं किल लोचनं मृगदृशा विश्लेषयन्त्या कथां
दीर्घापाङ्गसरित्तरङ्गतरलं शय्यामनुप्रेषितम् ।
उज्जृम्भः किल वल्लभोऽपि विरते वस्तुन्यपि प्रस्तुते
घूर्णन्ती किल सापि हूंकृतवती शून्यं सखी दक्षिणा ॥ ४४ ॥

603 S. 2.82.1 (अमरोः) दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
तिर्यग्वर्तितकन्धरां सपुलकस्वेदोद्गमोत्कम्पिनीम्
अन्तर्हासचलत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ ४५ ॥

604 कुचोपान्तं कान्ते लिखति नखराग्रैरकलितं
ततः किञ्चित्पश्चाद्वलति च मुखेन्दौ मृगदृशः ।
बहिर्व्याजामर्षप्रसरपरुषान्तर्गतरसा
निरीक्ष्या रे मायी किमिदमिति पूर्वा विजयते ॥ ४६ ॥
जीवचन्द्रस्य ॥

605 S. 2.119.2 (योगेश्वरस्य) आश्लेषे प्रथमं क्रमादपहृते हृद्येऽधरस्यार्पणे
केलिद्यूतविधौ पणं प्रियतमे कान्तां पुनः पृच्छति ।
अन्तर्गूढविगाढसंभ्रमरसस्फारीभवद्गण्डया
तूष्णीं शारिविसारणाय निहितः स्वेदाम्बुगर्भः करः ॥ ४७ ॥
राजशेखरस्य ↑ ॥ ↑ K. 45a

606 S. 2.119.1 P. 126a आश्लेषचुम्बनरतोत्सवकौतुकानि क्रीडा दुरोदरपणः प्रतिभूरनङ्गः ।
भोगः स यद्यपि जये च पराजये च यूनोर्मनस्तदपि वाञ्छति जेतुमेव ॥ ४८ ॥
मुरारेः ॥

---

**602** — [a]) K कथं. — [c]) K प्रस्थिते. **603** — [a]) S पिधाय (निमील्य). S1.2 °बंधच्छलात्. — [c]) S ईषद्वक्रिम(S3 °त°)कंधरः सपुलकः प्रेमो(S1 °स्नेहो°)ल्लसन्मानसां. — [d]) S °हासलसत्. ○ Amś. 19 Sbh. 2069 (अमरुकस्य); Śp. 3575 (अमरुकस्य); Srb. p. 311.16. Dāś. ad 2.19, 2.52 (अमरुशतके); Sab. 2.40 (अमरकस्य); Kav. p. 47; Kvv. p. 61; Skb. 1.99. 5.370; ŚB. 2.217, 3.108; BIS. 2937 (1235); Māṇikyacandra's com. Saṃketa ad Kpk. (8) 72. Bps. 58; Amd. 191; Sd. ad 3.64, 8.16 (*a* only); Vām. ad 3.2.4; KHA. 99. **605** — [a]) KS3 आश्लेष-; S1.2 आश्लेषः. S क्रमेण विजिते कृत्ये धनस्यार्पणं. — [c]) S °गाढवि(S1 °नि°)गूढमन्मथ-. N °सर- (°रस-). — [d]) S स्वैरं (तूष्णीं). ○ Smk. 75.5 (गोपादित्यस्य); Śp. 3664; Srb. p. 316.6; KHA. 172; Skb. 5.320; ŚB. 2.31, 3.198; Sab. 4.116. **606** — [a]) P आश्लेषचंदन-. — [b]) P °पणं. — [c]) P भोगः समुद्यपि. ○ Anr. 7.115; Śp. 3661 (मुरारेः); Smk. 75.7 (श्रीमुरारेः); Srb. p. 316.2; Ssm. 803.

कलहकलया यत्संवृत्यै त्रपावनताननाः 607
पिहितपुलकोद्भेदं सुभ्रूश्चकर्ष न कञ्चुकम् ।
दयितमभितस्तामुत्कण्ठां विवव्रुरनन्तरं
झटिति तटिति त्रुट्यन्तोऽन्तः स्तनांशुकसन्धयः ॥ ४९ ॥

रतिपतिधनुर्ज्याटङ्कारो मदद्विपडिण्डिमः 608
सपुलकजलप्रेमप्रावृट्पयोधरगर्जितम् ।
निधुवनयुधस्तूर्यातोद्यं जहार नतभ्रुवां
जघनसरसीहंसस्वानः श्रुतिं रसनारवः ॥ ५० ॥

युगलमगलत्तर्षोत्कर्षे तरूत्पलगौरयोः 609
पटुविघटनादूर्वोः पूर्वं प्रिये परिपश्यति ।
श्रुतिकुवलयं दीपोच्छित्त्यै निरास यदङ्गना
ज्वलति रसनारोचिर्दीपे तदाप निरर्थताम् ॥ ५१ ॥

दशनदशनैरोष्ठौ मम्लौ न पल्लवकोमलौ 610
व्यसहत नखच्छेदानङ्गं शिरीषमृदुच्छवि ।
न भुजलतिकागाढाश्लेषैः श्रमं ललिता ययुर्
युवतिषु किमप्यव्याख्येयं स्मरस्य विजृम्भितम् ॥ ५२ ॥

किमुपगमिता भर्त्रा तप्तद्विलोहवदेकताम् 611
उत रमयितुः स्यूताङ्गेऽङ्गे शितैः स्मरसायकैः ।
विलयनमथ प्राप्ता रागानलोष्मभिरित्यहो
न पतिभुजयोर्निष्यन्दान्तः प्रिया निर↑वीयत ॥ ५३ ॥ ↑T. 53a
काश्मीरभट्टश्रीशिवस्वामिनश्चैते ॥ ↑ ↑N. 18b

॥ इति संभोगव्रज्या ॥ १९ ॥

---

**607** — [b]) K °कर्षण-. — [d]) N (?) त्र्युट्यंतो. ○ Kap. 14.10. — [b]) झटिति झटिति; Sbh. 2055. **608** — [c]) N °युधि-. ○ Kap. 14.19. **609** — [d]) K om. 6 letters. ○ Kap. 14.24. **610** — [a]) K °नैरोष्णौ. ○ Kap. 14.28. **611** — [b]) K स्फूताङ्गेऽङ्गे. — [e]) K om. काश्मीर°. ○ Kap. 14.29; Sbh. 2099 (श्रीशिवस्वामिनः). Vrajyā **20** : K °समाप्ति° and om. त्रिह°.

## ॥ ततः समाप्तनिधुवनचिह्नव्रज्या ॥ २० ॥

612 T. 325 S. 2.128.1 (कस्यापि) P. 119*a*, 137*a* (both anon)

राजन्ति कान्तनखरक्षतयो मृगाक्ष्या लाक्षारसद्रवमुचः कुचयोरुपान्ते ।
अन्तःप्रवृद्धमकरध्वजपावकस्य शङ्के विभिद्य हृदयं निरगुः स्फुलिङ्गाः ॥ १ ॥
राजशेखरस्य ॥

613 T. 326 S. 2.128.2 P. 137*a*

जयन्ति कान्तास्तनमण्डलेषु विटार्पितान्यार्द्रन↑खक्षतानि । ↑K. 45*b*
लावण्यसंभारनिधानकुम्भे मुद्राक्षराणीव मनोभवस्य ॥ २ ॥

614 T. 327

क्वचित्ताम्बूलाङ्कः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारैः क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगेष्वलकपतिताकीर्णकुसुमः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥ ३ ॥

615 T. 328 S. 2.128.3 P. 137*b*

पीनतुङ्गकठिनस्तनान्तरे कान्तदत्तमबला नखक्षतम् ।
आवृणोति विवृणोति चेक्षते लब्धरत्नमिव दुःखितो जनः ॥ ४ ॥

616 T. 329 S. 2.141.4 (भवभूतेः) P. 113*b*

उषसि गुरुसमक्षं लज्जमाना मृगाक्षी रतिरुतमनुकर्तुं राजकीरे प्रवृत्ते ।
तिरयति शिशुलीलानर्तनच्छद्मतालप्रचलवलयमालास्फालकोलाहलेन ॥ ५ ॥

(617) T. 330

प्रदोषे दम्पत्योर्निजरुचि विभिन्ने प्रणयिनोर्
विभिन्ने संपन्ने घनतिमिरसंकेतगहने ।
रतौत्सुक्यात्ताम्यत्तरलमनसोः पर्यवसिते
कृतार्थत्वेऽन्योन्यं तदनु विदितौ किं न कुरुताम् ॥ ६ ॥

618 T. 331

पश्यसि नखसंभूतां रेखां वरतनु पयोधरोपान्ते ।
किं वाससा स्तनान्तं रुणत्सि, हिमरुचिकृते वच्मि ॥ ७ ॥

---

**612** — [a]) T1 कांतिनख°. — [b]) NK लाक्ष्या°. P °रुग- (°रस-). P1 °रुपास्ते. — [c]) P2 अन्ते प्ररूढ-. — [d]) NT1 निजगुः; S1 निविशुः. **613** — [b]) P प्रियार्पिता°. ○ Sbh. 1541. **614** — [c]) N भोगेष्वकल°. — [d]) K प्रच्छदपदम्. ○ Amś. 107; Sbb. 2131; Śp. 3700; Sd. ad 3.60; Daś. ad 2.18; Smk. 79.9; Srb. p. 328.14. — [b]) all °चूर्णोद्गारी. **615** — [a]) S2 °गुणांतरे. — [c]) S वीक्षते. — [d]) S निर्धनो; P दुर्गतो (दुःखितो) ○ Sab. 1.106 (*cdab*); Slp. 1.18. **616** — [b]) S1 प्रतिरुत°. P कीरराजे. — [c]) P सुतलीला°. — [d]) P °लीलाकोल्कोला°. **617** — [a]) T निजरुजि. — [d]) T किं नु. **618** — [d]) T1 °कृते वग्मि; T2 °कृतेवाह्वि.

यद्रात्रौ रहसि व्यपेतविनयं दृष्टं रसात्कामिनोर् (619) T. 332
अन्योन्यं शयनीयमीहितरसव्यासिप्रवृत्तस्पृहम् ।
तत्सानन्दमिलदृशोः कथमपि स्मृत्वा गुरूणां पुरो
हासोद्भेदनिरोधमन्थरमिलत्तारं कथंचित्स्थितम् ॥ ८ ॥

किं भूषणेन रचितेन हिरण्मयेन किं रोचनादिरचितेन विशेषकेण । 620 T. 333 P. 138a
आर्द्राणि कुङ्कुमरुचीनि विलासिनीनामङ्गेषु किं नखपदानि न मण्डलानि ॥ ९ ॥

दम्पत्योर्निशि जल्पितं गृहशुकेनाकर्णितं यद्वचः 621 T. 334 S. 2.141.5 (अमरोः) P. 114a
प्रातस्तद्गुरुसंनिधौ निगदतस्तस्यैव तारं वधूः ।
हाराकर्षितपद्मरागशकलं विन्यस्य चञ्चोः पुरो
व्रीडार्ता प्रकरोति दाडिमफलव्याजेन वाग्बन्धनम् ॥ १० ॥ ↑K. 46a

प्रयच्छाहारं मे यदि तव रहोवृत्तमखिलं (622) T. 335 S. 2.141.1 (डिम्बोकस्य) P. 124a (बिम्बोकस्य)
मया वाच्यं नोच्चैरिति गृहशुके जल्पति शनैः ।
वधूवक्त्रं व्रीडाभरनमितमन्तर्विहसितं
हरत्यर्धोन्मीलन्नलिनमलिनावर्जितमिव ॥ ११ ॥

नखक्षतं यन्नवचन्द्रसंनिभं स्थितं कृशाङ्गि स्तनमण्डले तव । 623 T. 336 S. 2.128.4
इदं तरीतुं त्रिवलीतरङ्गिणीं विराजते पञ्चशरस्य नौरिव ॥ १२ ॥

हंहो कान्त रहोगतेन भवता यत्पूर्वमावेदितं 624 T. 337 S. 2.24.1
निर्भिन्ना तनुरावयोरिति मया तज्जातमद्य स्फुटम् ।
कामिन्या स्मरवेदनाकुलदृशा यः केलिकाले कृतः
सोऽत्यर्थं कथमन्यथा दहति मामेष त्वदोष्ठव्रणः ॥ १३ ॥

---

**619** ○ Sbh. 2212 (अमरुकस्य); Śp. 3741 (अमरुकस्य); Srb. p. 328.18; Smk. 82.30; Amś. 150 (from Sbh.). **620** — [b]) P भूषणादि-. — [c]) P अंगानि कुंकुम-. — [d]) T मंडनानि. ○ Sbh. 2165 (भट्टकुमारस्य). **621** — [a]) P निज- (निशि). S जल्पतोर्. — [b]) SP तत्प्रातर्गुरु-. P निगदितस्. SP तस्योपहारं वधूः. — [c]) SP कर्णालंकृत- (S3 °ति-). P °सकलं. SP चंचूपुटे. — [d]) S3 विदधाति. ○ Amś. 16; Śp. 3743; Sbh. 2214; Srb. p. 328.19; Kuv. p. 173; Ak. p. 358; Sab. 4.62 (अमरुकस्य); Ssm. 401; BIS. 2710 (1109); Slp. 1.28; Bps. 60. **622** — [c]) SP वधूर्वक्त्रं. P °विकसितं. — [d]) T °मनिलावर्जित-. ○ Amś. 117; Smk. 77.12. **624** — [b]) S तज्ज्ञातम्. — [c]) S3 °कुलहृदा. — [d]) S तुदति (दहति).

625 T. 338 अभिमुखपतयालुभिर्ललाटश्रमसलिलैरविधौतपत्रलेखः ।
कथयति पुरुषायितं वधूनां मृदितहिमद्युतिदुर्मनाः कपोलः ॥ १४ ॥
मुरारेः ॥

626 T. 339 नखपदवलिनाभीसंधिभागेषु लक्ष्यः
क्षतिषु च दशनानामङ्गनायाः संशेषः ।
अपि रहसि कृतानां वाग्विहीनोऽपि जातः
सुरतविलसितानां वर्णको वर्णकोऽसौ ॥ १५ ॥

627 T. 340 नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ १६ ॥
माघस्यैतौ ॥

628 T. 341 S. 2.128.5 काश्मीरपङ्कखचितस्तनपृष्ठताम्रपट्टावकीर्णदयितार्द्रनखाक्षराली ।
एणीदृशः कुसुमचापनरेन्द्रदत्ततारुण्यशासनमिव प्रकटीकरोति ॥ १७ ॥
दक्षस्य ॥

629 T. 342 अधरः पद्मरागोऽयमनर्घः सव्रणोऽपि ते ।
मुग्धे हस्तः किमर्थोऽयमपार्थ इह दीयते ॥ १८ ॥

630 T. 343 P. 124a (anon) दरम्लानं वासो लुलितकुसुमालंकृति शिरः ↑ N. 19a
श्लथालोकं चक्षुः सरसनखलेखाङ्कितमुरः । ↑ K. 46b
लसत्काञ्चीग्रन्थिस्फुरदरुणरत्नांशु जघनं
प्रियाङ्गोन्मृष्टाङ्ग्या विषमिदमियद्भावकनृणाम् ॥ १९ ॥
वल्लणस्य ॥

(631) T. 344 S. 2.141.2 (मार्जारस्य) P. 138a प्रत्यूषे गुरुसंनिधौ गृहशुके तत्तद्रहोजल्पितं
प्रस्तोतुं परिहासकारिणि पदैरधोंदितैरुद्यते ।

---

**625** — [b]) K °रवधौत-. ◌ Anr. 7.107. — [c]) °रवधृत-. — [d]) द्युतिनिर्मलः; Srb. p. 320,11. **626** ◌ Śiś. 11.29. **627** — [a]) TK द्रवनखपदभंगं (K °मंगं). ◌ Śiś. 11.34; Sbh. 2171 (माघस्य); Daś. ad 2.23, 4.55; Sd. p. 82; At. p. 64; Rasm. 3.5; KHA. 713. **628** — [b]) S1 पर्णावकीर्ण-. S1 °नखक्षतानां; S2.3 °नखक्षताली. — [c]) T °परेंद्र; S1.2 °नवेंद्र-. S3 °दत्ता.— [d]) S1.2 lac. S3 जैत्रप्रशस्तिरिव चित्रलिपिर्विभाति **629** — [a]) T2 अधर-. — [cd]) K किमर्थोऽयमयार्थ. **630** — [d]) P विषमितमियं. **631** — [b]) P नैरुच्यते. — [c]) S1.3 भयार्ता वधूं.

क्रीडाशारिकया निलीय निभृतं त्रातुं त्रपार्तां वधूं
प्रारब्धः सहसैव संभ्रमकरो मार्जारगर्जारवः ॥ २० ॥

तल्पे चम्पककल्पिते सखि गृहोद्यानेऽद्य सुप्तासि किं 632 T. 345
तत्किञ्जल्कचयं न पश्यसि कुचोपान्ते विमर्दारुणम् ।
आः किं छद्मविदग्धमानिनि मयि ब्रूषे पुरोभागिनि
क्रूरैरुल्लिखितास्मि तत्र कुसुमान्युच्चिन्वती कण्टकैः ॥ २१ ॥
सोन्नोकस्य ॥

इतः पौरस्त्यायां ककुभि विवृणोति क्रमदलत्- (633) T. 346
तमिस्रामर्माणं किरणकणिकामम्बरमणिः ।
इतो निष्क्रामन्ती नवरतिगुरोः प्रोञ्छति वधूः
स्वकस्तूरीपत्राङ्कुरमकरिकामुद्रितमुरः ॥ २२ ॥

प्रभाते पृच्छन्तीरनुरहसिवृत्तं सहचरीर् 634 T. 347 P. 138a
नवोढा न व्रीडामुकुलितमुखीयं सुखयति ।
लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयोश्
चमत्कारो गूढं करजपदमासां कथयति ॥ २३ ॥
मुरारेरेतौ ॥

॥ इति समाप्तनिधुवनचिह्नव्रज्या ॥ २० ॥

## ॥ ततो मानिनीव्रज्या ॥ २१ ॥

मानोन्नतेत्यसहनेत्यतिपण्डितेति 635 T. 348 P. 144a
मय्येव धिक्कृतिरनेकमुखी सखीनाम् ।
आकारमात्रमसृणेन विचेष्टितेन
धूर्तस्य तस्य हि गुणानुपवर्णयन्ति ॥ १ ॥
लक्ष्मीधरस्य ॥

---

**633** — [b]) T1K तमिश्रा-. — [c]) K प्रोञ्छित-. ○ Anr. 4.3; Srb. p. 324.39. **634** — [a]) T2 °रहस-. P °रभस-. P सहचरी. — [b]) P सुखयती ।. — [c]) N मणिश°. — [e]) NK मुरारेः (as N om. 633). ○ Anr. 4.6; Srb. p. 328.13; Jayaratha's com. As. p. 76. Vrajyā **21** : T1 माननी°.; K मालिनी°. **635** — [d]) P गुणाननु-. ○ Śp. 3547; Smk. 84.6; Srb. p. 308.5; Śkb. ad 5.178; Sab. 7*a*; ŚB. 4.617, 4.643.

636 T. 349 S. 2.46.1 (अमरोः) P. 144b

वलतु तरला दृष्टादृष्टिः खला सखि मेखला
स्खलतु कुचयोरुत्कम्पान्मे विदीर्यतु कञ्चुकम् ।
तदपि न मया संभाष्योऽसौ पुनर्दयितः शठः
स्फुटति हृदयं मौनेना↑न्तर्न मे यदि तत्क्षणात् ॥ २ ॥ ↑K. 47a

अमरुकस्य ॥

637 T. 350

तदेवाजिह्माक्षं मुखमविषदास्ता गिर इमाः
स एवाङ्गाक्षेपो मयि सरसमाश्लिष्यति तनुम् ।
यदुक्तं प्रत्युक्तं तदपटु शिरःकम्पनपरं
प्रिया मानेनाहो पुनरपि कृता मे नववधूः ॥ ३ ॥

शम्बूकस्य ॥

638 T. 351 S. 2.49.4 (अमरोः)

यदि विनिहिता शून्या दृष्टिः किमु स्थिरकौतुका
यदि विरचितो मौने यत्नः किमु स्फुरितोऽधरः ।
यदि नियमितं ध्याने चक्षुः कथं पुलकोद्गमः
कृतमभिनयैर्दृष्टो मानः प्रसीद विमुच्यताम् ॥ ४ ॥

अमरुकस्य ॥

639 T. 352 S. 2.44.2 (अमरोः)

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरतस्
ताम्बूलारचनच्छलेन रभसाश्लेषक्रमो विघ्नितः ।
संलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
भर्तुः प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ ५ ॥

श्रीहर्षस्य ॥

---

**636** — [a]) P वलयतु चपला दृष्टिः खला· TKS धृष्टा (दृष्टा°). — [c]) S संभाव्योऽसौ; P संभास्योसौ. ○ Sbh. 1575; (अमरुकस्य); Smk. 55.2 (अमरुकस्य); Amś. 146. **637** — [b]) T °समालिंगति· ○ Sbh. 1577; Śp. 3538 (संकुलस्य); Sab. 30a (संकुलस्य); Srb. p. 311.15; ŚB. 4.607, 4.621. **638** — [d]) $S_1$ °नयैर्दुष्टो· ○ Sbh. 1625 (अमरोः); Amś. 149 (from Sbh.). **639** — [b]) S तांबूलानयन-. S °साश्लेषोऽपि संविघ्नितः ।. — [c]) S आलापोऽपि· S तया (°न्तिके). — [d]) S कांतं (भर्तुः). NK °श्चतुरयो· ○ Amś. 18; Smk. 55.6 (अमरानंदस्य, var. पुलिन्दस्य); Sbh. 1583 (पुलिनस्य); Śp. 3534; Srb. p. 358.59; Ssm. 385; Daś. ad 2.19 (अमरुशतके); Skb. 5.436; ŚB. 3.209, 3.348, 3.372, 4.419, 4.583; BIS. 1363 (524); Amd. ad 3.63; Rast. 30; Sd. p. 44; KHA. 702.

यद्वक्त्राभिमुखं मुखं विनिहितं दृष्टिर्धृता चान्यतस् 640 T. 353 S. 2.46.4 (अमरोः) P. 144b
तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ।
हस्ताभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः ॥ ६ ॥

दूरादुत्सुकमागते विचलितं संभाषिणि स्फारितं 641 T. 354 S. 2.50.4 (अमरोः)
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णं क्षणाच्
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ७ ॥
रतिपालस्य ॥

वचोवृत्तिर्मा भूद्गलतु च न वा वक्त्रमभितो (642) T. 355
न नाम स्याद्बाष्पापगमविषदं लोचनयुगम् ।
समाश्वासस्तेन प्रणतशिरसः पत्युरभवत्
प्रिया प्रौढक्रोधाप्यपहृतवती यन्न चरणौ ॥ ८ ॥
बोपालितस्य ॥

किं पादान्ते पतसि विरम स्वामिनो हि स्वतन्त्राः 643 T. 356 S. 2.47.1 (भावदेव्याः) P. 144b
कंचित्कालं क्वचिदपि रतिस्तेन कस्तेऽपराधः । ↑K. 47b
आगस्कारिण्यहमिह यया जीवितं त्वद्वियोगे
भर्तृप्राणाः स्त्रिय इति ननु त्वं मयैवानुनेयः ॥ ९ ॥ ↑N. 19b
वाक्कूटस्य ॥

यद्गम्यं गुरुगौरवस्य सुहृदो यस्मिन् लभन्तेऽन्तरं 644 T. 357 P. 145a
यद्दाक्षिण्यरसाद्भिया च सहसा नर्मोपचाराण्यपि ।

---

**640** — [a]) T2S तद्वक्त्रा°. S विनमितं. S दृष्टिः कृता; P दृष्टिं कृता. K नान्यतस्. — [c]) S हस्ताभ्यामपि वारितः. — [d]) S यांति सहसा. P यत्कुंचुके संयुधः. ○ Amś. 11; Śp. 3535 (अमरुकस्य); Sbh. 1581; Srb. p. 309.12; KHV. 174; SK. 5.319; BIS. 2484 (996); ŚB. 4.616; Smk. 55.5 (अमरुकस्य). **641** — [a]) S1 विवलितं; S3 विकसितं. — [b]) S1, 2 कोपानत-. — [c]) S2, 3 °पूर्णेक्षणं. — [d]) K जाता शशि-. ○ Amś. 49; Srb. p. 358.61; Smk. 55.3 (अमरुकस्य); Śp. 3539; Kpk. 30; Kpd. p. 72, p. 268; KHA. 95; Skb. 5.16; ŚB. 3.119, 4.415, 4.873; Bps. 47; BIS. 2915 (1219); Kav. p. 47; Nāṭ. ad 125. **643** — [a]) P लुठसि (पतसि). — [b]) S3 क्वचिदसि. S रतस्तेन; P बत स्तेन. — [c]) S3P मया (यया). P तद्वियोगे. — [d]) P °वात्मनेयः. ○ Smk. 57.14; PG. 381. **644** — [b]) P सरुषा नर्मोपचारिण्यपि. — [c]) P यल्लज्जां. P सपर्यैर्. ○ Sbh. 1626; Śp. 3561; Smk. 57.30 (अमरुकस्य); Srb. p. 307.67.

यल्लज्जा निरुणद्धि यत्र शपथैरुत्पाद्यते प्रत्ययस्
तत्किं प्रेम स उच्यते परिचयस्तत्रापि कोपेन किम् ॥ १० ॥

645 T. 358 S. 2.46.3 P. 147*b* भ्रूभङ्गो गुणितश्चिरं नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः ।
धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथंचिन्मया
बद्धो मानपरिग्रहः परिकरे सिद्धिस्तु दैवे स्थिता ॥ ११ ॥

धर्मकीर्तेः ॥

646 T. 359 S. 2.47.2 (अमरोः) तथाभूदस्माकं प्रथममविभिन्ना तनुरियं
ततोऽनु त्वं प्रेयानहमपि हताशा प्रियतमा ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥ १२ ॥

भावकदेव्याः ॥

647 T. 360 S. 2.47.5 (अचलस्य) P. 147*b* यदा त्वं चन्द्रोऽभूरविकलकलापेशलवपुस्
तदाहं जातार्द्रा शशधरमणीनां प्रतिकृतिः ।
इदानीमर्कस्त्वं खररुचिसमुत्सारितरसः
किरन्ती कोपाग्नीनहमपि रविग्रावघटिता ॥ १३ ॥

अचलसिंहस्य ॥

648 T. 361 S. 2.47.4 (अमरोः) P. 147*b* कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।

---

**645** — [a]) SP भ्रूभेदो. S रचित°. P °नयोरत्यंत-. — [b]) P मौनेतियोगः. — [d]) S °ग्रहे परिकरः. P दैवस्थिता. — [e]) S1 also adds अमरोः. ○ Amś. 97; Sbh. 1578 (अमरुकस्य); Smk. 55.4 (अमरुकस्य); Srb. p. 358.67; Nami Sādhu ad Rudraṭa 6.46; PG. 231 (अमरोः); BIS. 4649 (2084); Slp. 1.93; SG. 71*a*; ŚB. 3.396, 4.615, 4.633. **646** — [e]) K om. ○ Amś. 69; Sbh. 1622; Śp. 3558 (अमरुकस्य); Srb. p. 313.65; Smk. 57.4 (अमरुकस्य); Pad. p. 55.14 (अमरुकस्य); Kuv. p. 130; KHA. 706; Ssm. 384; BIS. 4142 (1801); Slp. 1.81; SG. 72*a*; cf. ŚB. 4.592, 4.617. **647** — [b]) S तदार्द्रा जाताहं. S प्रकृतिभिः ।. ○ Śp. 3564 (अचलस्य); Srb. p. 309.3; Smk. 57.20 (अचलस्य); Sab. 2.38 (भावमिश्रस्य). **648** — [b]) NT1 दृष्टिपात-; S यत्र दृष्टिः. — [d]) S न च. ○ Sbh. 1630; Śp. 3562 (वामनस्य); Smk. 84.7; Srb. p. 309.6; Daś. ad 2.19 (अमरुशतके); Skb. 5.10; ŚB. 2.388, 3.133, 4.415, 4.596, 4.617; Pad. p. 55.13 (वामनस्य); Ssm. 388; BIS. 1939 (752); Amd.209; Amś. 38.

तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न हि मे मन्युमोक्षः खलायाः ॥ १४ ॥
प्रद्युम्नस्य ॥

शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा 649 T. 362
समाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत्काचक्षे घृतमधुमय त्वन्मृदुवचो-
विषेणाघूर्णन्ती किमपि न सखीयं गणयति ॥ १५ ॥
हिङ्गोकस्य ॥

मुग्धासि नायमपराध्यति मैवमालि केयं रुषा परुषिता लिखिताप्यनेन । 650 T. 363
केलिस्खलद्वसनमुत्पुलकाङ्ग↑भङ्गमुत्तुङ्गपीनकुचमालिखिता त्वमेव ॥ १६ ॥ ↑K. 48a
वीर्यमित्रस्य ॥

पाणौ शोणतले तनूदरि दरक्षामं कपोलस्थलं 651 T. 364 S. 2.48.5 (पाणिनेः)
विन्यस्याञ्जनदिग्धलोचनजलैः किं म्लानिमानीयते ।
मुग्धे चुम्बतु नाम चञ्चलतया भृङ्गः क्वचित्कन्दलीम्
उन्मीलन्नवमालतीपरिमलः किं तेन विस्मर्यते ॥ १७ ॥

कोपः सखि प्रियतमे ननु वञ्चनैव तन्मुञ्च मानिनि रुषं क्रियतां प्रसादः । (652) T. 365
प्राणेश्वरश्चरणयोः पतितस्तवायं संभाष्यतां विकसता नयनोत्पलेन ॥ १८ ॥

बाले, नाथ, विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं, 653 T. 366 S. 2.44.1 (अमरोः) P. 148a (श्रीकुमारिरभट्टस्य)
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥ १९ ॥
कुमारभट्टस्य ॥

---

**649** — [c]) K om. ○ Amś. 109; Sab. 22b; Daś. ad 2.7; PG. 263, BIS. 6357 (2934) Sd. ad 3.37. **650** — [a]) K यथासि (मुग्धासि). $T_1$ सैवमालि-. — [d]) T °कुचमां. **651** — [a]) $S_1$ शोणतमे. T °क्षारं; K °क्षानं; S °क्षामा (क्षामं). S °स्थली. — [b]) S विन्यस्ता°. — [d]) N किंस्तेन. $S_3$ विस्मार्यते. **653** — [c]) P रोदसि गंगदेन. — [d]) $S_2$P कातरा(P °रो°)स्मि. P नास्माद्यतो. — [e]) K कुमारभट्टः (or °ट्टः). ○ Amś. 57; Sbh. 1614 (भट्टकुमारस्य); Śp. 3554 (कुमारदासस्य); Smk. 57.1 (श्रीकुमारदासस्य); Srb. p. 309.7; Sd. ad 3.62; Daś. ad 2.17 (अमरुशतके); Skb. 1.158, 2.347; ŚB. 2.230, 2.286, 4.874; Sab. 30a (कुमारदासस्य); Ananta ad Rasm. p. 42; KHA. 255, 700 (start only); BIS. 4443 (1965); Slp. 1.53; Sl. 13b (अमरग); Amd. 437.

654 T. 367 P. 148a
गतप्राया रात्रिः कृशतनु शशी शीर्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव ।
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥ २० ॥
महोदधेः ॥

655 T. 368 P. 148a
गतो दूरं चन्द्रो जठरलवलीपाण्डरवपुर्
दिशः किंचित्किंचित्तरणिकिरणैर्लोहितरुचः ↑ । ↑ N. 20a
इदं निद्राच्छेदे रसति सरसं सारसकुलं
चकोराक्षि क्षिप्रं जहिहि जहिहि प्रेमलडितम् ॥ २१ ॥

(656) T. 369 S. 2.40.2 (बिम्बोकस्य) P. 148a (डिम्बोकस्य)
मया तावद्गोत्रस्खलितहतकोपान्तरितया
न रुद्धो निर्गच्छन्नयमतिविलक्षः प्रियतमः ।
अयं त्वाकूतज्ञः परिणतिपरामर्शकुशलः
सखीलोकोऽप्यासील्लिखित इव चित्रेण किमिदम् ॥ २२ ॥
T. हिम्बोकस्य ॥

657 T. 370 S. 2.47.3 (अमरोः)
भवतु विदितं कृत्यालापैरलं प्रिय गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथारूढं प्रेम प्रपन्नमिमां दशां
प्रकृतिचपले का नः ↑ पीडा गते हतजीविते ॥ २३ ॥ ↑ K. 485
धर्मकीर्तेः ॥

---

**654** — [a]) P गतः प्रायो॰ P जीर्यंत॰ — [b]) N घूर्णनत ; K घूर्णित ; P घूर्णिन्नित॰ — [c]) P क्रुधवहो॰ ○ Sbh. 1642 (बाणभट्टस्य); Śp. 3713; Smk. 81.3; Srb. p. 306.42; Pad. p. 60.1; Pv. 490; Ssm. 757; Kvv. p. 54; Prab. 109 (भावुक & शालक); Pps. 43 (बाण to his wife); Sab. 21*a* = 4.44; cf. ŚB. 4.415, 4.576, 4.869. **655** — [a]) P चंद्रो जलत्ररवनै॰ — [c]) K रससं ; P विरसं (सरसं)॰ — [d]) P कठिनं प्रेमललितं॥. **656** — [a]) P °कोप्रांतविनया॰ — [c]) P त्वाकूटज्ञः T1P °परामर्ष°. — [d]) K °खितमिव॰ — [e]) K om. ○ Smk. 84.4; ŚB. 3.161. **657** — [a]) S भव्यालापैरलं. — [c]) S तथाभूतं॰ ○ Amś. 30; Jayaratha ad As. p. 5; Smk. 57.6 (धर्मकीर्तेः); Sbh. 1617 (भदन्तधर्मकीर्तेः); Ssm. 387; PG. 223 (अमरोः); BIS. 4554 (2028); SG. 72*a*; ŚB. 4.600.

असद्वृत्तो नायं न च सखि गुणैरेष रहितः 658 T. 371 S. 2.48.2 (कस्यचित्) P. 148*b* (anon)
प्रियो मुक्ताहारस्तव चरणमूले निपतितः ।
गृहाणैनं मुग्धे व्रजतु तव कण्ठप्रणयिताम्
उपायो नास्त्यन्यो हृदयपरितापोपशमने ॥ २४ ॥
K. भट्टहरेः ॥

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृदस् 659 T. 372 S. 2.42.1 (राजशेखरस्य)
त्वयाकाण्डे मानः किमिति शरले प्रेयसि कृतः ।
समाकृष्टा ह्येते विरहदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ २५ ॥
विकटनितम्बायाः ॥

मा रोदीः सखि नश्यदन्धतमसं पश्याम्बरं ज्योत्स्नया 660 T. 373
शीतांशुः सुधया विलिम्पति सखा राज्ञो मनोजन्मनः ।
कः कोपावसरः प्रसीद रहसि स्वेदाम्भसां बिन्दवो
लुम्पन्तु स्तनपत्रभङ्गमकरीः सौधागुरुश्यामलाः ॥ २६ ॥

मा रोदीः करपल्लवप्रणयिनीं कृत्वा कपोलस्थलीं 661 T. 374
मा भाङ्क्षीः परिखेदसाक्षिभिरिव श्वासैर्मुखेन्दोः श्रियम् ।
मुग्धे दग्धगिरः स्खलन्ति शतशः किं कुप्यसि प्रेयसि
प्राणास्तन्वि ममासि नोचितमिदं तद्व्यर्थमुत्ताम्यसि ॥ २७ ॥

यदेतन्नेत्राम्भः पतदपि समासाद्य तरुणी- (662) T. 375
कपोलव्यासङ्गं कुचकलशमस्याः कलयति ।
ततः श्रोणीबिम्बं व्यवसितविलासं तदुचितं
स्वभावस्वच्छानां विपदपि सुखं नान्तरयति ॥ २८ ॥

---

**658** — [c]) P गृहाणैवं. — [d]) S3 °तापापनयने. — [e]) NT om. ○ Sbh. 1607 (अमरुकस्य); Śp. 3552; Smk. 56.10 (भवभूतेः); Srb. p. 308.13;. Amś. 140 (from Sbh.); Any. p. 146.45. **659** — [b]) S3 त्वया कान्ते. — [c]) S3 °दहनोड्डामर-. ○ Amś. 80; Sbh. 1170; Srb. p. 308.14; Smk. 56.9 (वा° or वंकूटस्य); PG. 229 (अमरोः); Slp. 1.99; BIS. 283 (98); ŚB. 4.414. **662** ○ Śp. 1171; Smk. 38.19; Srb.p.51.234; Any.p.144.27.

663 T. 376 S. 2.28.4 पक्ष्मान्तस्खलिताः कपोलफलके लोलं लुठन्तः क्षणं
धारालास्तरलोत्सलत्तनुकणाः पीनस्तनास्फालनात् ।
कस्माद्ब्रूहि तवाद्य कण्ठविगलन्मुक्तावलीविभ्रमं
बिभ्राणा निपतन्ति बाष्पपयसां प्रस्यन्दिनो बिन्दवः ॥ २९ ॥

राजशेखरस्य ॥

(664) T. 377 S. 2.49.5 कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः ↑ कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं ↑ K. 49a
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥ ३० ॥

(665) T. 378 धिग्धिक्त्वामयि केन दुर्मुखि कृतं किं किं न कायव्रतं
द्वित्राण्यत्र दिनानि को न कुपितः को नाभवन्मानुषः ।
स्मः केचिन्न वयं यदेकमपरस्याप्युक्तमाकर्ण्यताम्
अत्युन्माथिनि चन्दनेऽपि नियतं नामाग्निरुत्तिष्ठति ॥ ३१ ॥

वल्लणस्य ॥

(666) T. 379 S. 2.46.5 ($S_1$ अमरोः) स्फुटतु हृदयं कामः कामं करोतु तनुं तनुं
न खलु चटुलप्रेम्णा कार्यं पुनर्दयितेन मे ।
इति सरभसं मानाटोपादुदीर्य वचस्तया
रमणपदवी शारङ्गाक्ष्या सशङ्कितमीक्षिता ॥ ३२ ॥

(667) T. 380 S. 2.50.3 (अमरोः) P. 148b एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतोर्
अन्योन्यं हृदये स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।

---

**663** — [a]) $S_{2.3}$ पक्ष्मांते. — [b]) S °रलोच्छल°. **664** — [c]) S लग्नस्तिरयति च. — [d]) $S_3$ निरनुरोधो. ○ Amś. 81; Sbh. 1627; Srb. p. 306.47; Dhv. ad 2.17; Skb. 5.489; ŚB. 3.96, 3.123, 3.320, 3.393, 4.414, 4.575, 4.590, 4.868; BIS. 1533 (597); Slp. 1.90; Amd. 45; Vkj. 2.100; Nāṭ ad 123. **665** — [a]) K दुर्मदकृतं. — [b]) K वो न. — [c]) $T_1$ कल्हणस्य. **666** — [d]) $S_{2.3}$ सारंगाक्ष्या. K °मीक्षता ॥. ○ Amś. 73; Sbh. 1574 (अर्भकस्य); Srb. p. 357.51; Smk. 55.1 (अमरुकस्य); BIS. 7252 (3316); Slp. 1.84. **667** — [a]) P एतस्मिन्. — [b]) SP अन्योन्यस्य हृदि. K हृदयस्थिते. P संरक्षतो. — [c]) S दंपत्योः शनकैरपांग-. P चक्षुषो. — [d]) S व्यासक्तकंठग्रहः($S_1$ °हं); P व्यावृत्तकः संग्रहः. ○ Amś. 23; Sbh. 2112; Śp. 3715 (अमरुकस्य); Srb. p. 311.22; Smk. 81.8 (अमरुकस्य); KHA. 98; As. ad 82; Sd. ad 3.199; BIS. 1378 (530); Slp. 1.39; Bps. 61; Amd. 105; ŚB. 4.881. Nāṭ ad 112.

पश्चादाकुलयोरपाङ्गवलनान्मिश्रीभवच्चक्षुषोर्
भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहः ॥ ३३ ॥

कन्दर्पकन्दलि सलीलदृशा लुनीहि कोपाङ्कुरं चरणयोः शरणातिथिः स्याम् । 668 T. 381
पश्य प्रसीद चरमाचलचूलचुम्बि बिम्बं विधोर्लवलपाण्डुरमस्तमेति ॥ ३४ ॥

अहो दिव्यं चक्षुर्वहसि तव सापि प्रणयिनी 669 T. 382
पराक्षणामग्राह्यं युवतिषु वपुः संक्रमयति ।
समानाभिज्ञानं कथमितरथा पश्यति पुरो
भवानेकस्तस्याः प्रतिकृतिमयीरेव रमणीः ॥ ३५ ॥
**मनोविनोदस्य ॥**

प्रिये मौनं मुञ्च श्रुतिरमृतधाराः पिबतु मे 670 T. 383 S. 2.49.3
दृशावुन्मील्येतां भवतु जगदिन्दीवरमयम् ।
प्रसीद प्रेमापि प्रशमयतु निःशेषमधृतीर्
अभूमिः कोपानां ननु निरपराधः परिजनः ॥ ३६ ॥
**डिम्बोकस्य ॥**

कोपस्त्वया यदि कृतो मयि पङ्कजाक्षि सोऽस्तु प्रियस्तव किमस्ति विधेयमन्यत् । 671 T. 384 P. 148b
आश्लेषमर्पय ↑ मदर्पितपूर्वमुच्चैरुच्चैः समर्पय मदर्पितचुम्बनं च ॥ ३७ ॥ ↑ K. 49b
**शतानन्दस्य ॥**

सखि कलितः स्खलितोऽयं हेयो नैव प्रणाममात्रेण । 672 T. 385 P. 148b
चिरमनु↑भवतु भवत्या बाहुलताबन्धनं धूर्तः ॥ ३८ ॥ ↑ N. 20b
**गोनन्दस्य ॥**

जाते केलिकलौ कृते कमितरि व्यर्थानुनीतौ चिरान् (673) T. 386
माने म्लायति मन्मथे विकसति क्षीणे क्षपानेहसि ।
मायास्वापमुपेत्य तन्निपुणया निद्रान्ध्यमाचेष्टितं
मानम्लानिरभून्न येन च न चाप्यासीद्रहःखण्डनम् ॥ ३९ ॥

---

**669** — [a]) K °वंदसि· — [b]) T °मग्राङ्कं· — [c]) T °विनोदकस्य· **670** — [a]) T1 lac.; T2 S°धारां· — [c]) T हिम्बोकस्य· **671** — [a]) P हृदि कृतो यदि· ○ Amś. 133; Srb. p. 313.51; Śṛt. 28; Ssm. 747; SK. 5.324. **673** ○ Smk. 81.6.

(674)
T. 387

कथंचिन्नैदाघे दिवस इव कोपे विगलिते
प्रसत्तौ प्राप्तायां तदनु च निशायामिव शनैः ।
स्मितज्योत्स्नारम्भक्षपितविरहध्वान्तनिवहो
मुखेन्दुर्मानिन्याः स्फुरति कृतपुण्यस्य सुरते ॥ ४० ॥

(675)
T. 388
P. 149a

मानव्याधिनिपीडिताहमधुना शक्नोमि तस्यान्तिकं
नो गन्तुं न सखीजनोऽस्ति चतुरो यो मां बलान्नेष्यति ।
मानी सोऽपि जनो न लाघवभयादभ्येति मातः स्वयं
कालो याति चलं च जीवितमिति क्षुण्णं मनश्चिन्तया ॥ ४१ ॥

(676)
T. 389

यावन्नो सखि गोचरं नयनयोरायाति तावद्द्रुतं
गत्वा ब्रूहि यथाद्य ते दयितया मानः समालम्बितः ।
दृष्टे धूर्तविचेष्टिते तु दयिते तस्मिन्नवश्यं मम
स्वेदाम्भःप्रतिरोधिनिर्भरतरस्मेरं मुखं जायते ॥ ४२ ॥

(677)
T. 390
S. 2.83.4

दुष्टा मुष्टिभिराहता हृदि नखैराचोटिता पार्श्वयोर्
आकृष्टा कबरीषु गाढमधरे सीत्कुर्वती खण्डिता ।
त्वत्कृत्यं त्वदगोचरेऽपि हि कृतं सर्वं मयैवाधुना
मामाज्ञापय किं करोमि सरले भूयः सपत्न्यास्तव ॥ ४३ ॥

678
T. 391
S. 2.50.5
(अमरोः)
P. 149a

सुतनु जहिहि मौनं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या ↑ K. 50a
नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥ ४४ ॥

(679)
T. 392
S. 2.50.2
P. 149b

चेतस्यङ्कुरितं विकारिणि दृशोर्द्वन्द्वे द्विपत्रायितं
प्रायः पल्लवितं वचःस्वपरताप्रत्यायमानादिषु ।

---

**675** — b) P बलान्वेष्यति. — c) P लाघवतया लभ्येति. — d) P जीवितमपि. ○ Sbh. 1160 (अमरुकस्य); Śp. 3542; Srb. p. 309.10; Ssm. 433. **676** ○ Sbh. 1163 (बुद्धकस्य); Smk. 55.10 (वर्धकस्य); ŚB. 4.584. **677** — a) S दृष्टा (दुष्टा). — d) T2 शरले. **678** — a) SP कोपं (मौनं). — b) P कदापि. — c) T1 °मीलिताक्षी. ○ Amś. 39; Sbh. 1600; Śp. 3577; Smk. 57.33 (अमरुकस्य); Srb. p. 311.13; BIS. 7102 (3267); Slp. 1.46; Sd. p. 98; cf. SK 5.12 (*a* only). **679** — a) S विसारिणि. P विकाशिनि दृशो द्वंद्वेपि. — b) S वचस्युपचितं प्रौढं कपोलस्थले; P वचस्त्वपरता यद्यापमानादिषु. — d) S3 मानिन्यां. S1 मानतरुणी-.

तत्तत्कोपविचेष्टिते कुसुमितं पादानते तु प्रिये
मानिन्याः फलितं न मानतरुणा पर्यन्तवन्ध्यायितम् ॥ ४५ ॥
राजशेखरस्य ॥

कियन्मात्रं गोत्रस्खलितमपराधश्चरणयोश् (680) T. 393 S. 2.48.1 (मनोकस्य)
चिरं लोठत्येष ग्रहवति न मानाद्विरमसि ।
रुषं मुञ्चामुञ्च प्रियमनुगृहाणायतिहितं
शृणु त्वं यद्ब्रूमः प्रियसखि नखं मा कुरु नदीम् ॥ ४६ ॥

दैवादयं यदि जनो विदितोऽपराधी दासोचितैः परिभवैरयमेव शास्यः । (681) T. 394 P. 149a
एषा कपोलफलकेऽगरुपत्रवल्ली किं पीड्यते सुतनु बाष्पजलप्रणालैः ॥ ४७ ॥

कृत्वागः स च नागतोऽपि किमपि व्यक्तं मनो मन्यते (682) T. 395
तत्कासे कमुपैमि जङ्गमवने को मामिहाश्वासयेत् ।
इत्युक्त्वाश्रुगलन्मुखी विटसखी ध्वस्ता विशन्ती गृहं
धन्येनाधिमुपाश्रुणोरसि कृतात्यन्तं प्रिया रोदिता ॥ ४८ ॥
वल्लणस्य ॥

कपोलं पक्ष्मभ्यः कलयति कपोलात्कुचतटं 683 T. 396 S. 2.28.5 (नरसिंहस्य)
कुचान्मध्यं मध्यान्नवमुदितनाभीसरसिजम् ।
न जानीमः किं नु क नु कियदनेन व्यवसितं
यदस्याः प्रत्यङ्गं नयनजलबिन्दुर्विहरति ॥ ४९ ॥

विकिर नयने मन्दच्छायं भवत्वसितोत्पलं (684) T. 397
वितर दयिते हासज्योत्स्नां निमीलतु पङ्कजम् ।
वद सुवदने लज्जामूका भवन्तु शिखण्डिनः
परपरिभवो मानस्थानैर्न मानिनि सह्यते ॥ ५० ॥

---

**680** — [a]) S °स्खलनमपराद्ध°. — [b]) S1 लोचल्येष; S2 नोठत्येष. S2 प्रहरति न. — [d]) S न माने कुरु मतिम् ॥. T2 मुखं (नखं). **681** — [c]) P [ऽ] गुरु°. — [d]) P सुमुखि बाष्पकणावलीभिः ॥. **682** — [cd]) T lac. विस (श)......रसि°. — [c]) K विसन्ती°. — [d]) K °मुपश्रुणो°. **683** — [a]) S1 करप्राणात् (कपोलात्; hypermetric !) S स्तनतटं°. — [b]) S स्तनान्नाभिं नाभेर्घनजघनमेत्य प्रतिमुहुः ।. — [c]) T1 lac. T2 S1 क्व सुकृतमनेन; S2. 3 क नु कृतमनेन.

(685) T. 398 S. 2.24.2 (सोह्णोकस्य) P. 149a. (कृष्णमिश्रस्य)

अयं धूर्तो मायाविनयमधुरादस्य चरितात्
सखि प्रत्यूषि त्वं प्रकृतिसरले पश्यसि न किम् ।
कपोले यल्लाक्षारसबहलरागप्रणयिनीम्
इमां धत्ते मुद्रामनतिचिरवृत्तान्तपिशुनाम् ॥ ५१ ॥ ↑ K. 50b

(686) T. 399

अप्राप्तकेलिसुखयोरतिमानरुद्धसंधानयो रहसि जातरुषोरकस्मात् ।
यूनोर्मिथोऽभिलषतोः प्रथमानुनीतिं भावाः प्रसादपिशुनाः क्षपयन्ति निद्राम् ॥५२॥

सोन्नोकस्यैतौ ॥

(687) T. 400 S. 2.42.3

श्रवसि न कृतास्ते तावन्तः सखीवचनक्रमाश्
चरणपतितोऽङ्गुष्ठाग्रेणाप्ययं न हतो जनः ।
कठिनहृदये मिथ्यामौनव्रतव्यसनादयं
परिजनपरित्यागोपायो न मानपरिग्रहः ॥ ५३ ॥

(688) T. 401 S. 2.45.1 (वैद्यधनस्य)

न मन्दो वक्त्रेन्दुः श्रयति न ललाटं कुटिलता
न नेत्राब्जं रज्यत्यनुषजति न भ्रूरपि भिदाम् ।
इदं तु प्रेयस्याः प्रथयति रुषोऽन्तर्विकसिताः
शतेऽपि प्रश्नानां यदभिदुरमुद्रोऽधरपुटः ॥ ५४ ॥

वैद्यधन्यस्य ॥

(689) T. 402

तत्तद्वदत्यपि यथावसरं हसत्यप्यालिङ्गनेऽपि न निषेधति चुम्बनेऽपि ।
किं तु प्रसादनभयादतिनिह्नुतेन कोपेन कोऽपि निहितोऽद्य रसावतारः ॥ ५५ ॥

महाव्रतस्य ॥

(690) T. 403

आश्लेषेण पयोधरप्रणयिनीं प्रत्यादिशन्त्या दृशं
दृष्ट्वा चाधरबद्धतृष्णमधरं निर्भर्त्सयन्त्या मुखम् ।
ऊर्वोर्गाढनिपीडनेन जघने पाणिं च रुद्धानया
पत्युः प्रेम न खण्डितं निपुणया मानोऽपि नैवोज्झितः ॥ ५६ ॥

---

**685** — [a]) S °मधुवा($S_3$ रा)दस्य वचसः. — [b]) $T_1$ प्रत्यैषि; $T_2$SP प्रत्येषि, P प्रकृतिमरणे. — [c]) $T_1S_1$ °लाक्ष्या°. S °बहलरस°. T °भागप्रणायिणीम्. — [e]) $S_3$ सोल्होकस्य ॥. **686** — [b]) K °सत्वानयो. — [c]) $T_1$ °लषितोः. — [e]) K om. एतौ. **687** — [c]) $S_{1.2}$ मिथ्यासौ न. — [d]) $S_{1.2}$ °पायोऽवमान°. **688** — [a]) S कुटिलतां. — [b]) $S_1$ रक्षत्यनुसजति. — [c]) S °विलसितं. — [e]) K °धरस्य; $S_{2.3}$ °धनस्य. **689** — [c]) K °भयादिति. ○ Śp. 3536; Srb. p. 357.47. **690** — [b]) K °बद्धदृष्ट°. — [c]) T रुन्धानया.

दीर्घोच्छ्वासविकम्पिताकुलशिखा यत्र प्रदीपाः कुले (691) T. 404
दृष्टिर्यत्र च दीर्घजागरगुरुः कोपे मदीये तव ।
विस्रम्भैकरसप्रसादमधुरा यत्र प्रवृत्ताः कथास्
तान्यन्यानि दिनानि मुञ्च चरणौ सैवाहमन्यो भवान् ॥ ५७ ॥

परीरम्भारम्भः स्पृशति परमिच्छां न तु भुजौ (692) T. 405
भजन्ते विज्ञानं न तु गिरमनूरोधविधयः ।
मनस्विन्याः स्वैरं प्रसरति निशासीमसमये
मनः प्रत्यावृत्तं क↑मितरि कथंचिन्न तु वपुः ॥ ५८ ॥ ↑K. 51a
चक्रपाणेः ॥

अद्योद्यानगृहाङ्गणे सखि मया स्वप्नेन लाक्षारुणः (693) T. 406
प्रोत्क्षिप्तोऽयमशोकदोहदविधौ पादः क्वणन्नूपुरः ।
तावत्किं कथयामि केलिपटुना निर्गत्य कुञ्जोदराद्
अज्ञातोपनतेन तेन सहसा मूर्ध्नैव संभावितः ॥ ५९ ॥
मधुकूटस्य ॥

सखि स सुभगो मन्दस्नेहो मयीति न मे व्यथा (694) T. 407 S. 2.41.1 (अमरोः)
विधिपरिणतं यस्मात्सर्वो जनः सुखमश्नुते ।
मम तु हृदये संतापोऽयं प्रिये विमुखेऽपि यत्
कथमपि हतव्रीडं चेतो न याति विरागिताम् ॥ ६० ॥

भ्रूभेदे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते (695) T. 408 S. 2.46.2 (अमरोः) P. 149b
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥ ६१ ॥

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया (696) T. 409
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्यात्मना ।

---

**694** — [b]) S विधिविरचितं. — [c]) S तु मनसः. S जने (प्रिये). ○ Sbh. 1118; ŚB. 4.635; 4.643. **695** — [a]) KS1 °मुद्वीक्ष्यते. — [c]) P रोमांचमालं वरे. ○ Amś. 28; Sbh. 1580 (भदन्तारोग्यस्य); Smk. 55.8 (भदन्तारोग्यस्य); Śp. 3540 (भदन्तवर्मणः); Srb. p. 359.99; Ssm. 768; Slp. 1.44; Sd. p. 81; SK. 5.318; BIS. 4648 (2083); ŚB. 4.596, 4.622. **696** ○ Vām. ad 3.2.15; Kpk. 99; Kpd. p. 122; KHV. 444; Amd. 264; ŚB. 4.877.

तावत्प्रत्युत पाणिसंपुटलसन्नीवीनिबन्धं धृतो
धावित्वेव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥ ६२ ॥

(697) T. 410 S. 2.179.3 (अमरोः)
गते प्रेमाबन्धे हृदयबहुमाने विगलिते
निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतास्ते च दिवसा
न जाने को हेतुः स्फुटति शतधा यन्न हृदयम् ॥ ६३ ॥

698 T. 411 P. 149b (दासवरस्य)
सुतनु नितम्बस्तव पृथुरक्ष्णोरपि नियतमर्जुनो महिमा ।
मध्यः सवलिरिदानीं मान्धाता कुचतटः क्रियताम् ॥ ६४ ॥
दामोदरस्य ॥

(699) T. 412 S. 2.50.1
दृष्टे लोचनवन्मनाङ्मुकुलितं चाग्रे गते वक्त्रवन्
न्यग्भूतं बहिरास्थितं पुलकवत्संस्पर्शमातन्वति ।
नीवीबन्धवदागतं शिथिलतामाभाषमाणे ततो
मानेनापसृतं ह्रियेव सुदृशः ↑ पादस्पृशि प्रेयसि ॥६५॥ ↑ K. 51b

॥ इति मानिनीव्रज्या ॥ २१ ॥

## ॥ ततो विरहिणीव्रज्या ॥ २२ ॥

700 T. 413
तापस्तत्क्षणमाहितासु बिसिनीष्वङ्गारकारायते
बाष्पः पाण्डुकपोलयोरुपरि वै कुल्याम्बुपूरायते ।
किं चास्या मलयद्रुमद्रवभरैर्लिम्पामि यावत्करं
तावच्छ्वाससमीरणव्यतिकरैरुद्धूलिरासीत्करः ॥ १ ॥
अच्युतस्य ॥

---

**697** — [a]) S प्रणयबहुमाने. — [c]) T2 S गतांस्तांश्च दिवसान्. — [d]) S हेतुर्दलति. ○ Amś. 43. Sbh. 1141 (विज्जाकायाः); Śp. 3545 (अमरुकस्य); Srb. p. 287.7; Smk. 84.1 (अमरुकस्य); Slp. 10.14; Smv. 14.7; BIS. 2071 (817); JSV. 229.1. **698** — [b]) P संमार्जनो (नियतमर्जुनो). — [c]) P मध्यः सरनि-. — [d]) K ह्रियताम् ॥. **699** — [a]) S पार्श्वस्थिते (चाग्रे गते). — [b]) S बहिरासितं. S °त्स्पर्शं समातन्वति. — [c]) S °लतां संभाष°. T1 K तत्ततो (ततो). ○ Sp. 3581; Skb. 5.15, 5.496; Smk. 58.2; Sab. 30*a*; Srb. p. 311.21; KHA. 119; Amś. 160 (from Smk.) Amd. 231; ŚB. 2.177, 2.196, 2.394, 3.136, 4.622, 4.867. **700** — [b]) T1 वैपुल्याक्षु°; T2 वैपुल्यात्कु°.

देवेन प्रथमं जितोऽसि शशभृल्लेखाभृतानन्तरं 701 T. 414 S. 2.103.2 (विद्यायाः) P. 138b
बुद्धेनोद्धतबुद्धिना स्मर ततः कान्तेन पान्थेन मे ।
त्यक्त्वा तान्बत हंसि मामतिकृशां बालामनाथां स्त्रियं
धिक्त्वां धिक्तव पौरुषं धिगुदयं धिक्कार्मुकं धिक्छरान् ॥ २ ॥
श्रीराज्यपालस्य ॥

कर्णे यन्न कृतं सखीजनवचो यन्नादृता बन्धुवाक् 702 T. 415 S. 2.40.1 (अमरोः) P. 138b
यत्पादे निपतन्नपि प्रियतमः कर्णोत्पलेनाहतः ।
तेनेन्दुर्दहनायते मलयजालेपः स्फुलिङ्गायते
रात्रिः कल्पशतायते बिसलताहारोऽपि भारायते ॥ ३ ॥

आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा 703 T. 416 S. 2.25.2 (राजशेखरस्य) P. 138b
नासाग्रे नयनं यदेतदपरं यच्चैकतानं मनः ।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते
तद्ब्रूयाः सखि योगिनी किमसि भोः किं वा वियोगिन्यसि ॥ ४ ॥

वत्से नैते पयोदाः सुरपतिकरिणो नो बकाः कर्णशङ्खाः 704 T. 417 P. 139a
सौदामिन्योऽपि नैताः कनकमयमिदं भूषणं कुम्भपीठे ।
नैतत्तोयं नभस्तः पतति मदजलं श्वासवातावधूतं
तत्किं मुग्धे वृथा त्वं मलिनयसि मुखं प्रावृडित्यश्रुपातैः ॥ ५ ॥

नाकानोकहसंभवैः सखि सुधाच्योतल्लवैः पल्लवैः 705 T. 418
पल्यङ्कं क्षणमात्रमास्तृणु विधुं गण्डोपधानीकुरु ।
नो चेत्स्नेहरसावसेकविकसज्ज्वालावलीदारुणो
दारूणीव न मे विरंस्यति दहन्नङ्गान्यनङ्गानलः ॥ ६ ॥
चक्रस्य ॥

---

**701** — a) S1 जितोऽपि. — b) K बुद्धेनोन्नत-. P बुद्धेनोद्दत-. P प्रांतेन मे. — c) P त्यक्त्वैतान्. — d) K पौरुषं. — e) N om. श्री. **702** S3 °हता बांधवा. — d) P विचलता-. S1 हारायते. ○ Slp. 10.92. **703** — a) K निवृत्तः. — d) S1 यद्ब्रूयाः ○ Sbh. 3485; Śp. 3423 (राजशेखरस्य); Smk. 39.3 (राजशेखरस्य); Srb. p. 286.25; Sd. ad 4.11; Skv. ad 4.9 (p. 53); Skb. 4.73; ŚB. 3.78; Shv. D. 32a.47 (राजशेखरस्य); PG. 238; Uj. p. 370.72 (पद्यावल्यां); Ssm. 523; Amd. 682; BIS. 1079 (3740). **704** — b) P नैते. — c) K नभस्थः. — d) K प्रावृति°; P प्रावृजि°. ○ Shv. C. 348; At. pp 39-40. **705** — a) K नाकालोक°. — c) K °रसावसेव.

706 T. 419 असौ गतः सौगत एव यस्मात्कुर्यान्निरालम्बनतां ममैव । ↑ K. 52a
सखि प्रियस्ते क्षणिकः किमन्यन्निरात्मकः शून्यतमः स वन्द्यः ॥ ७ ॥

भोज्यदेवस्य ॥ ↑ N. 21a

707 T. 420 पूर्णं कपोलतलमश्रुजलैर्यदस्या यद्धूसरं वदनपङ्कजमायताक्ष्याः ।
अर्धावदग्धगलदङ्गरसावसिक्तमार्द्रेन्धनं तदिव भस्मकणानुयातम् ॥ ८ ॥

(708) T. 421 अयं धारावाहस्तडिदियमियं दग्धकरका
स चायं निर्घोषः स च रववशो भेकनिचयः ।
इतीव प्रत्यङ्गप्रथितमदनाग्निं कृशतनुर्
घनश्वासोत्क्षेपैर्ज्वलयति मुहुर्मृत्युवशिनी ॥ ९ ॥

(709) T. 422 P. 1605 (श्रीहर्षस्य) परिम्लानं पीनस्तनजघनसङ्गादुभयतस्
तनोर्मध्यस्यान्तः परिमलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥ १० ॥

710 T. 423 मनोरागस्तीव्रं व्यथयति विसर्पन्नविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ ११ ॥

(711) T. 424 S. 2.33.3 (योगेश्वरस्य) एतस्या विरहज्वरः करतलस्पर्शैः परीक्ष्यो न यः
स्निग्धेनापि जनेन दाहभयतः प्रस्थंपचः पाथसाम् ।
निःशक्तीकृतचन्दनौषधिविधावस्मिंश्चमत्कारिणो
लाजस्फोटममी स्फुटन्ति मणयो विश्वेऽपि हारस्रजाम् ॥ १२ ॥

---

**706** — c) T श्रीभोज्य-. K श्रीभोज-. **709** — a) P परिम्लानः. P °संज्ञानुभयतस्. — c) K व्यस्तं न्यासं. P वस्त्रन्यास-. P °वलनात्. ○ Rat. 2.12; Śp. 3401 (श्रीहर्षस्य); Smk. 38.18 (श्रीहर्षस्य); Kpk. 349; Kpd. p. 284; Dhv. ad 1.17; Kuv. ad 67; Auc. ad 11 (श्रीहर्षस्य); Shv. D 34b.69 (रत्नावलीतः); Slp. 3.88; Srb. p. 275.27; Pad. p. 40.8 (कालिदासस्य); Amd. 530; ŚB. 2.466, 3.212. **710** ○ Māl. 2.1; Srb. p. 284.27; Kpk. 343; Kpd. ad 8.2; KHA. 129; Amd. 497; ŚB. 3.67, 4.566. **711** — a) S1 एतस्यां. S स्मरसंज्वरः. S परीक्ष्योऽद्य न. — c) S निर्बीजीकृत-. S °विधौ तास्मिंश्चट(S1 च)त्कारिणो. ○ Bāl. 5.11; Smk. 38.21 (राजशेखरस्य); Auc. ad 14; Shv. D. 33b.59 (राजशेखरस्य).

यत्ताडीदलपाकपाण्डु वदनं यन्नेत्रयोर्दुर्दिनं (712) T. 425 S. 2.25.3
गण्डः पाणिनिषेवणाच्च यदयं संक्रान्तपञ्चाङ्गुलिः ।
गौरी क्रुध्यतु वर्तते यदि न ते तत्कोऽपि चित्ते युवा
धिग्धिक्त्वां सहपांशुखेलनसखीलोकेऽपि यन्निह्नवः ॥ १३ ॥

राजशेखरस्यैतौ ॥

केयूरीकृतकङ्कणावलिरसौ कर्णान्तिकोत्तंसित- (713) T. 426 S. 2.60.2 (राजशेखरस्य) P. 139a
व्यालोलालकपद्धतिः पथि पुरोबद्धाञ्जलिः पृच्छति ।
यावत्किञ्चिदुदन्तमात्मकमितुस्तावत्स एवेत्यथ ↑ K. 52b
व्रीडावक्रितकण्ठनालमबला कैः कैर्न भिन्ना रसैः ॥ १४ ॥

प्रियविरहमहोष्मामर्मरामङ्गलेखाम् (714) T. 427 S. 2.102.2 (राजशेखरस्य)
अपि हतक हिमांशो मा स्पृश क्रीडयापि ।
इह हि तव लुठन्तः प्लोषपीडां भजन्ते
दरजठरमृणालीकाण्डमुग्धा मयूखाः ॥ १५ ॥

यद्दौर्बल्यं वपुषि महती सर्वतश्चास्पृहा यन् 715 T. 428 S. 2.25.5
नासालक्ष्यं यदपि नयनं मौनमेकान्ततो यत् ।
एकाधीनं कथयति मनस्तावदेषा दशा ते
कोऽसावेकः कथय सुमुखि ब्रह्म वा वल्लभो वा ॥ १६ ॥

लक्ष्मीधरस्य ॥

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा 716 T. 429
कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुराम्
इयं नः कल्याणी रमयति मतिं कम्पयति च ॥ १७ ॥

भवभूतेः ॥

---

**712** — [a]) K यत्तालीवन-; $S_3$ यत्तालीदल-. — [d]) S °सखीवर्गे. — [e]) K om एतौ. ○ Vid. 2.14; Srb. p. 286.26; Smk. 39.2 (राजशेखरस्य); Sab. 3.24 (राजशेखरस्य); ŚB. 2.17, 4.555. **713** — [a]) S कर्णावतंसीकृत-; P कर्णेऽर्पितोत्तंसित-. — [b]) $T_2$ °पक्षतिः. K पति (पथि). — [d]) K °वक्रितकंपनाल-. ○ Smk. 54.10( राजशेखरस्य). ŚB. 3.51, 4.721, 4.824. 4.887. **714** — [a]) S महौष्म्या($S_2$ ष्णा)न्मुर्मुरा°. $S_3$ °मर्मलेखां. — [b]) $S_3$ अयि (अपि), which seems better. — [c]) $S_{1.3}$ प्रोषभारं; $S_3$ प्लोषभावं. — [d]) $S_1$ (orig.) °मुग्धकाण्डा. K मयूषाः- ○ Vid. 3.23; Srb. p. 285.48; ŚB. 4.692. **715** — [b]) $KS_1$ नासालक्षं. **716** ○ Māl. 2.3. — [d]) मनः (मतिं); Srb. p. 276.34; Skb. 4.136; ŚB. 3.36, 4.555; Ak. p. 324.

717 T. 430 S. 2.60.3 निद्रे भद्रमवस्थितासि कुशलं संवेदने किं तव
क्षेमं ते सखि निर्वृते ननु समं कान्तेन यूयं गताः ।
किं चान्यत्प्रियसंगमेऽद्य चलितो गच्छन्विपद्वत्सलो
मूर्च्छाविस्मृतवेदनापरिजनो दृष्टोऽस्मदीयो न वा ॥ १८ ॥

अरविन्दस्य ॥

718 T. 431 S. 2.53.1 (महोदधेः) P. 139a मध्येसद्म समुद्गता तदनु च द्वारान्तरालं गता
निर्याताथ कथंचिदङ्गणमपि प्रेयांस्तु नालोकितः ।
हंहो वायस राजहंस शुक हे हे शारिके कथ्यतां
का वार्त्तेति मृगीदृशो विजयते बाष्पान्तरायं वचः ॥ १९ ॥

चित्राङ्गस्य ॥

719 T. 432 दरदलितहरिद्राग्रन्थिगौरे शरीरे स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः ।
बलवति सति यस्मिन् सार्धमावर्त्य हेम्ना रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि २०

राजशेखरस्य ॥

720 T. 433 P. 139b (anon) प्रिये प्रयाते हृदयं प्रयातं निद्रा गता चेतनया सहैव ।
निर्लज्ज हे जीवित न श्रुतं किं महाजनो येन गतः स पन्थाः ॥२१॥ ↑K. 53a

धर्मकीर्तेः ॥

(721) T. 434 बाष्पं चक्षुषि नाञ्जनं करतले वक्त्रं न लीलाम्बुजं
गण्डे पाण्डरिमा न पत्रमकरी श्वासा मुखे न स्मितम् ।
इत्थं यस्य वियोगयोगविधुरं मुग्धे तवेदं वपुर्
नो जाने कतमः स पुष्पधनुषा नीतः प्रसादश्रियम् ॥ २२ ॥

भ्रमरदेवस्य ॥

722 T. 435 P. 139b कस्मादिदं नयनमस्तमिताञ्जनश्रि विश्रान्तपत्ररचनौ च कुतः कपोलौ ।
शृङ्गारवारिरुहकाननराजहंसि कस्मात्कृशासि विरसासि मलीमसासि ॥ २३ ॥

विष्णुहरेः ॥

---

**717** — [c]) S °संगमेन. — [d]) S °विस्मृति-. — [e]) T1 आरविन्दस्य. **718** — [a]) S मध्येवेश्म. — [b]) S °दंगणभुवं; P °दंगणभुवः. — [c]) P वायसि राजहंसि शुकि. SP सारिके. — [d]) S बाष्पांबुगर्भं; P बाष्पांतरालं. ○ ŚB. 4.722. **719** ○ Vid. 3.17; Kkk. ad 5.1; Srb. p. 275.23. **720** — [b]) P लज्जा गता. — [c]) P हे प्राण कथं न यासि. **721** — [a]) T बाष्पश्चक्षुषि. K लीनांबुजं. **722** — [e]) K विष्णुदासस्य.

अरतिरियमुपैति मां न निद्रा गणयति तस्य गुणान्मनो न दोषान् । 723
विगलति रजनी न संगमाशा व्रजति तनुस्तनुतां न चानुरागः ॥ २४ ॥ T. 436 S. 2.37.5

प्रवरसेनस्य ॥

असावहं लोहमयी स यस्याः क्रूरः सखि प्रस्तर एष कान्तः । 724
आकर्षकद्रावकचुम्बकेषु नैकोऽप्यसौ भ्रामक इत्यवैहि ॥ २५ ॥ T. 437

शब्दार्णवस्य ॥

नावस्था वपुषो ममेयमवधेरुक्तस्य नातिक्रमो (725)
नोपालम्भपदानि वाप्यकरणे तत्राभिधेयानि ते । T. 438 S. 2.56.2
प्रष्टव्यः शिवमालि केवलमसौ कच्चिद्भवद्गोचरे
नायातं मलयानिलैर्मुकुलितं कच्चिन्न चूतैरिति ॥ २६ ॥

वाकूटस्य ॥

स्वप्नेऽपि प्रियसंगमव्यसनिनी शेते न निद्रागमश् (726)
चित्रेणालिखितुं तमिच्छति यदि स्वेदः सपत्नीजनः । T. 439
मुग्धेयं कुरुतेऽथ तद्गुणकथां मन्युर्गिरामर्गलः
प्रायः पुण्यदिनानुभाववलनादाशंसितं सिध्यति ॥ २७ ॥

तरणिनन्दनस्य ॥

व्योमश्रीहृदयैकमौक्तिकलते मातर्बलाकावलि (727)
ब्रूयास्त्वं जनमादरः खलु महान् प्राणेषु कार्यस्त्वया । T. 440
एतां म्लानिमुपागतां स्रजमिव त्यक्त्वा तनुं दुर्वहाम्
एषाहं सुखिनी भवामि न सहे तीव्रां वियोगव्यथाम् ↑ ॥ २८ ॥ ↑ K. 53b

आदृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया (728)
विश्रान्तेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति । T. 441 S. 2.58.5

---

**723** — [b]) S1 गमयति· — [c]) S विरमति· ○ Sbh. 1113; Ṡp. 3427 (बिल्हणस्य); Smk. 40.3; Srb. p. 284.17; PG. 214 (कङ्कस्य); SK. 5.216. **724** — [d]) TK इत्यवेहि· **725** — [b]) T1 lac.; T2 S1.3 °करुणे. **726** — [c]) T lac.; K तवणि°. **727** — [a]) K °मुक्तिक°. — [b]) K प्राणे सु-. — [c]) T1K एता· **728** — [a]) S3 निर्विघ्नया· — [c]) S यान्त्यैव स्वनिवेशनं प्रतिपथं· T2 सशुचा गृहं· — [d]) T2 मा भूदा°. K °गलितोद्; S1.2 °वलितोद्°; S3 °वलित°. S3 मुहुर्. ○ Amś. 76; Sbh. 1056 (अमरुकस्य); Srb. p. 359.86; Shv. D. f. 33a. 56; Daś. ad 2.27 (अमरुशतके); Ssm. 483; BIS 937 (343); Slp. 10.5; ŚB. 4.419, 4.724.

दत्त्वैकं ससुधागृहं प्रति पदं पान्थस्त्रियास्मिन् क्षणे
नाभूदागत इत्यमन्दवलितोद्ग्रीवं पुनर्वीक्षितम् ॥ २९ ॥
सिद्धोकस्य ॥

729 T. 442 S. 2.26.1 (शधोकस्य) P. 139b
श्वासास्ताण्डवितालकाः करतले सुप्ता कपोलस्थली ↑N. 21b
नेत्रे बाष्पतरङ्गिणी परिणतः कण्ठे कलः पञ्चमः ।
अङ्गेषु प्रथमप्रवृद्धफलिनी लावण्यसंपादिनी
पाण्डिम्ना विरहोचितेन गमिता कान्तिः कथागोचरम् ॥ ३० ॥
राजशेखरस्य ॥

730 T. 443
स्मितज्योत्स्नादानादुपकुरु चकोरप्रणयिनीर्
विधेहि भ्रूलीलां स्मरतु धनुषः पञ्चविशिखः ।
अपि स्तोकोन्निद्रैर्नयनकुमुदैर्मोदय दिशो
विशेषास्ते मुग्धे दधतु कृतिनां चेतसि पदम् ॥ ३१ ॥
अपराजितरक्षितस्य ॥

(731) T. 444 S. 2.49.2 (अमरोः) P. 139b
किमिति कबरी यादृक्तादृग्दृशौ किमकज्जले
मृगमदमसीपत्रन्यासः स किं न कपोलयोः ।
अयमयमयं किं च क्लाम्यत्यसंस्मरणेन ते
शशिमुखि सखीहस्तन्यस्तो विलासपरिच्छदः ॥ ३२ ॥

(732) T. 445 S. 2.59.3
वारंवारमलीक एव हि भवान् किं व्याहृतैर्गम्यताम्
इत्युद्गम्य सुमन्दबाहुलतिकामुत्थापयन्त्या रुषा ।
संक्रान्तैर्वलयैरलङ्कृतगलो युष्मद्वियोगोचितां
तन्वङ्ग्याः प्रकटीकरोति तनुतां द्रङ्गे भ्रमन्वायसः ॥ ३३ ॥

733 T. 446
पक्ष्माग्रग्रथिताश्रुबिन्दुविसरैर्मुक्ताफलस्पर्धिभिः
कुर्वन्त्या हरहासहारि हृदये हारावलीभूषणम् ।

---

**729** — [b]) S3 °तरंगिते. P °परिषदः. — [c]) S °प्रबुद्ध°. S1 °फणिमीरारण्य°. T2SP °संवादिनी. — [d]) T1 कथागौरवं; S कथाशेषतां. — [e]) K कविशेषरस्य; S1 शचोकस्य; S2 शधोकस्य; S3 om. **730** — [c]) T अयि. — [e]) K om. **731** — [a]) S किमनञ्जने. — [c]) S3 अयमसमयं. — [e]) S1 अभिनन्दस्य ॥ अमरोः ॥ S2.3 only अमरोः. ○ Skb. 4.193; ŚB. 3.86, 4.610. **732** — [b]) T2 इत्युद्यम्य; S इत्युद्गम्य. — [d]) S1.2 तनुतामंगे; S3 तनुतामंके. **733** — [a]) T °विशरैः°. ○ Śp. 3414; Smk. 39.11; Srb. p. 286.20; Daś. ad 4.15; SK, 5.285 (185); cf. ŚB. 4.713.

बाले बालमृणालनालवलयालंकारकान्ते करे
　विन्यस्याननमायताक्षि सुकृती कोऽयं त्वया स्मर्यते ॥ ३४ ॥

734 दहति विरहेष्वङ्गानीर्ष्यां करोति समागमे T. 447
　हरति हृदयं दृष्टः ↑ स्पृष्टः करोत्यवशां तनुम् । ↑ K. 54a S. 2.40.5
क्षणमपि सुखं यस्मिन्प्राप्ते गते च न लभ्यते (अमरोः)
　किमपरमतश्चित्रं यन्मे तथापि स वल्लभः ॥ ३५ ॥ P. 140a

(735) कोऽसौ धन्यः कथय सुभगे कस्य गङ्गासरस्वोस् T. 448
　तोयास्फालव्यतिकरखलत्कारि कङ्कालमास्ते । S. 2.28.2
यं ध्यायन्त्याः सुमुखि लिखितं कज्जलक्लेदभाञ्जि P. 140a
　व्यालुम्पन्ति स्तनकलशयोः पत्रमश्रूण्यजस्रम् ॥ ३६ ॥

(736) त्वच्छ्लेषेण च्छुरितकरया कुङ्कुमेनादधत्या T. 449
　शोणच्छायां भवनबिसिनीहंसके कौतुकिन्या ।
कोकभ्रान्तिक्षणविरहिणी यन्मयाकारि हंसी
　तस्यैतन्मे फलमुपनतं नाथ यत्ते वियोगः ॥ ३७ ॥

(737) श्वासोत्कम्पतरङ्गिणि स्तनतटे धौताञ्जनश्यामलाः T. 450
　कीर्यन्ते कणशः कृशाङ्गि किममी बाष्पाम्भसां बिन्दवः ।
किं चाकुञ्चितकण्ठरोधकुटिलाः श्रोत्रामृतस्यन्दिनो
　हूंकाराः कलपञ्चमप्रणयिनस्त्रुट्यन्ति निर्यान्ति च ॥ ३८ ॥

738 इदानीं तीव्राभिर्दहन इव भाभिः परिगतो T. 451
　ममाश्चर्यं सूर्यः किमु सखि रजन्यामुदयते ।
अयं मुग्धे चन्द्रः, किमिति मयि तापं प्रकटयत्य्,
　अनाथानां बाले किमिह विपरीतं न भवति ॥ ३९ ॥

---

**734** — [b]) N द्दष्टः (दृष्टः). — [c]) P न च. — [e]) S1 अमरुकस्य. **735** — [a]) S1, 2 °सरस्वत्. — [b]) S1 °थनत्कारि; S3 °खणत्कारि. — [c]) S1 सुसखि. S नियतं (लिखितं). S3 कज्जलच्छेद-. **736** — [a]) T *शेषेण. ○ ŚB. 4.661. **737** ○ Vkj. 1.44 (pratīka), 1.81. **738** — [b]) K सूर्यः किमपि स. ○ Śp. 3436 (पुष्टिकस्य); Smk. 40.4 (पुष्टिकरस्य); Srb. p. 284.25; Subhāṣita-saṃcaya 28.6; Shv. D. 32b. 53 (पुष्टिकरस्य); SK. 5.217,5.289.

739 T. 452 मा मुञ्चाग्निमुचः करान् हिमकर प्राणाः क्षणं स्थीयतां
निद्रे मुद्रय लोचने रजनि हे दीर्घातिदीर्घा भव ।
स्वप्नासादितसंगमे प्रियतमे सानन्दमालिङ्गिते
स्वच्छन्दो भवतां भविष्यति पुनः कष्टो विचेष्टारसः ॥ ४० ॥

740 T. 453 दिशतु सखि सुखं ते पञ्चबाणः स साक्षादनयनपथवर्ती यस्त्वयालेखि नाथः ।
तरलितकरशाखामञ्जरीकः शरीरे धनुषि च मकरे च स्वस्थरेखानिवेशः ॥ ४१ ॥

(741) T. 454 S. 2.26.2 (बाहूटस्य) कस्मान्म्लायसि मालतीव मृदितेत्यालीजने पृच्छति
व्यक्तं ↑ नोदितमार्तयापि विरहे शालीनया बालया । ↑ K. 546
अक्ष्णोर्बाष्पचयं निगृह्य कथमप्यालोकितः केवलं
किंचित्कुड्मलकोटिभिन्नशिखरश्चूतद्रुमः प्राङ्गणे ॥ ४२ ॥

वाकूटस्य ॥

(742) T. 455 उच्छूनारुणमश्रुनिर्गमवशाच्चक्षुर्मनाङ्मन्थरं
सोष्मश्वासकदर्थिताधररुचिर्व्यस्तालका भ्रूभुवः ।
आपाण्डुः करपल्लवे च निभृतं शेते कपोलस्थली
मुग्धे कस्य तपःफलं परिणतं यस्मै तवेयं दशा ॥ ४३ ॥

यशोवर्मणः ॥

743 T. 456 केन प्राप्तो भुवनविजयः कः कृती कः कलावान्
केनाव्याजं स्मरचरणयोर्भक्तिरापादिता च ।
यं ध्यायन्ती सुतनु बहुलज्वालकन्दर्पवह्नि-
प्रोद्यद्भस्मप्रचयरचितापाण्डिमानं दधासि ॥ ४४ ॥

(744) T. 457 दग्धव्येयं नवकमलिनीपल्लवोत्सङ्गशय्या
तप्ताङ्गारप्रकरविकरैः किं धुतैस्तालवृन्तैः ।
तत्रैवास्तां दहति नयने चन्द्रवच्चन्दनाम्भः
सख्यस्तोयेन्धन इव शिखी विप्रतीपोऽयमाधिः ॥ ४५ ॥

अभिनन्दस्य ॥

---

**739** — c) K °मालिंगते. **741** — c) K बाष्परयं ; S बाष्पभरं. — e) $S_1$ बाहटस्य ; $S_{2.3}$ बाहूटस्य. **742** — a) $T_2$ °चक्षुर्गतं. — b) T भ्रू ** ; K भ्रूर्भुवः. — d) K परिणतिं. **743** — c) TK बहल-. — d) $T_2$ °रचितं. **744** — b) $T_2$ °विकिरैः. — d) $T_2$ सख्या°. $T_1$ स्तोल्यम्वन ; $T_2$ स्तेऽयं वन ; $T_2$ विप्रतीयोग आधिः.

सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं (745) T. 458 S. 2.35.1
द्वारात्रस्यति चित्रकेलिसदसो वेशं विषं मन्यते ।
आस्ते केवलमब्जिनीकिसलयप्रस्तारिशय्यातले
संकल्पोपनतत्वदाकृतिरसायत्तेन चित्तेन सा ॥ ४६ ॥

अन्तस्तारं तरलिततलाः स्तोकमुत्पीडभाजः (746) T. 459
पक्ष्माग्रेषु ग्रथितपृषतः कीर्णधाराः क्रमेण ।
चित्तातङ्कं निजगरिमतः सम्यगासूत्रयन्तो
निर्यान्त्यस्याः कुवलयदृशो बाष्पवारां प्रवाहाः ॥ ४७ ॥

मुक्त्वानङ्गः कुसुमविशिखान् पञ्च कुण्ठीकृताग्रान् (747) T. 460 S. 2.28.3 P. 161a (anon)
मन्ये मुग्धां प्रहरति हठात्पत्रिणा वारुणेन ।
वारां पूरः कथमपरथा स्फारनेत्रप्रणाली-
वक्त्रोद्वान्तस्त्रिवलिविपिने सारणीसाम्यमेति ॥ ४८ ॥ ↑K. 55a

राजशेखरस्यामी ॥

उन्मील्याक्षि सखीर्न पश्यसि न चाप्युक्ता ददास्युत्तरं 748 T. 461
नो वेत्सीदृशमत्र नेदृशमिमां शून्यामवस्थां गता ।
तल्पादृश्यकरङ्कपञ्जरमिदं जीवेन लिप्तं मनाङ्
मुञ्चन्ती किमु कर्तुमिच्छसि कुरु प्रेमान्यदेशागते ॥ ४९ ॥

वल्लणस्य ॥

किं वातेन विलङ्घिता, न न, महाभूतार्दिता किं, न न, 749 T. 462 S. 3.6.4 P. 141a (चित्तपस्य)
भ्रान्ता किं, न न, संनिपातलहरीप्रच्छादिता किं, न न ।
तत्किं रोदिति मुह्यति श्वसिति किं स्मेरं च धत्ते मुखं,
दृष्टः किं कथयाम्यकारणरिपुः श्रीभोज्यदेवोऽनया ॥ ५० ॥

छित्तपस्य ॥

---

**745** — [b]) K चित्रके विसदशो· S3 वेषं. — [d]) S3 °कृतिवशा-. ○ Vid. 3.2; Bāl. 5.8; Srb. p. 290.86; Skb. 5.208; Sab. B. 4a. KHV. 400; Vyk. ad 2.21. **746** — [d]) K निर्वाल्यस्याः. ○ Vid. 3.24; Srb. p. 276.39. **747** — [a]) S चूर्णीकृता°. — [c]) S कथामितरथा. P स्फालनेत्र-. — [d]) S वक्त्रोद्वाह-. T शारिणी-; K सारिणी-. ○ Vid. 3.25; ŚB. 4.721; Srb. p. 276.40. **748** — [d]) T °दिशागते ॥. **749** — [ab]) P किं धन (for किं न न throughout). — [b]) S श्रान्ता; P भ्रस्ता. S नु न. S °प्रच्छार्दिता. S1, 2 नु न ।. — [c]) S मुह्यति रोदिति. N श्वसति. S च (किं). — [d]) SP श्रीभोज°. K °देवो नृपः.

750 T. 463 S. 2.25.1 (अमरसिंहस्य) कुचौ धत्तः कम्पं निपतति कपोलः करतले
निकामं निश्वासः सरलमलकं ताण्डवयति ।
दृशः साम↑र्थ्यानि स्थगयति मुहुर्बाष्पसलिलं ↑ N. 22a
प्रपञ्चोऽयं किंचित्तव सखि हृदिस्थं कथयति ॥ ५१ ॥
नरसिंहस्य ॥

751 T. 464 त्यजसि न शयनीयं नेक्षसे स्वामवस्थां
विशदयसि न केशानाकुलग्रन्थिबन्धान् ।
किमपि सखि कुरु त्वं देहयात्रानुरूपं
शतमिह विरहिण्यो नेदृशं क्वापि दृष्टम् ॥ ५२ ॥

॥ इति विरहिणीव्रज्या ॥ २२ ॥

## ॥ ततो विरहिव्रज्या ॥ २३ ॥

752 T. 465 गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं त्वेतत्स्यात् किमन्यदतोऽथ वा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ १ ॥

(753) T. 466 वारं वारं तिरयति दृशोरुद्गमं बाष्पपूरस्
तत्संकल्पोपहितजडिम स्तम्भमभ्येति गात्रम् ।
सद्यःस्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ २ ॥

754 T. 467 उन्मीलन्मुकुल↑करालकुन्दकोषप्रश्च्योतद्घनमकरन्दगन्धगर्भः । ↑ K. 55b
तामीषत्प्रचलविलोचनां नताङ्गीमालिङ्गन् पवन मम स्पृशाङ्गमङ्गम् ॥३॥

---

**750** — [b]) S3 निःश्वासः. S1 सकल- (marg. सरल-). **751** — [b]) TK विषदयसि. — [d]) T1 विहरिण्यो. **752** — [c]) K भवने. ○ Māl. 1.20; Daś. ad 2.47 (मालतीमाधवे); Sd ad 6.127 (मालतीमाधवे); Smk. 42.2 (भवभूतेः); Srb. p. 274.4; ŚB. 4.558. **753** ○ Māl. 1.38; Skb. 2.398; ŚB. 2.284, 3.50, 3.294, 3.322; Kvv. p. 58; Srb. p. 279.62. **754** — [b]) T प्रश्चोत-. ○ Māl. 1.41. — [b]) प्रच्योत-; Srb. p. 283.149.

दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते　　755 T. 468 P. 157b (भवभूतेः)
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलति च तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ४ ॥
K. चेः ॥

नादत्से हरिताङ्कुरान् क्वचिदपि स्थैर्यं न यद्गाहसे　　(756) T. 469 S. 4.44.2 (केशटस्य) P. 157b
यत्पर्याकुललोचनोऽसि करुणं कूजन्दिशः पश्यसि ।
दैवेनान्तरितप्रियोऽसि हरिण त्वं चापि किं यच्चिरं
प्रत्यद्रि प्रतिकन्दरं प्रतिनदि प्रत्यूषरं भ्राम्यसि ॥ ५ ॥
K. मुञ्जस्य ॥

कस्त्राघातैः सुरभिरभितः सत्वरं ताडनीयो　　(757) T. 470
गाढाम्रेडं मलयमरुतः शृङ्खलादाम दत्त ।
कारागारे क्षिपत तरसा पञ्चमं रागराजं
चन्द्रं चूर्णीकुरुत च शिलापट्टके पिष्टपेषम् ॥ ६ ॥

ह्रिया संसक्ताङ्गं तदनु मदनाज्ञाप्रशिथिलं　　(758) T. 471 P. 158a (क्षितिपस्य)
सनाथं माञ्जिष्ठप्रसरकुशरेखैर्नखपदैः ।
घनोरुप्राग्भारं निधिमुखमिवामुद्रितमहो
कदा नु द्रक्ष्यामो विगलितदुकूलं मृगदृशः ॥ ७ ॥
क्षितीशस्य ॥

एते चूतमहीरुहोऽप्यविरलैर्धूमायिताः षट्पदैर्　　759 T. 472 S. 2.100.3 P. 158a (वाकूटस्य)
एते प्रज्वलिताः स्फुटत्किशलयोद्भेदैरशोकद्रुमाः ।

---

**755** — [a]) P गाढोद्वेगो. — [c]) TK ज्वल्यति. — [e]) NT om; P *sic* for भवभूतेः. ○ Māl. 9.12; Ut. 3.31; Smk. 43.39 (भवभूतेः); Srb. p. 279.68; Shv. C. 458; Sd. ad 6.105 (मालतीमाधवे); Skb. 5.271; ŚB. 3.288, 3.318, 4.693, 4.739; PG. 325 (भवभूतेः). **756** — [a]) P नासंसे. — [b]) P पश्यति. — [c]) P corrupt. $S_{1,2}$ क्षामोऽसि; $S_3$ क्षीणोऽस्ति (त्वं चापि). S यत्प्रत्यहं. — [d]) S प्रतिकाननं. P प्रतिनदिं. S धावसि; P भ्राम्यति. — [e]) T om. **757** — [a]) $T_1$K कस्त्राघातैः (?). — [c]) K क्षिपति. ○ Bāl. 5.49. **758** — [a]) P मदनांग्यः प्रणिहतं. — [b]) P मंजिष्ठा-. P कुशरेखै°. **759** — [b]) TKP एतेऽपि ज्वलिताः. P स्फुटाः. — [c]) P मनिलै°. — [d]) K विश्रमया क्रिमत्र.

एते किंशुकशाखिनोऽपि मलिनैरङ्गारिताः कुड्मलैः
कष्टं विश्रमयामि कुत्र नयने सर्वत्र वामो विधिः ॥ ८ ॥
वाक्कूटस्य ॥

760 T. 473 S. 2.86.5 (राजशेखरस्य) P. 158a (anon)
सव्याधेः कृशता क्षतस्य रुधिरं दष्टस्य लालास्रवः
सर्वं नैतदि↑हास्ति केवलमयं पान्थस्तपस्वी मृतः । ↑T. 64b
आ ज्ञातं मधुलम्पटैर्मधुकरैराबद्धकोलाहले
नूनं साहसिकेन चूतमुकुले दृ↑ष्टिः समारोपिता ॥ ९ ॥ ↑K. 56a
N. राजशेखरस्य ॥

(761)
मनसिशय कृशाङ्ग्याः स्वान्तमन्तर्निशातैर्
इषुभिरशनिकल्पैर्मा वधीस्त्वं ममेव ।
अपि ननु शशलक्ष्मन् मा मुचस्त्वं च तस्याम्
अकरुणकिरणोल्काः कन्दलीकोमलायाम् ॥ १० ॥
राजशेखर[स्यैतौ] ॥

762
चक्षुश्चुम्बनविघ्निताधरसुधापानं मुखं शुष्यति
द्वेष्टि स्वं च कचग्रहव्यवहितश्रोणीविहारः करः ।
निद्रे किं विरतासि तावदघृणे यावन्न तस्याश्चिरात्
क्रीडन्ति क्रमशः कृशीकृतरुषः प्रत्यङ्गमङ्गानि मे ॥ ११ ॥
अभिनन्दस्य ॥

763 S. 2.95.1 (कस्यचित्)
जाने सा गगनप्रसूनकलिकेवात्यन्तमेवासती
तत्संभोगरसाश्च तत्परिमलोल्लासा इवासत्तमाः ।
स्वप्नेन द्विषतेन्द्रजालमिव मे संदर्शिता केवलं
चेतस्तत्परिरम्भणाय तदपि स्फीतस्पृहं ताम्यति ॥ १२ ॥
परमेश्वरस्य ॥

---

**760** — [a]) P दन्तस्य. — [b]) S तत्कथमसौ; P तत्कथमयं-. — [c]) SP आरब्ध-. — [e]) T lac.; K om. ○ Śp. 3822; Sab. 27*a*; Smk. 59.35 (all रामिलसोमिलयोः); Srb. p. 335.146; SG. 74*b*; ŚB. 4.699. **761** — [d]) K °कोमलायाः. — [e]) K राजशेखरी. **762** — [a]) K °विघ्नता-. — [e]) K अभिनन्दी.

द्यूते पणः प्रणयकेलिषु कण्ठपाशः क्रीडापरिश्रमहरं व्यजनं रतान्ते । 764 P. 158b
शय्यानिशीथकलहेषु मृगेक्षणायाः प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥१३॥ (हनुमतः)
धीरनागस्य ॥

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननैर् 765 S. 2.86.1
यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि । (अमरोः,
उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाश्रुपूर्णां दृशं श्रीहर्षस्य)
तामाशां पथिकस्तथापि किमपि ध्यायंश्चिरं वीक्षते ॥ १४ ॥ P. 158b
श्रीहर्षस्य ॥

प्रौढानङ्गरसाविलाकुलमनाङ्न्यञ्चत्तिरोघूर्णित- (766) P. 159a
स्निग्धाह्लादि मदान्धमध्वनि तया यच्चक्षुरान्दोलितम् ।
तेनास्माकमियं गतिर्मतिरियं संवित्तिरेवंविधा
तापोऽयं तनुरीदृशी स्थितिरियं तस्या अपीति श्रुतिः ॥ १५ ॥
वल्लणस्य ॥

स एवायं देशः सर इव विलूनाम्बुजवनं 767
तनोत्यन्तस्तापं नभ इव विलीनामृतरुचि ↑ । ↑ K. 56b
वियोगे तन्वङ्ग्याः कलयति स एवायमधुना
हिमर्तुर्नैदाघीमहह विषमां तापनरुजम् ॥ १६ ॥ ↑ N. 22b

सृष्टा वयं यदि ततः किमियं मृगाक्षी 768 P. 159a
सेयं वयं यदि ततः किमयं वसन्तः ।
सोऽप्यस्तु नाम जगतः प्रतिपक्षभूतश्
चूतद्रुमः किमिति निर्मित एष धात्रा ॥ १७ ॥

---

**764** P order *acbd.* — [c]) P °कलहे हरिणाक्षणायश्चाः. ○ Kun. 4.20; Han. 5.1. — [c]) °समये जनकात्मजायाः; ŚB. 2.152, 4.697. **765** — [a]) P °रितागतैश्च. — [c]) $S_{1.2}$ °पूर्णं. — [d]) P वीक्ष्यते. — [e]) $S_1$ orig. श्रीहर्षस्य, corr. to अमरोः; $S_2$ अमरोः, $S_3$ both. ○ Amś. 99; Smk. 42.10; (अमरुकस्य); Śp. 3445; Sbh. 1768; Daś. ad 4.65; BIS. 2965 (1246); Slp. 1.94; Sl. 19*a*; ŚB. 3.57, 3.210; 3.393, 4.658, 4.706. **766** — [d]) P तनु कीदृशी. P तस्या नु प्रीति श्रुतिः ।. **767** — [b]) K °रुचिः ॥. — [d]) K °रुजः ॥. **768** — [a]) K किमयं. — [d]) K एव धात्रा. ○ Smk. 59.19.

769 ते बाणाः किल चूतकुड्मलमयाः पौष्पं धनुस्तत्किल
कुद्धत्र्यम्बकलोचनाग्निशिखया कामोऽपि दग्धः किल ।
किं ब्रूमो वयमप्यनेन हतकेनापुङ्खमग्नैः शरैर्
विद्धा एव न चेदृशः परिकरस्यैवंविधा वेदना ॥ १८ ॥
वीर्यमित्रस्य ॥

770 P. 157a रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्
त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा मामपि ।
कान्तापादतलाहतिस्तव मुदे सत्यं ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥ १९ ॥

771 S. 2.103.3 P. 159a (anon) आपुङ्खाग्रममी शरा मनसि मे मग्नाः समं पञ्च ते
निर्दग्धं विरहाग्निना वपुरिदं तैरेव सार्धं मम ।
कष्टं काम निरायुधोऽसि भवता जेतुं न शक्यो जनो
दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु ॥ २० ॥
राजशेखरस्य ॥

(772) P. 161b विलीयेन्दुः साक्षादमृतरसवापी यदि भवेत्
कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् ।
ततः स्नानक्रीडाजनितजडभावैरवयवैः
कदाचिन्मुञ्चेयं मदनशिखिपीडापरिभवम् ॥ २१ ॥
राजशेखर[स्यैतौ] ॥

773 यदि क्षामा मूर्तिः प्रतिदिवसमश्रूणि दृशि चेच्
छुतौ दूतीवक्त्रं यदि मृगदृशो भूषणधिया ।

---

**769** — [b]) K क्रुध्यत्र्य-. **770** ○ Sbh. 1364 (श्रीयशोवर्मणः); Dhv. ad 2.20; Kkk. ad 3.2 (कालिदासस्य; editor's note यशोवर्मणः); Kvv. p. 39; Kuv. p. 65; KHA. 7; BIS. 5691 (2579); Han 5.24; Slp. 9.16; SK. 5.49; Rasg. p. 354; Any. p. 114.61; Ak. p. 298; Amd. 218; ŚB. 4.691. **771** — [c]) S1. 2 °युधोऽपि. K न शक्तो. — [e]) K om. because of next stanza. ○ Han. 5.23; Slp. 9.15; Sl. 11*a*. **772** — [b]) P विकलेंदीवर-. — [d]) P विरशिखिक्रीडा-. — [e]) K राजशेखरी. ○ Vid. 2.2; Smk. 43.44 (राजशेखरस्य); BIS. 6184 (2840); Kuv. p. 198; ŚB. 4.713.

इदं चास्मत्कर्णे यदि भवति केनापि कथितं
तदिच्छामः सङ्गाद्विरहभरमेकत्र वसतौ ॥ २२ ॥
वल्लणस्य ॥

तव कुसुमशरत्वं शीतरश्मित्वमिन्दोर्द्वयमिदमयथार्थं दृश्यते मद्विधेषु । ↑K. 57a 774
विसृजति हिमगर्भैरग्निमिन्दुः कराग्रैस्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥२३॥ P. 161b
कालिदासस्य ॥

संभूयैव सुखानि चेतसि परं भूमानमातन्वते 775*
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।
यद्बालेन्दुकलोदयादवचितैः सारैरिवोत्पादितं
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ २४ ॥
भवभूतेः ॥

शरान्मुञ्चत्युच्चैर्मनसिजधनुर्मक्षिकरवा 776*
रुजन्तीमे भासः किरति दहनाभा हिमरुचिः ।
जितास्तु भ्रूभङ्गार्चनवदनलावण्यरुचिभिः
सरोषा नो जाने मृगदृशि विधास्यन्ति किममी ॥ २५ ॥
शान्ताकरगुप्तस्य ॥

अपि स दिवसः किं स्याद्यत्र प्रियामुखपङ्कजे (777) S. 2.92.3 (वार्तिककारस्य)
मधु मधुकरीवास्मद्दृष्टिर्विकासिनि पास्यति । P. 161b (वार्तिककारस्य)
[तदनु च मृदुस्निग्धालापक्रमाहितनर्मणः
सुरतसचिवैरङ्गैः सङ्गो ममापि भविष्यति ॥ २६ ॥]
[वार्तिककारस्य ॥]

सा लम्बालकमाननं नमयति प्रद्विष्टचयं मां शशी (778)
नैवोन्मुञ्चति वाचमञ्चितकला विघ्नन्ति मां कोकिलाः ।
भ्रूभङ्गं कुरुते न सा धृतधनुर्मञ्नाति मां मन्मथः
को वा तामबलां विलोक्य सहसा नात्रोपकृच्छ्रो भवेत् ॥ २७ ॥
शृङ्गारस्य ॥

---

**774** — [c]) P °मयथा त्वं. — [d]) P°करोति. ○ Śāk. 3.3; Sbh. 1298; KHA. 269.
**775** K omits 775–6 and 777[cd]. which may have preceded these two. ○ Mah. 2.45. (*cd* var.); Māl. 5.9; Smk. 43.14; (भवभूतेः); ŚB. 3.18, 3.313.
**777** — [a]) P किं स्यात्स्वास्मिन्. — [b]) P मधुकरी वाष्पकृष्टि°. **778** — [d]) K नात्रेपजच्छो.

779 बाणान् संहर मुञ्च कार्मुकलतां लक्ष्यं तव त्र्यम्बकः
के नामात्र वयं शिरीषकलिकाकल्पं यदीयं मनः ।
तत्कारुण्यपरिग्रहात्कुरु दयामस्मिन्विधेये जने
स्वामिन् मन्मथ तादृशं पुनरपि स्वप्नाद्भुतं दर्शय ॥ २८ ॥

(780) S. 2.89.1 विवेकादस्माभिः परमपुरुषाभ्यासरसिकैः
कथंचिन्नीयन्ते रतिरमणबाणैरपि हृतैः ।
प्रियाया बालत्वादभिनववियोगातुरतनोर्
न जानीमस्तस्या बत कथममी यान्ति दिवसाः ॥ २९ ॥

781 T. 474 S. 2.92.5 स्खलल्लीलालापं विनिपतितकर्णोत्पलदलं श्रमस्वेदक्लिन्नं सुरतविरतिक्षामनयनम् ।
कचाकर्षक्रीडासरलकुरलश्रेणिसुभगं कदा तद्द्रष्टव्यं वदनमवदातं मृगदृशः ॥३०॥

782 T. 475 अहमिव शून्यमरण्यं वयमिव तनुतां गतानि तोयानि ।
अस्माकमिवोच्छ्वासा दिवसा दीर्घाश्च तप्ताश्च ॥ ३१ ॥

783 T. 476 P. 169a (भवभूतेः) लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्
चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ ३२ ॥ ↑ N. 23a ↑ K. 57b

784 T. 477 P. 167b नेत्रेन्दीवरिणी मुखाम्बुरुहिणी भ्रूवल्लिकल्लोलिनी
बाहुद्वन्द्वमृणालिनी यदि वधूर्वापी पुनः सा भवेत् ।
तल्लावण्यजलावगाहनजडैरङ्गैरनङ्गानल-
ज्वालाजालमुचस्त्यजेयमसमाः प्राणच्छिदो वेदनाः ॥ ३३ ॥

---

**779** ○ Vid. 1.22; Smk. 43.22 (राजशेखरस्य); Srb. p. 282.143; Sab. 36b (राजशेखरस्य). **780** — [b]) K धीयन्ते. — [c]) S1.2 °वियोगात्तव; S3 °वयोगोचर-. **781** — [c]) S3 स्रवत्स्वेद-. — [c]) K °क्रीडामलकरमणि°; S क्रीडासरलधवल-; S3 श्रोणिसुभगं. **782** ○ Sbh. 1701. — [b]) सलिलानि. **783** ○ Māl. 5.10; Daś. ad 4.20 (मालतीमाधवे); Skb. 2.258; 4.108; ŚB. 2.387; 3.58, 3.313; Shv. C. 324; Srb. p. 281.105; Kvv. p. 58; Amd. 749. **784** — [b]) P वधूवापी. — [c]) P °गाहलहरैर्. — [d]) P °स्त्यजेयमधुना मर्मच्छिदो.

प्रहर्ता क्वानङ्गः स च कुसुमधन्वाल्पविशिखश् 785
चलं सूक्ष्मं लक्ष्यं व्यवहितममूर्तं क्व च मनः । T. 478
इतीमामुद्भूतां स्फुटमनुपपत्तिं मनसि मे S. 2.91.1 (मृगराजस्य) P. 168a
रुजामाविर्भावादनुभवविरोधः शमयति ॥ ३४ ॥ (रन्तितथागतस्य)
वन्द्यतथागतस्य ॥

अन्तर्निबद्धगुरुमन्युपरंपराभिरिच्छोचितं किमपि वक्तुमशक्नुवत्याः । (786) T. 479
अव्यक्तहूंकृतिचलत्कुचमण्डलायास्तस्याः स्मरामि मुहुरर्धविलोकितानि ॥३५॥

भ्रस्यद्विवक्षितमसंफलदक्षरार्थमुत्कम्पमानदशनच्छदमुच्छ्वसत्या । (787)
अद्य स्मरामि परिमृज्य पटाञ्चलेन नेत्रे तया किमपि यत्पुनरुक्तमुक्तम् ॥३६॥ T. 480 S. 2.92.4
सोन्नोकस्य ॥ (सोल्लोकस्य)

दग्धप्ररूढमदनद्रुममञ्जरीति लावण्यपङ्कपटलोद्गतपद्मिनीति । 788 T. 481
शीतांशुबिम्बगलितामृतनिर्मितेति बालामबालहरिणाङ्कमुखीं स्मरामि ॥ ३७ ॥

मधूद्गारस्मेरभ्रमरभरहूंकारमुखरं (789) T. 482
शरं साक्षान्मीनध्वजविजयचापच्युतमिव ।
निलीयान्योन्यस्मिन्नुपरि सहकाराङ्कुरममी
समीक्षन्ते पक्ष्मान्तरतरलतारा विरहिणः ॥ ३८ ॥

सा न चेन्मृगशावाक्षी किमन्यासां कथाव्ययः । (790) T. 483
कला न यदि शीतांशोरम्बरे कति तारकाः ॥ ३९ ॥

उपरि घनं घनपटलं दूरे कान्ता तदेतदापतितम् । 791 T. 484
हिमवति दिव्यौषधयः क्रोधाविष्टः फणी शिरसि ॥ ४० ॥

स्थगितं नवाम्बुवाहैरुत्तानास्यो विलोकयन् व्योम । 792 T. 485
संक्रमयतीव पथिकस्तज्जलनिवहं स्वलोचनयोः ॥ ४१ ॥ ↑K. 58a
जयीकस्य ॥

---

**785** — [a]) N क्व (स). S कुसुमचापो(S3 बाणो)ल्प-. — [b]) T1KP लक्ष्मं. S1 क्व (क). P न नः।. — [e]) K om वन्द्य°. S3 om. **786** — [a]) K °निर्विद्ध-. **787** — [a]) S भ्रश्यद्. S °क्षितमपस्खलद°. — [b]) S °च्छ्वसन्त्या. — [c]) S1 पटांजलेन. — [e]) K सोन्नोकी (? for °कस्यैतौ). **788** — [d]) T1 बालाक्ष°. **789** — [d]) K विरहिताः. **791** ○ This is not the Bhartṛhari stanza (Bh. 87) with the same beginning. Skb. 3.87; ŚB. 2.308; KHA. 545; SK. 3.322; Mud. 1.22 (in Prakrit).

(793) T. 486 ते जङ्घे जघनं च तत्तदुदरं तौ च स्तनौ तत्स्मितं
सूक्तिः सा च तदीक्षणोत्पलयुगं धम्मिल्लभारः स च ।
लावण्यामृतबिन्दुवर्षि वदनं तच्चैवमेणीदृशस्
तस्यास्तद्द्वयमेकमेवमसकृद्ध्यायन्त एवास्महे ॥ ४२ ॥
नरसिंहस्य ॥

(794) T. 487 यदि शशधरस्त्वद्वक्त्रेण प्रसह्य तिरस्कृतस्
तदयमदयो मह्यं मुग्धे किमेवमसूयति ।
यदमृतरसासारस्रुद्भिर्धिनोत्यखिलं जगज्
ज्वलयति तु मामेभिर्वह्निच्छटाकटुभिः करैः ॥ ४३ ॥
T. परमेश्वरस्य ॥

(795) T. 488 P. 119b लीलाताण्डवितभ्रुवः स्मितसुधाप्रस्यन्दभाजो दलन्-
नीलाब्जद्युतिनिर्भरा दरवलत्पक्ष्मावलीचारवः ।
प्राप्तास्तस्य वियोगिनः स्मृतिपथं खेदं समातन्वते
प्रेमार्द्राः सुदृशो विकुञ्चनततिप्रेङ्खत्कटाक्षा दृशः ॥ ४४ ॥

(796) T. 489 विस्फाराग्रास्तरलतरलैरंशुभिर्विस्फुरन्तस्
तासां तासां नयनमसकृन्नैपुणाद्वञ्चयित्वा ।
मुक्तास्तन्व्या मसृणपरुषास्ते कटाक्षक्षुरप्राश्
च्छिन्नं छिन्नं हृदयमदयैश्छिद्यतेऽद्यापि यैर्मे ॥ ४५ ॥
T. [पर]मेश्वरस्य ॥

(797) T. 490 श्यामां श्याममलिमानमानयत भोः सान्द्रैर्मसीकूर्चकैस्
तन्त्रं मन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ ४६ ॥

---

**794** — [d]) K जनयति तु मान्मभिर्. — [e]) K om. **795** P pratika only = लीलाताण्डवितेत्यादि. cf. 468. **796** — [b]) K तासां भासां. — [e]) T ** मेश्वरस्य; K om. The stanzas after this to 802 are Rājaśekhara's. **797** ○ Vid. 3.1; Shv. C. 452; Kpk. 276; Kpd. p. 243; Amd. 183, 416; KHA. 3.404.

तस्मिन् पञ्चशरे स्मरे भगवता भर्गेण भस्मीकृते (798) T. 491 P. 168a (राजशेखरस्य)
जानाम्यक्षयसायकं कमलभूः कामान्तरं निर्ममे ।
यस्यामीभिरितस्ततश्च विशिखैरापुङ्खमग्नात्मभिर्
जातं मे विदलत्कदम्बमुकुलस्पष्टोपमानं मनः ॥ ४७ ॥

सूतिर्दुग्धसमुद्रतो भगवतः श्रीकौस्तुभे ↑ सोदरे ↑ K. 58b 799 T. 492 S. 2.102.3 (कस्यचित्) P. 167b
सौहार्दं कुमुदाकरेषु किरणाः पीयूषधाराकिरः ।
स्पर्धा ते वदनाम्बुजैर्मृगदृशां तत्स्थाणुचूडामणे
हंहो चन्द्र कथं निषिञ्चसि मयि ज्वालामुचो वेदनाः ॥ ४८ ॥

अयि पिबत चकोराः कृत्स्नमुन्नामिकण्ठक्रमसरलितचञ्चच्चञ्चवश्चन्द्रिकाम्भः । 800 T. 493
विरहविधुरितानां जीवितत्राणहेतोर्भवति हरिणलक्ष्मा येन तेजोदरिद्रः ॥ ४९ ॥
N. राजशेखरस्यैतौ ॥

शीतांशुर्विषसोदरः फणभृतां लीलास्पदं चन्दनं (801) T. 494
हाराः क्षारपयोभुवः प्रियसुहृत्पङ्केरुहं भास्वतः ।
इत्येषां किमिवास्तु हन्त मदनज्योतिर्विघाताय यद्
बाह्याकारपरिभ्रमेण तु वयं तत्त्वत्यजो वञ्चिताः ॥ ५० ॥

व्यजनमरुतः श्वासश्रेणीमिमामुपचिन्वते (802) T. 495 P. 168a
मलयजरसो धाराबाष्पं प्रपञ्चयितुं प्रभुः ।
कुसुमशयनं कामास्त्राणां करोति सहायतां
द्विगुणगरिमा मारोन्माथः कथं नु विरंस्यति ॥ ५१ ॥
राजशेखरस्यैते ॥

---

**798** — a) P अस्मिन्. KP om. स्मरे. — b) T1K om. साय°. ○ Vid. 2.1; Srb. p. 280.98. **799** — a) P सूति त्वं च. S श्रीकौस्तुभौ. T1 lac; T2S सोदरौ. — b) T कुमुदाकरे च; P कुसुमाकरेषु. P °धारामुचः ।. — c) P तद्भस्मचूडा°. — d) SP कथं नु(P न)मुंचसि. P करज्वाला°. ○ Vid. 3.13; Sab. B. 2a (राजशेखरस्य); Srb. p. 282.148. **800** — a) T अपि. — c) N only, as preceding and succeeding Rājaśekhara stanzas are om. in N. ○ Vid. 3.15; Bāl. 5.73; Srb. p. 303.127; ŚB. 4.697 Vkj. 2.10. **801** — c) K °मटनज्योति°. ○ Vid. 3.19; Srb. p. 281.118; Śp. 801. **802** — b) P मलयजरजो. P मुहुः ।. — d) P न (नु). — e) K गजशेखरी. The reference to Rājaśekhara covers 797 - 802. ○ Vid. 3.20; Srb. p. 276.47.

(803) T. 496 P. 168b
हारो जलार्द्रशयनं नलिनीदलानि प्रालेयशीकरमुचस्तुहिनाद्रिवाताः ।
यस्येन्धनानि सरसान्यपि चन्दनानि निर्वाणमेष्यति कथं स मनोभवाग्निः ॥५२॥

(804) T. 497
मन्दादरः कुसुमपत्रिषु पेलवेषु नूनं बिभर्ति मदनः पवनास्त्रमद्य ।
हारप्रकाण्डसरलाः कथमन्यथामी श्वासाः प्रवर्तितदुकूलदशाः सरन्ति ॥ ५३ ॥

(805) T. 498 P. 168b
अकृतप्रेमैव वरं न पुनः संजातविघटितप्रेमा ।
उद्धृतनयनस्ताम्यति यथा हि न तथेह जातान्धः ॥ ५४ ॥

(806) T. 499 S. 2.95.3 (कालिदासस्य) P. 169b
स्वप्न प्रसीद भगवन् पुनरेकवारं संदर्शय प्रियतमां क्षणमात्रमेव ।
दृष्ट्वा सती निबिडबाहुनिबन्धलग्नं तत्रैव मां नयति सा यदि वा न याति॥५५॥↑K.59a

॥ इति विरहिव्रज्या ॥ २३ ॥

## ॥ ततोऽसतीव्रज्या ॥ २४ ॥

807 T. 500 S. 2.14.1 P. 149b
दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायो नैव शिशोः पिताद्य विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वरमितः श्रोतस्तमालाकुलं
नीरन्ध्राः स्तनमालिखन्तु जठरच्छेदा नलग्रन्थयः ॥ १ ॥
विद्यायाः ॥

808 T. 501
तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां
क्षेमं भद्र कलिन्दराजतनयातीरे लतावेश्मनाम् ।
विच्छिन्ने स्मरतल्पकल्पनविधिच्छेदोपयोगेऽधुना
ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः ॥ २ ॥
K. विद्यायाः ॥

---

**803** ○ Amś. 134; Sbh. 1087 (बाणकवेः); Auc. ad 14 (भट्टबाणस्य); Srb. p. 250.15; BIS. 7385 (3349). **804** — c) T °शरलाः. ○ Vid. 2.3; Srb. p. 279.56. **805** ○ Sbh. 1389 (रविगुप्तस्य); cf. Bps. 137. **806** — a) S3 क्षणमेकवारं. — c) S2.3 दृष्ट्वा. **807** — a) K क्षणमिमां; P क्षणमहो. — b) SP प्रायेणास्य. SP पिता न. P कोपीनसः यास्यति. — c) S सत्वरमितः; P सद्वरमितः. — d) S तनु- (स्तन-); KS जरठच्छेदा. ○ Śp. 3769 (विज्जकायाः); Srb. p. 353.43; Smk. 87.7 (विज्जाकायाः); Sd ad. 4.8; Daś. ad 2.20; Skb. 1.118; SB. 2.222, 3.382, 4.561; Aś. ad 8.1; At. p. 62; Sab. 3.9; Kvv. p. 62; KHA. 708 (beginning only) Amd. 96. **808** K has this stanza after 815. — d) K ते जाते. — e) T om. ○ Dhv. ad 2.6.

सिकतिलतलाः सान्द्रच्छायास्तटान्तविलम्बिनः 809 T. 502 S. 2.12.1 (विद्यायाः) P. 150a
शिशिरमरुतां लीलावासाः क्वणज्जलरङ्कवः ।
अविनयवतीनिर्विच्छेदस्मरव्ययदायिनः
कथय मुरले केनामी ते कृता निचुलद्रुमाः ॥ ३ ॥

पान्थ स्वैरगतिं विहाय झटिति प्रस्थानमारभ्यताम् 810 T. 503 S. 2.15.5 P. 150a
अत्यन्तं करिसूकराहिगवयैर्भीमं पुरः काननम् ।
चण्डांशोरपि रश्मयः प्रतिदिशं म्लानास्त्वमेको युवा
स्थानं नास्ति गृहे ममापि भवतो बालाहमेकाकिनी ॥ ४ ॥

विटपिनि शिशिरच्छाये क्षणमिह विश्रम्य गम्यतां पथिकाः । 811 T. 504 P. 150a
अतरुवारिरतःपरमसमशिलादुर्गमो मार्गः ॥ ५ ॥

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो 812 T. 505 S. 2.15.3 (भट्टस्य) P. 150a
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथेह । ↑ N. 235
अस्मिन्पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा,
पान्थायेत्थं युवत्या कथितमभिमतं व्याहृतिव्याजपूर्वम् ॥ ६ ॥

स्मरविवशया किंचिन्मिथ्यानिषेधमनोज्ञया (813) T. 506
दिशि दिशि भयाद्भूयोभूयः प्रवर्तितनेत्रया ।
कुवलयदृशा शून्ये दैवादतर्कितलब्धया
निभृतनिभृतं ये चुम्ब्यन्ते त एव विदुः सुखम् ॥ ७ ॥

व्यपेतव्याहारं गतविविधशिल्पव्यतिकरं 814 T. 507
करस्पर्शारम्भप्रगलितदुकूलान्तशयनम् ।

---

**809** — a) $S_3$ °छायातटा°. — b) $S_3$ नीतावासाः; P लीनावासा. — c) P °स्मरोत्सव-. — d) $S_1$ भुवने; P सुरते (मुरले). **810** — b) $S_1$ °शूकरो; $S_{2.3}$ °शूकरा-. P पुनः (पुरः). ○ Slp. 3.61. **811** — b) P विश्राम्य. K पथिकः; P पथिक. — cd) P om. °परमसम°. **812** — b) S गर्भदासी तथात्र ।. — c) $S_1$ (var.) यस्मिन्. ○ Sbh. 2247 (रुद्रटस्य); Smk. 87.12 (रुद्रस्य); Rasg. P. 262; Citkh. p. 32; Dhv. ad 2.24; JSV. 227.1. **813** — b) T तया भूयो. — d) T lac; K चम्पन्ते. K विपुः सुषौ ॥. **814** — a) T °व्यापारं. — b) K °युग- (°प्रग-). — d) $T_1$ °सूत्राम्णोः. T क्षणिकमिह. — c) T ＊＊श्वरस्य; K योगेश्वरी. ○ Smk. 87.10; Skb. 5.276a अपेत-; ŚB. 3.178, 3.235, 3.308; 4.453, 4.514.

मुहुर्बद्धोत्कम्पं दिशि दिशि मुहुःप्रेषितदृशोर् ↑ K. 59b
अहल्यासुत्राम्णोः क्षणिकमिव तत्संगतमभूत् ॥ ८ ॥

योगेश्वरस्य ॥

815 T. 508 S. 2.12.3 यः कौमारहरः स एव च वरस्ताश्चन्द्रगर्भा निशाः
प्रोन्मीलन्नवमालतीसुरभयस्ते ते च विन्ध्यानिलाः ।
सा चैवास्मि तथापि धैर्यसुरतव्यापारलीलाभृतां
किं मे रोधसि वेतसीवनभुवां चेतः समुत्कण्ठते ॥ ९ ॥

816 T. 509 P. 152a क्व प्रस्थितासि करभोरु घने निशीथे, प्राणाधिको वसति यत्र जनः प्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले, नन्वस्ति पुङ्खितशरो मदनः सहायः ॥१०॥

817 T. 510 उदेति यस्यां न निशाकरो रिपुस्तिथिर्नु का पुण्यवतीभिराप्यते ।
इतीव दुष्ट्या परिदेविते मुहुः कुहूकुहूरित्यलमाह कोकिलः ॥ ११ ॥

818 T. 511 S. 2.14.5 मातर्गेहिनि यद्ययं हतशुकः संवर्धनीयो मया
लौहं पञ्जरमस्य दुर्नयवतो गाढं तदा कारय ।
अद्यैनं बदरीनिकुञ्जकुहरे लीनं प्रचण्डोरगे
कर्षन्त्या मम तावदङ्गलिखनैरेवापदेषागता ॥ १२ ॥

819 T. 512 P. 154a ध्वस्तं केन विलेपनं कुचयुगे केनाञ्जनं नेत्रयो
रागः केन तवाधरे प्रमथितः केशेषु केन स्रजः ।
तेनाशेषजनौघकल्मषमुषा नीलाब्जभासा सखि,
किं कृष्णेन, न यामुनेन पयसा कृष्णानुरागस्तव ॥ १३ ॥

---

**815** — [a]) TS हि (च). — [b]) TK °न्नवमाधवी. — [c]) T1 वैर्य-; T2 S चौर्य- (धैर्य-). — [d]) S रेवारोधसि. ○ Śp. 3768 (शीलाभट्टारिकायाः); Smk. 87.9 (शिलाभट्टारिकायाः); Srb. p. 353.42; Kpk. 1; Kpd. p. 9; Sd. ad 1.2; As. ad 42, 85; Ak. p. 336; Sab. 3.5; Shv. D. 25b. 78 (शीलायाः); PG. 382; Bps. 82; Amd. 855. **816** K has 808 before this, perhaps to understand 815 as Vidyā's. — [b]) P प्राणाधिपो. — [c]) K बिमेषि काले. ○ Amś. 71; Sbh. 1946 (अमरुकस्य); Śp. 3610 (गोविन्दस्वामिनो विकटनितम्बायाश्च); Srb. p. 298.14; Vetālp. (ed. Uhle) p. 27; Skb. 2.354; ŚB. 2.287, 3.363, 4.475, 4.545, 4.843; Sab 3.63, 21b; Ssm. 453; BIS. 1991 (774); SK. 5.169; Bps. 73. **817** — [c]) T2 दुष्टा-; K दुत्या. K षनिदोविते मूहु. **818** — [a]) S अंब (S1 अघ) श्वश्रु यदि त्वया. S तदा (मया). — [b]) T लोहं. S2.3 दुर्णय-. S गाढान्तरं. — [c]) S संलीनमन्विष्यती. — [d]) S दष्टा यत्र भुजङ्गमेन तदतिश्रेयः किमेभिः क्षतैः. K °दंगनिखनैर्. **819** P has *ab* only. — [c]) K °कल्मषसुधा.

आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे (820) T. 513 P. 154a
कण्ठे लग्नः सुकण्ठः पुनरपि कुचयोर्दत्तगाढाङ्गसङ्गः ।
बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक् प्रियो मे, ↑K. 60a
बाले लज्जा प्रणष्टा, न हि न हि कुटिले चोलकः किं त्रपाकृत् ॥ १४ ॥

आमोदिना समधुना परिधूसरेण सव्याकुलभ्रमवता पतता पुरस्तात् । 821 T. 514
आयासितास्मि सखि तेन दिवावसाने, मत्तेन किं प्रणयिना, न हि केसरेण ॥१५॥

पान्थे पद्मसरोऽन्तशाद्वलभुवि न्यस्ताञ्चलं शायिनि 822 T. 515
त्वं श्रान्तास्यवहं च वर्त्म वसतिग्रामो न वेलाप्यगात् ।
उत्तानद्विगुणासमञ्जसमिलज्जानूदरास्तांशुक-
स्तोकोन्मीलदसञ्जितोरु वयमप्येकाकिनः किं न्विदम् ॥ १६ ॥

वल्लणस्य ॥

इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते 823 T. 516 P. 154a
नालापा निपतन्ति बाष्पकलुषा नोपैति कार्श्यं तनुः ।
स्वाधीनामनुकूलिनीं स्वगृहिणीमालिङ्ग्य यत्सुप्यते
तत्किं प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते ॥ १७ ॥

लक्ष्मीधरस्य ॥

प्रणयविशदां वक्त्रे दृष्टिं ददाति विशङ्किता (824) T. 517 P. 154b
घटयति घनं कण्ठाश्लेषं सकम्पपयोधरा ।
वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां संकेतस्था तथापि हि कामिनी ॥ १८ ॥

श्रीहर्षस्य ॥

---

**820** — [a]) P आकृष्यादार॰. K °ग्रहसकल॰. P वक्रमासह्य चारु. — [b]) P °र्यत्त गाढानुमंदः ।. — [c]) P बद्धा शक्तिर्. P प्रिया मे. — [d]) T1P लोचकः. ○ Sbh. 1164; As. p. 110; Cit. p. 72. **821** — [a]) T केशरेण. **822** — [a]) T सद्मसरो°. T शाड्वल°. — [d]) N °दशञ्जि°; T1 °दमञ्जि°; K °दगञ्जि. **823** — [a]) T विद्यते. — [b]) P वपुः ।. — [c]) K °मालिख्य. — [e]) K धरणीधरस्य. ○ Sbh. 2398; Śp. 3782; Smk. 75.4; Srb. p. 353.49; Skb. 5.192; ŚB. 3.397; Sab. 4.148; SK. 5.298; Ssm. 937. **824** — [a]) TK विषदां. — [d]) P सा संकेते. ○ Rat. 3.9; Sbh. 2058 (श्रीहर्षदेवस्य); Daś. ad 1.38 (रत्नावल्यां); Smk. 70.10 (अमरुकस्य); Nāṭ. ad 53 (रत्नावल्यां).

825 T. 518 दुर्दिननिशीथपवने निःसंचारासु नगरवीथीषु ।
पत्यौ विदेशयाते परं सुखं जघनचपलायाः ॥ १९ ॥

826 T. 519 P. 154b N. lm. 24a मार्गे पङ्किनि तोयदान्धतमसे निःशब्दसंचारकं
गन्तव्या दयितस्य मेऽद्य वसतिर्मुग्धेति कृत्वा मतिम् ।
आजानूद्धृतनूपुरा करतलेनाच्छाद्य नेत्रे भृशं
कृच्छ्राल्लब्धपदस्थितिः स्वभवने पन्थानमभ्यस्यति ॥ २० ॥

827 T. 520 बिभ्राणार्द्रनखक्षतानि जघने नान्यत्र गात्रे भयान्
नेत्रे चुम्बनपाटले च दधती निद्रालसे निव्रणे ।
स्वं संकेतमदूरमेव कमितुर्भ्रूसंज्ञया ↑ शंसती ↑ K. 60b
सिद्धिं याति विटैककल्पलतिका रण्डा न पुण्यैर्विना ॥ २१ ॥

828 T. 521 P. 154b अद्य स्वां जननीमकारणरुषा प्रातः सुदूरं गतां
प्रत्यानेतुमितो गतो गृहपतिः श्रु↑त्वैव मध्यंदिने । ↑ N. 24a
पङ्गुत्वेन शरीरजर्जरतया प्रायः स लक्ष्याकृतिर्
दृष्टोऽसौ भवता न किं पथिक हे स्थित्वा क्षणं कथ्यताम् ॥ २२ ॥

829 T. 522 S. 2.62.5 वस्त्रप्रोतदुरन्तनूपुरमुखाः संयम्य नीवीमणीन्
उद्गाढांशुकपल्लवेन निभृतं दत्ताभिसारक्रमाः ।
एताः कुन्तलमल्लिकापरिमलव्यालोलभृङ्गावली-
झंकारैर्विकलीकृताः पथि बत व्यक्तं कुरङ्गीदृशः ॥ २३ ॥

830 T. 523 S. 2.61.1 पतिर्दुर्वृत्तोऽयं विधुरमलिनो वर्त्म विषमं
जनश्छिद्रान्वेषी प्रणयिवचनं दुःपरिहरम् ।

---

**825** ○ Often cited as an example of Jaghanacapalā metre. Sbh. 1937; Srb. p. 352.4; Shv. D 24*a*. 65; Pv. 4.48 (309) (जघनचपलायाः); Śp. 3767; Pad. p. 52.36 (जघनचपलायाः); Ssm. 409; BIS. 2863 (1191); Pañc. ed. Koseg. 1.189, 3.206, ed orn. 1.139, ed. Bomb. 4.53. **826** — [a]) P पंक्लि°. — [b]) P मेत्य ... मुग्धेभिहत्वा. — [c]) P नेत्रे दृशं. — [d]) P °मभ्यस्यते. ○ Sbh. 1948; Śp. 3614; Smk. 71.2; Srb. p. 357.32; Sab. 3.73, 4.148; Ssm. 454; SK. 5.170. **827** — [b]) T2 निश्चले. — [c]) K °दूरसेवक°. ○ Sbh. 2373 (? भट्टवृद्धेः). **828** P *ab* only. (*c* on marg., recent addition) rest presumably lost with fol. 155. — [c]) T2 सुलक्ष्या°. **830** — [a]) S1 °मनिलो. S दुष्परिहरम् ।

अतः काचित्तन्वी रतिविहितसंकेतगतये
गृहाद्वारंवारं निरसरदथ प्राविशदथ ॥ २४ ॥

उदेष्यत्पीयूषद्युतिरुचिकणार्द्राः शशिमणि- 831 T. 524
स्थलीनां पन्थानो घनचरणलाक्षालिपिभृतः ।
चकोरैरुड्डीनैर्झटिति कृतशङ्काः प्रतिपदं
पराञ्चः संचारानविनयवतीनां विवृणुते ॥ २५ ॥

मलयजपङ्कलिप्ततनवो नवहारलताविभूषिताः 832 T. 525 S. 2.65.2
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्य↑तां गताः ↑ T.70b
प्रियवसतिं व्रजन्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥ २६ ॥
बाणस्य ॥

निशान्धकारे विहिताभिसाराः सखीः शपन्तीह नितान्तमुग्धा । (833)
पथि स्खलन्ती बत वारिधारामालिङ्गितुं वाञ्छति वारिदानाम् ॥ २७ ॥
पुरुषोत्तमस्य ॥

कृत्वा नूपुरमूकतां चरणयोः संयम्य नीवीमणीन् 834 S. 2.85.4
उद्दामध्वनिपिण्डितान् परिजने किंचिच्च निद्रायिते ।
कस्मै कुप्यसि यावदस्मि ↑ चलिता तावद्विधिप्रेरितः ↑ K. 61a
काश्मीरीकुचकुम्भसंभ्रमहरः शीतांशुरभ्युद्यतः ॥ २८ ॥

उरसि निहितस्तारो हारः कृता जघने घने 835 S. 2.62.3 (अमरोः)
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।

---

**831** N interchanges this with next. — [d]) T2 पराञ्चः. T2 विवृणते. ○ Anr. 7.90. **832** — [c]) N om. गताः. T1 ends. — [d]) T2 प्रयांति (व्रजंति). S3 सुखमेव मिथो निरस्त- (hyp.). ○ Vām. ad 4.3.10; Ak. p. 396; As. ad 71; Srb. p. 299.23; Kpd. ad 10.48. **834** — [b]) S ध्वनिपंडिता°. S1 var. निद्रायते।; S2.3 निद्रायति ।. — [c]) S1.3 तस्मिन्कुप्यति. — [d]) S1 °विभ्रमहरः; S2 विभ्रमहतः; S3 विभ्रमकरः. S °भ्युद्गतः ॥. ○ Smk. 70.13 (काश्मीरीबिल्हणस्य); Kvv. p. 5; Slp. 1.36; Smv. 16.1. **835** — [c]) S3 त्वमाहत-. S1.2 °तिण्डिमा. — [d]) S2.3 त्रासोत्कंपं. ○ Amś. 31; Sbh. 1947 (अर्गटस्य); Śp. 3613 (अर्गटस्य); Srb. p. 298.17; Daś. ad 2.27 (अमरुशतके); KHA. 718; BIS. 1316 (501) Sab. 3.78 (22a).

प्रियमभिसरस्येवं मुग्धे समाहतडिण्डिमा
किमिदमपरं त्रासोत्कम्पा दिशो मुहुरीक्षसे ॥ २९ ॥
देवगुप्तस्य ॥

836 अनुमतमिवानेतुं जोषं तमीतमसां कुलं
दिशि दिशि दृशो विन्यस्यन्त्यः श्रियाङ्कुरिताञ्जनाः ।
मदनहुतभुग्धूमच्छायैः पटैरसितैर्वृताः
प्रययुररसद्भूषैरङ्गैः प्रियानभिसारिकाः ॥ ३० ॥
भट्टशिवस्वामिनः ॥

॥ इत्यमतीव्रज्या ॥ २४ ॥

## ॥ ततो दूतीकोपालम्भव्रज्या ॥ २५ ॥

837 S. 2.113.1 (सुविभोकस्य) निःशेषच्युतचन्दनः स्तनतटो निर्यातरागोऽधरो
नेत्रे दूरमनञ्जने जललवप्रस्यन्दिनी ते तनुः ।
आशाच्छेदिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ १ ॥

838 S. 2.113.5 किं त्वं निगूहसे दूति स्तनौ वक्त्रं च पाणिना ।
सव्रणा एव शोभन्ते शूराधरपयोधराः ॥ २ ॥

839 S. 2.113.4 (भिक्षोः) साधु दूति पुनः साधु कर्तव्यं किमतःपरम् ।
यन्मदर्थे विलग्नासि दन्तैरपि नखैरपि ॥ ३ ॥

840 S. 2.113.3 (भिक्षोः) विहारः कण्ठदेशस्ते काषाये तव लोचने ।
अधरौ वीतरागौ ते दूति प्रव्रजितासि किम् ॥ ४ ॥

---

**836** — [c]) K मथन-. ○ Kap. 14.3. — [a]) पोवं. Vrajyā **25** : K heading : दूतीकोपालंभनव्रज्या वक्ष्येते ॥. **837** — [a]) KS °चंदनं. K स्तनतटे ; S स्तनतटं. S निर्मृष्ट°. — [b]) S पुलकिता तन्वी तथे( S3 वे )यं तनुः. — [c]) S मिथ्यावादिनि दूति. ○ Śp. 3508 ; Sbh. 1423 ; Srb. p. 293.7 ; Smk. 48.2 ; Pad. p. 54.11 (अमरुकस्य) ; Ssm. 495 ; Kvv. p. 37 ; KHA. 27 ; Skb. 4.236 ; ŚB. 2.349 ; Kpk, 2 ; Kpd. p. 12 ; Sd. ad 2.16 ; BIS. 3777 (1617) ; Aś. p. 9 (ad 3.1) ; Bps. 54 ; Cit p. 2 ; Amd. 99, 946. **838** — [d]) K °स्तवाधर- ; S वीराधर-. ○ Sbh. 1428 ; Srb. p. 293.3 ; Pad. p. 54.10 ; Ssm. 498 ; Sab. 4.103. **839** — [c]) S विलग्नासि. ○ SK. 5.339. **840** S order *cbad*. — [b]) S कषाये. — [c]) S अधरो वीतरागस्ते. ○ Sbh. 1426.

दूति किं तेन पापेन शास्त्रातिक्रमकारिणा । 841 P. 156a
पञ्च पञ्चनखा भक्ष्याः षष्ठी त्वं येन खादिता ॥ ५ ॥

नायातः सामदानाभ्यामिति भेदेऽपि दर्शिते । 842 P. 156a
साधु यद्दुर्विनीतस्य त्वया दण्डो निपातितः ॥ ६ ॥

अनेन वीतरागेण बुद्धेनेवाधरेण ते ↑ । ↑ N. 24b 843 P. 156a
दूति निर्व्याजमाख्याता सर्ववस्तुषु शून्यता ॥ ७ ॥

पार्श्वाभ्यां सप्र↑हाराभ्यामधरे व्रणखण्डिते । ↑ K. 61b 844 P. 156a
दूति संग्रामयोग्यासि न योग्या दूतकर्मणि ॥ ८ ॥

त्वया दूति कृतं कर्म यत्तदन्येन दुष्करम् । 845 P. 156a
शरणागतविध्वंसी छिद्रान्वेषी निपातितः ॥ ९ ॥

क्षामा तनुर्गतिः खिन्ना नेत्रे व्यालोलतारके । 846 P. 156a
वागस्पष्टा श्लथं वासो दूति त्वं ज्वरितासि किम् ॥ १० ॥

रजन्यामन्यस्यां सुरतपरिवर्तादनुचितं 847 P. 156a
मदीयं यद्वासः कथमपि हृतं तेन सुहृदा ।
त्वया प्रीत्यानीतं स्वनिवसनदानात्पुनरिदं
कुतस्त्वादृग्दूति स्खलितशमनोपायनिपुणा ॥ ११ ॥

नायातो यदि तादृशं स शपथं कृत्वापि दूति प्रियस् 848 P. 156b
तत्किं कोपनया त्वया स्वदशनैरग्राधरः खण्डितः ।
स्वेदाम्भःकणदायि वेपनमिदं त्यक्त्वा भज स्वस्थतां
को लोकस्य सखि स्वभावकुटिलस्यान्तर्गतं ज्ञास्यति ॥ १२ ॥

---

**841** ○ Sbh. 1429. **842** — [a]) P नायाते. — [b]) K दह्लिते. ○ Sbh. 1425. **843** ○ Smk. 48.1; Sbh. 1427. **844** — [b]) P इति भेदेऽपि दर्शितः. — [cd]) P °योग्योऽसि न योग्ये. ○ Śp. 3505; Sbh. 1430; Sab. 4.104 (वररुचेः). **846** — [a]) P क्षामभिन्नगतिः. — [c]) P रागस्पष्टा. ○ Sbh. 1433. **847** — [b]) P मद्वासः. P कृतं. — [c]) P सुरसदानात्पुलकितं. — [d]) K °ग्दूती. K स्खलति. ○ Smk. 48.7; Śp. 3509 (बीजाकरस्य); Sbh. 1437 (बीजकस्य); Ssm. 497; Sab. 3.48 (बीजांकुरस्य); SG. 64b. **848** — [c]) P भज सुष्ठुतां. — [d]) P का (को). ○ Smk. 48.6 (डिंबोकस्य); Sbh. 1438.

849 P. 156b रोमाञ्चं वहसि श्वसिष्यविरतं ध्यानं किमप्याश्रिता
दृष्टिस्ते भ्रमति प्रकम्पचपले व्यक्तं च ते शीत्कृतम् ।
तं लब्ध्वा खलु बन्धकीव सुरतव्यापारदक्षं जनं
किं दूति ज्वरितासि पापमथवा स्पृष्ट्वा भवन्त्यापदः ॥ १३ ॥

850 P. 156b श्वासः किं, त्वरिता गतिः, पुलकिता कस्मात्, प्रसाद्यागता,
वेणी भ्रश्यति, पादयोर्निपतनात्, क्षामा, किमित्युक्तिभिः ।
स्वेदार्द्रं मुखम्, आतपेन, गलिता नीवी, गमादागमाद्
दूति म्लानसरोरुहद्युतिमुषः स्वौष्ठस्य किं वक्ष्यसि ॥ १४ ॥

851 P. 156b अधरेणोन्नतिभाजा भुजङ्गपरिपीडितेन ते दूति ।
संक्षोभितं मनो मे जलनिधिरिव मन्दरागेण ॥ १५ ॥

852 P. 157a सद्भावोपगता समप्रणयिनी दाराः परस्येति वा
दूते रागपराभवः क्रियत इत्येतन्न मीमांसितम् ।
येनाम्भोरुहसंनिभस्य वदनस्यापाण्डुता ते कृता
दूति भ्रष्टगुणस्य तस्य निलयं स्वप्नेऽपि मा गाः पुनः ॥ १६ ॥

853 S. 2.113.2 (छित्तोकस्य) P. 157a स्वकार्यबुद्ध्यैव सदा मदर्थे दूति प्रवृत्तिं प्रतिपालयन्त्या । ↑ K. 62a
त्वया फलेनैव विभावितोऽयं मया सहाभिन्नशरीरवादः ॥ १७ ॥
वित्तोकस्य ॥

॥ इति दूतीकोपालम्भव्रज्या ॥ २५ ॥

## ॥ ततः प्रदीपव्रज्या ॥ २६ ॥

(854) रुद्धे वायौ निषिद्धे तमसि शुभवशोन्मीलितालोकशक्तिः
कस्मान्निर्वाणलाभी न भवतु परमब्रह्मवद्वीक्ष्य दीपः ।

---

**849** — [a]) P मुहु विश्वसिस्यविरतं· K ध्यानी· — [b]) P °चपला व्यक्तं च यच्छीत्कृतं· — [c]) P तं लब्ध्वाश्मनवह्नकीव· ○ Sbh. 1439. **850** — [a]) K °तागता· — [b]) P किमभ्युक्तिभिः· ○ Smk. 48.5 *acbd.* (शिलाभट्टारिकायाः); Śp. 3507 (शीलाभट्टारिकायाः); Sbh. 1440 (शीलाभट्टारिकायाः); Sab. 3.47 (शीलाभट्टारिकायाः). **851** — [a]) P °भाजो· — [b]) P om. परि-. P. °तेन तेन ।. ○ Smk. 48.3 (विशल्यस्य). **852** — [a]) P मम (सम-). — [b]) K दूते वाल°; P दूति नान°. K °त्येतन्नु· **853** — [a]) P स्वकीय-. — [b]) S2 °पादयंत्या; S3 °पालयंत्याः; P °पादयंन्त्या· — [c]) S1 तित्तोकस्य; S2.3 छित्तोकस्य. Vrajyā **26** completely om. in N.

निद्राणस्त्रीनितम्बाम्बरहरणरणन्मेखलारावधावत्-
कन्दर्पानद्धबाणव्यतिकरतरलं कामिनं यामिनीषु ॥ १ ॥

अतिपीतां तमोराजीं तनीयान्सोढुमक्षमः । (855)
वमतीव शनैरेष प्रदीपः कज्जलच्छलात् ॥ २ ॥ S. 2.148.5

निर्वाणगोचरगतोऽपि मुहुः प्रदीपः किं वृत्तकं तरुणयोः सुरतावसाने । (856)
इत्येवमाकलयितुं सकलङ्कलज्जदुद्ग्रीविकामिव ददाति रतिप्रदीपः ॥ ३ ॥ S. 2.148.2

बालां कृशाङ्गीं सुरतानभिज्ञां गाढं नवोढामुपगूढवन्तम् । (857)
विलोक्य जामातरमेष दीपो वातायने कम्पमुपैति भीतः ॥ ४ ॥ S. 2.148.3

॥ इति प्रदीपव्रज्या ॥ २६ ॥

## ॥ ततोऽपराह्णव्रज्या ॥ २७ ॥

निद्रान्धानां दिनमणिकराः कान्तिमम्भोरुहाणाम् (858)
उच्चित्यैते बहुगुणमिवाबिभ्रतः शोणिमानम् ।
चक्राङ्काणामविरलजलैरार्द्रविश्लेषभाजां
वक्षःस्पर्शैरिव शिशिरतां यान्ति निर्वाप्यमाणाः ॥ १ ॥

दावास्त्रशक्तिरयमेति च शीतभावं (859)
भास्वान् ज्वलन्ति हृदयानि च कोकयूनाम् ।
किं ब्रूमहेऽभ्युदयते च जगत्पिधानं
ध्वान्तं भवन्ति च विशुद्धदृशो दिवान्धाः ॥ २ ॥

उन्मुक्ताभिर्दिवसमधुना सर्वतस्ताभिरेव (860)
स्वच्छायाभिर्निचुलितमिव प्रेक्ष्यते विश्वमेतत् ।
पर्यन्तेषु ज्वलति जलधौ रत्नसानौ च मध्ये
चित्राङ्गीयं रमयति तमःस्तोम↑लीला धरित्री ॥ ३ ॥ ↑K. 62b

---

**855** — [b]) S तनीयान्वोढु-. **856** — [a]) S मुहुर्निशायां. — [b]) S किं चेष्टितं — [c]) S सकलं कलाविद्. **857** — [c]) S1 जामातरमेव. Vrajyā **27** : Completely om. in N. **858** — [c]) K °विश्लेषिभाजं. — [d]) K वक्षः-. **859** — [a]) K हवस्तु (?). **860** ○ Anr. 2.49; Smk. 69.5 (मुरारेः).

(861) चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलान्युज्ज्वलानि
प्रेक्ष्यन्ते चक्रवाकीमनसि निविशते सूर्यकान्तात्कृशानुः ।
किं चामी शल्ययन्तस्तिमिरमुभयतो निर्भराहस्तमिस्रा-
संघट्टोत्पिष्टसंध्याकणनिकरपरिस्पर्धिनो भान्ति दीपाः ॥ ४ ॥

(862) पटुकटुकोष्मभिः कटकधातुरसस्य गिरेः
कुहरकटाहकेषु रविधामभिरुत्क्वथतः ।
उपरिभरादिवोत्सलितया छटया गगनं
प्रतिनवसंध्यया सपदि संवलितं शुशुभे ॥ ५ ॥

(863) अस्तं भास्वति लोकलोचनकलालोके गते भर्तरि
स्त्रीलोकोचितमाचरन्ति सुकृतं वह्नौ विलीय त्विषः ।
अप्येतास्तु चिकीर्षयेव तपसां ताराक्षमाला दिशो
मन्ये खञ्जनकण्ठकोमलतमःकृष्णाजिनं बिभ्रति ॥ ६ ॥

(864) यावद्भास्करकेसरी प्रविततज्योतिस्सटाभासुरो
हत्वा वासरवारणं वनदरीमस्ताचलस्याश्रितः ।
तावत्संतमसाच्छभल्लपरिषत्संध्यास्रमापीयते
कुम्भभ्रंशविकीर्णमौक्तिकरुचो राजन्त्यमूस्तारकाः ॥ ७ ॥

(865) अस्तव्यस्तान्क्रमततगतीन् पत्रिमालातरङ्गान्
वेणीदण्डानिव धृतवती मुक्तसंध्याङ्गरागा ।
ध्वान्तम्लानांशुकपरिचयच्छन्नलावण्यशोच्या
द्यौः प्रत्यग्रद्युमणिविरहाद्भ्रान्तमक्ष्णोर्न याति ॥ ८ ॥

(866) परावृत्ता गावस्तरुषु वयसां कूजति कुलं
पिशाचीनां चेतः स्पृशति गृहकृत्यप्रवणता ।
अयं नन्दी संध्यासमयकृतकृत्यव्यवसितिस्
त्रिनेत्राभिप्रायप्रतिसदृशमुन्मार्ष्टि मुरजान् ॥ ९ ॥

शितिकण्ठस्य ॥

---

**861** — [d]) K °परस्पर्धि°. ○ Anr. 2.51; Smk. 68.19 (श्रीमुरारेः). **865** — [a]) K प्रत्रिमाला-. — [c]) K ध्यान्त- **866** — [b]) K °प्रवणतां ।.

उत्सर्पद्धूमलेखात्विषि तमसि मनाग्विस्फुलिङ्गायमानैर् (867)
उद्भेदैस्तारकाणां वियति परिगते पश्चिमाशामुपेता । ↑ K. 63a
खेदेनेवानतासु स्खलदलिरसनास्वब्जिनीप्रेयसीषु
प्रायः संध्यातपाग्निं विशति दिनपतौ दह्यते वासरश्रीः ॥ १० ॥

प्रारब्धो मणिदीपयष्टिषु वृथा पातः पतङ्गैरितो (868)
गन्धान्धैरभितो मधुव्रतकुलैरुत्पक्ष्मभिः स्थीयते ।
वेल्लद्बाहुलताविलोलवलयस्वानैरितः सूचित-
व्यापाराश्च नियोजयन्ति विविधान्वाराङ्गना वर्णकान् ॥ ११ ॥
मलयराजस्यैतौ ॥

व्रजति कलितस्तोकालोको नवीनजवारुण- (869)
च्छविरविरसौ स्वेच्छादृश्यो दिशं भृशमप्पतेः । S. 2.145.4 (कस्यचित्)
ककुभि ककुभि प्राप्ताहाराः कुलायमहीरुहां
शिरसि शिरसि स्वैरं स्वैरं पतन्ति पतत्रिणः ॥ १२ ॥
रघुनन्द[न]स्य ॥

कालव्यालहतं वीक्ष्य पतन्तं भानुमम्बरात् । (870)
ओषधीशं समादाय धावतीव पितृप्रसूः ॥ १३ ॥

जगन्नेत्रज्योतिः पिबति शनकैरन्धतमसं (871)
कुलायैराकृष्टाः क्षणविरतकूजा बलिभुजः ।
तथोलूकः स्तोकव्यपगतभयः कोटरमुखाद्
वपुर्मग्नग्रीवो डमरितशिराः पश्यति दिशः ॥ १४ ॥
विद्दूकस्य ॥

ताराप्ररोहधवलोत्कटदन्तपङ्क्तिर्ध्वान्ताभिनीलवपुषो रजनीपिशाच्याः । (872)
जिह्वेव सार्द्ररुधिरारुणसूर्यमांसग्रासार्थिनी नभसि विस्फुरति स्म संध्या ॥१५॥

स्नातीव मन्दरनगोऽस्तमितेऽद्य मित्रे सिन्धूद्धृतेन्दुकलशस्खलदंशुतोयैः । (873)
एतज्जगन्नयनहारि घनं तमोऽस्य पृष्ठे श्रियं विततकुन्तलवत्तनोति ॥ १६ ॥

---

**867** ○ Tāp. 1.21. **868** ○ Tāp. 1.22. **869** — [b]) S1, 2 lac.; S3 बिंबं विंदन् (स्वेच्छादृश्यो). — [c]) K रघुनन्दस्य. **873** — [b]) K सिन्दूद्धृते°.

(874) पृथुगगनकबन्धस्कन्धचक्रं [कि]मेतत्
किमु रुधिरकपालं कालकापालिकस्य ।
कललभरितमन्तः किं नु तार्क्ष्याण्डखण्डं
जनयति हि वितर्कान् सांध्यमर्कस्य बिम्बम् ॥ १७ ॥

(875)
S. 2.145.1
(मलयराजस्य)
याते भास्वति वृद्धसारसशिरःशोणेऽस्तशृङ्गाश्रयं ↑ K. 63b
व्यालिप्तं तिमिरैः कठोरबलिभुक्कण्ठाभिनीलैर्नभः ।
माहेन्द्री दिगपि प्रसन्ननलिना चन्द्रोदयाकाङ्क्षिणी
भात्येषा चिरविप्रयुक्तशबरीगण्डावपाण्डुच्छविः ॥ १८ ॥
अचलसिंहस्य ॥

(876) अतिहरितपत्रपरिकरसंपन्नस्पन्दनैकविटपस्य ।
घनवासनैर्मयूखैः कुसुम्भकुसुमायते तरणिः ॥ १९ ॥
चक्रपाणेः ॥

(877) दिनमणिरनर्घमूल्यो दिनवणिजार्घप्रसारितो जगति ।
अनुरूपार्घमलब्ध्वा पुनरिव रत्नाकरे निहितः ॥ २० ॥
श्रीधर्मपालस्य ॥

(878) निर्यद्वासरजीवपिण्डकरणिं बिभ्रत्कवोष्णैः करैर्
माञ्जिष्ठं रविबिम्बमम्बरतलादस्ताचले लुण्ठति ।
किं च स्तोकतमःकलापकलनाश्यामायमानं मनाग्
धूमध्यामपुराणचित्ररचनारूपं जगज्जायते ॥ २१ ॥
राजशेखरस्य ॥

(879) घर्मत्विषि स्फुरितरत्नशिलाक्रमेण मेरोर्नितम्बकटकानवगाहमाने ।
वल्गत्तुरङ्गखुरचूर्णितपद्मरागधूलीव वातवलितोल्लसति स्म संध्या ॥ २२ ॥

(880) अस्ताद्रिशिरोविनिहितरविमण्डलसरसयावघट्टाङ्कम् ।
नयतीव कालकौलः क्वापि नभःसैरिभं सिद्ध्यै ॥ २३ ॥

---

**874** ○ Smk. 68.6; Śp. 3583. both. — [d]) प्रजनयति वितर्कै. **875** — [a]) S1 °शोणेसु. — [b]) S1 °कंडाति-; S2,3 °कंठाति-. — [c]) K प्रसन्नतलिना; S प्रसन्नमलिना. — [d]) S°गंडाभ°. **877** — [c]) K °लाद्धा (°लब्धा.). **878** — [c]) K राजशेखरी. ○ Vid. 2.22. — [a]) पिंडकरुणं. — [b]) चुंबति ॥; Srb. p. 295.62. **879** ○ ŚB. 3.186. **880** K °यावक° (°याव°).

प्रथममलसैः पर्यस्ताग्रं स्थितं पृथुकेशरैर् (881)
विरलविरलैरन्तःपत्रैर्मनाङ्मिलितं ततः ।
तदनु वलनामात्रं किंचिद्व्यधायि बहिर्दलैर्
मुकुलनविधौ वृद्धाब्जानां बभूव कदर्थना ॥ २४ ॥

दग्धध्वान्तदिनस्य धर्मदिनकृत्संवृत्तसप्तार्चिषा (882)
तप्ताङ्गारगुरूच्चयश्रियमयं बध्नाति संध्यातपः ।
निर्वाणाज्ज्वलविप्रकीर्णनिवहश्यामत्वमातन्वते
प्राग्विप्लुष्टतमोगुरोरभिनवास्तस्यास्तमिस्रत्विषः ॥ २५ ॥
बुद्धाकरस्य ॥

अस्तोप↑धानविनिहितरविबिम्बशिरोनिकुञ्चितदिगङ्गः । ↑ K. 64a (883)
वस्तेऽन्धकारकम्बलमम्बरशयने दिनाध्वन्यः ॥ २६ ॥
मलयवातस्य ॥

नृत्यश्रमात् करनखोदरपीतवान्तैः स्वेदार्द्रभस्ममयबिन्दुभिरिन्दुगौरैः । (884)
संत्यज्य तारकितमेतदिति प्रवादं व्योमाङ्गणं गणय चित्रितमीश्वरेण ॥ २७ ॥
लक्ष्मीधरस्य ॥

॥ इत्यपराह्णव्रज्या ॥ २७ ॥

## ॥ ततोऽन्धकारव्रज्या ॥ २८ ॥

किं स्वर्भानुरसौ विलिम्पति जगद्देहप्रभाविस्तरैस् (885)
तीव्रांशोः पततः पतत्यथ करालम्बावकृष्टं नभः ।
किं साम्भोधिकुलाचलां वसुमतीं स्वस्मिन्विधत्ते हरिः
संकल्पानिति मांसलं वितनुते कादम्बनीलं तमः ॥ १ ॥

निष्यन्दस्फुरिताभिरोषधिरुचां शैलाः शिखाभक्तिभिः (886)
शब्दैः प्राणभृतो गृहीतसुमनोवासैर्मरुद्भिर्द्रुमाः ।

---

**881** — [b]) K मनाङ्क्लितं. ∩ Vām. ad 3.2.14. — [a]) °केसरैर्. **882** — [d]) K °तमगुरो°. **883** — [b]) K °बिम्बम्बशिर-. — [c]) K °न्धकारकन्बर°. Vrajyā **28** completely om. in N.

ध्वान्ते लिम्पति मत्तकोकिलवधू[क]ण्ठाभिनीले जगल्
लक्ष्यन्ते भवनानि जालविवरोद्भ्रान्तैः प्रदीपांशुभिः ॥ २ ॥

मनोविनोदस्य ॥

(887) द्राक्पर्यस्तगभस्तिरस्तमयते माणिक्यशोणो रविः
सांध्यं धाम नभोऽङ्गणं कुलयति द्वित्रिस्फुरत्तारकम् ।
शोच्यन्ते वयसां गणैरित इतः पर्यन्तचैत्यद्रुमाः
किं चाभ्यर्णपराक्रमेण तमसा प्रोर्णूयते रोदसी ॥ ३ ॥

(888) चक्षुर्लग्नमिवातिमांसलमसीवर्णायते यन्नभः
पार्श्वस्था इव भान्ति हन्त ककुभो निःसंधिरुद्धान्तराः ।
विन्यस्तात्मपदप्रमाणकमिदं भूमीतलं ज्ञायते
किं चान्यत्करसंगमैक[ग]मकः स्वाङ्गेऽपि संप्रत्ययः ॥ ४ ॥

(889) घनतमतिमिरघुणोत्करजग्धानामिव पतन्ति काष्ठानाम् ।
छिद्रैरमीभिरुडुभिः किरण↑व्याजेन चूर्णानि ॥ ५ ॥ ↑ K. 646

मुरारेः ॥

(890) रहःसंकेतस्थो घनतमतमःपुञ्जपिहित-
वृथोन्मेषं चक्षुर्मुहुरुपदधानः पथि पथि ।
सङत्कारादल्पादपि निभृतसंप्राप्तरमणी-
भ्र[म]भ्रा[म्य]द्बाहुर्दमदमिकयोत्ताम्यति युवा ॥ ६ ॥

नोः ॥

(891) हा कष्टं क इह क्षमः प्रतिकृतौ कस्यैतदावेद्यतां
ग्रस्तं हन्त निशाचरैरिव तमःस्तोमैः समस्तं जगत् ।
कालः सोऽपि किमस्ति यत्र भगवानुद्गम्य शीतद्युतिर्
ध्वान्तौघाद्भुवमुद्धरिष्यति हरिः पातालगर्भादिव ॥ ७ ॥

विजयेन्द्रस्य ॥

---

887 — [b]) K कुरयति. 889 ○ Anr. 2.53; Smk. 69.13 (श्रीमुरारेः); Jsv. 298.5. 890 — [a]) K तपःपुंज-. 891 — [d]) K ध्वान्तौवा°.

उत्सारितो हसितदीधितिभिः कपोलादेकावलीभिरवधूत इव स्तनेभ्यः । (892) S. 2.147.2 (गणपतेः)
अङ्गेष्वलब्धपरिभोगसुखोऽन्धकारो गृह्णाति केशरचनासु रुषेव नारीः ॥ ८ ॥

व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते (893)
पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव ।
वात्यासंवेगविष्वग्विततवलयितस्फीतधूम्याप्रकाशं
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥ ९ ॥

अत्युत्सार्य बहिर्विटङ्कवडभीगण्डस्थलश्यामिकां (894)
भिन्नाभिन्नगवाक्षजालविरलच्छिद्रैः प्रदीपांशवः ।
आरूढस्य भरेण यौवनमिव ध्वान्तस्य नक्तं मुखे
निर्याताः कपिलाः करालविरलश्मश्रूप्ररोहा इव ॥ १० ॥
**भट्टगणपतेः** ॥

तनुलग्ना इव ककुभः क्ष्मावलयं च[र]णचारमात्रमिव । (895)
वियदिव चालिकदघ्नं मुष्टिग्राह्यं तमः कुरुते ॥ ११ ॥

उत्तंसः केकिपिच्छैर्मरकतवलयश्यामले दोःप्रकाण्डे (896)
हारः सारेन्द्रनीलैर्मृगमदरचितो वक्त्रपत्रप्रपञ्चः ।
नीलाब्जैः शेखरश्रीरसिततवसनता ↑ चेत्यभीकाभिसारे ↑ K 65a
संप्रत्येणेक्षणानां तिमिरभरसखी वर्तते वेशलीला ॥ १२ ॥
**राजशेखरस्य** [एतौ] ॥

## ॥ इत्यन्धकारव्रज्या ॥ २८ ॥

## ॥ ननश्चन्द्रव्रज्या ॥ २९ ॥

शृङ्गारे सूत्रधारः कुसुमशरमुनेराश्रमे ब्रह्मचारी 897 S. 1.72.1 P. 52a
नारीणामादिदेवस्त्रिभुवनमहितो रागराज्ये पुरोधाः ।

---

**892** — [c]) S1 °ध्वनद्ध-. — [d]) S1 रुचेव. **893** — [a]) K °पिच्छगुत्सा°. ○ Māl. 5.6. **895** ○ Vid.3.6; Kav. p.80; KHV. 76; Srb. p. 297.4. **896** ○ Vid. 3.7; Sab. 3.70 (राजशेखरस्य); Srb. p. 298.22. **897** — [a]) SP °राश्रम-. — [b]) S3 रागयज्ञे. — [c]) P ज्योत्स्नाशस्त्रं. — [d]) S3 कुमुदिनीनायकः.

ज्योत्स्नासत्रं दधानः पुरमथनजटाजूटकोटीशयालुर्
देवः क्षीरोदजन्मा जयति कुमुदिनीकामुकः श्वेतभानुः ॥ १ ॥
वसुकल्पस्य ॥

898 शशधरः कुमुदाकरबान्धवः कमलषण्डनिमीलनपण्डितः ।
अयमुदेति करेण दिगङ्गनाः परिमृषन्निव कुङ्कुमकान्तिना ॥ २ ॥
N. राजश्रियः ॥

(899) P. 55a लोकाः शोकं त्यजत न चिरस्थायिनी ध्वान्तवृत्तिर्
भद्रे यायाः कुमुदिनि मुदं मुञ्च मोहं चकोर ।
स्वच्छज्योत्स्नामृतरसनदीस्रोतसामेकशैलः
सोऽयं श्रीमानुदयति शशी विश्वसामान्यदीपः ॥ ३ ॥
एतौ राजश्रियः ॥

900 S. 1.75.1 (वसुकल्पस्य) P. 52a (राजशेखरस्य) P. 57b (anon) कर्पूरैः किमपूरि किं मलयजैरालेपि किं पारदैर्
अक्षालि स्फटिकोपलैः किमघटि द्यावापृथिव्योर्वपुः ।
एतत्तर्कय कैरवक्लमहरे शृङ्गारदीक्षागुरौ
दिक्कान्तामुकुरे चकोरसुहृदि प्रौढे तुषारत्विषि ॥ ४ ॥

(901) S. 1.83.5 कलाधारो वक्रः स्फुरदधररागो नवतनुर्
गलन्मानावेशास्तरुणरमणीनागर इव ।
घनश्रोणीबिम्बे नयनमुकुले चाधरदले
कपोले ग्रीवायां कुचकलशयोश्चुम्बति शशी ॥ ५ ॥
श्रीकण्ठस्य ॥

902 P. 52b (anon) संबन्धी रघुभूभुजां मनसिजव्यापारदीक्षागुरुर्
गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः ।
चन्द्रः सुन्दरि दृश्यतामयमितश्चण्डीशचूडा↑मणिः ↑N. 25a
सद्योमार्जितदा↑क्षिणात्ययुवतीदन्तावदातद्युतिः ॥ ६ ॥ ↑K. 65b

---

**898** — [c]) K om. because of next. **899** — [a]) P लोकः. P चिरं. P °वर्तिर्. — [b]) P मोहं च रावः ।. — [c]) K राजाश्रियः. **900** SP2 order *cdab*. — [a]) N तन् (किं). — [b]) P1 अद्रावि. S2 स्फटिकान्तरैः. P2 °पृथिव्यो यशः. — [d]) P1 °मुकुले; P2 °मुदरे. ○ Han. 2.7; Śp. 3639 (*cdab*); Slp. 4.28 (रामनाटकात्). **901** — [a]) K वक्त्रः. — [b]) K ललन्. K °वेशस्तरुण-. **902** P order *abdc*. — [a]) P यदुभूभुजां. — [d]) P °तरुणी° (°युवती°). P °दाताम्बुभिः. ○ Auc. ad 11; Vkj. 1.33 (*abdc*).

लेखामनङ्गपुरतोरणकान्तिभाजमिन्दोर्विलोकय तनूदरि नूतनस्य । 903 S. 1.73.2 (वसुकल्पस्य)
देशान्तरप्रणयिनोरपि यत्र यूनोर्नूनं मिथः सखि मिलन्ति विलोकितानि ॥७॥
एतौ राजशेखरस्य ॥

नैतन्नभो लवणतोयधिरेष पश्य छायापथश्च न भवत्ययमस्य सेतुः । N. *um*. 25*a* 904* P. 58*b*
नायं शशी निबिडपिण्डितभोग एष शेषो न लाञ्छनमिदं हरिरेष सुप्तः ॥ ८ ॥

कपाले मार्जारः पय इति करान् लेढि शशिनस् 905 S. 1.77.2 (राजशेखरस्य) P. 53*b*
तरुच्छिद्रप्रोतान्बिसमिव करी संकलयति ।
रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विक्लवयति ॥ ९ ॥

भवति भविष्यति किमिदं निपतिष्यति बिम्बमम्बराच्छशिनः । 906
अहमपि चन्दनपङ्कैरङ्कमनङ्कं करिष्यामि ॥ १० ॥
भिक्षुसुमतेः ॥

चिताचक्रं चन्द्रः कुसुमधनुषो दग्धवपुषः 907 S. 1.84.4 (राजशेखरस्य)
कलङ्कस्तत्रत्यो वहति मलिनाङ्गारतुलनाम् ।
इदं त्वस्य ज्योतिर्दरदलितकर्पूरधवलं
मरुद्भिर्भस्मेव प्रसरति विकीर्णं दिशि दिशि ॥ ११ ॥

सद्यश्चन्दनपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन् (908) S. 1.76.2 (राजशेखरस्य)
पश्यैरावतकान्तदन्तमुसलच्छेदोपमेयाकृतिः ।
उद्गच्छत्ययमच्छमौक्तिकमणिप्रालम्बलम्बैः करैर्
मुग्धानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥ १२ ॥

---

**903** — [a]) S1 °भाजाम्. — [d]) S2 देशांतरे. — [e]) K एता. **904** — [b]) P हेतुः ।. **905** — [b]) SP बिन(रा)मिति. — [c]) S1.2 अंशुकधिया. — [d]) S1 विह्वल°; S2 विभ्रम-; S3 विप्लव°. ○ Smk. 72 17 (भासस्य); Śp. 3640 (भासस्य); Sbh. 1994 (भासस्य); Srb. p. 301.79; Kav. p. 72; Skb. 3.114; ŚB. 2.316, 3.189, Sab. 4.79 (भासस्य); BIS. 1531. (3866); Cit. p. 64; Citkh. p. 36; Rasg. p. 273; Kpk. 553; Kpd. p. 382; Bps. 35; Amd. 687. **906** — [b]) K विश्व° (बिंब-). — [e]) K भिक्षुमतेः. **907** — [b]) S कलंकस्तस्यायं. — [c]) S अथैतस्य. ○ Auc. ad 15 (राजशेखरस्य). **908** — [a]) S3 सद्यः कुंकुम-. — [b]) S1.2 °मुषल-. ○ Vid. 3.11.

(909) S. 2.149.3 (राजशेखरस्य) P. 55b
असावेकद्वित्रिप्रभृतिपरिपाट्या प्रकटयन्
कलाः स्वैरं स्वैरं नवकमलकन्दाङ्कररुचः ।
पुरन्ध्रीणां प्रेयोविरहदहनोद्दीपितदृशां
कटाक्षेभ्यो बिभ्यन्निभृतमिव चन्द्रोऽभ्युदयते ॥ १३ ॥

(910)
उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्तिका-
संवर्तव्रतवृत्तयः कतिपये पीयूषभानोः कराः ।
अप्युच्चैर्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जता
विश्वेनेव तमोमयो निधिरपामह्नाय फेनायते ॥ १४ ॥

(911) P. 60a (anon)
काश्मीरेण दिहानमम्बरतलं वामभ्रुवामानन-
द्वैराज्यं विदधानमिन्दुदृषदां भिन्दानमम्भःशिराः ।
प्रत्युद्यत्पुरुहूतपत्तनवधूदत्तार्घदूर्वाङ्कुर-
क्षीवोत्सङ्गकुरङ्गमैन्दवमिदं तद्बिम्बमुज्जृम्भते ॥ १५ ॥

(912) P. 62b (anon)
नैवायं भगवानुदञ्चति शशी गव्यूतिमात्रीमपि
द्यामद्यापि तमस्तु कैरवकुलश्रीचाटुकाराः कराः ।
मथ्नन्ति स्थलसीम्नि शैलगहनोत्सङ्गेषु संरुन्धते
जीवग्राहमिव क्वचित्क्वचिदपि च्छायासु गृह्णन्ति च ॥ १६ ॥

(913) P. 55b (anon)
किं नु ध्वान्तपयोधिरेष कतकक्षोदैरिवेन्दोः करैर्
अत्यच्छोऽयमधश्च पङ्कमखिलं छायापदेशादभूत् ।
किं वा तत्करकर्तरीभिरभितो निस्तक्षणादुज्ज्वलं
व्योमैवेदमितस्ततश्च पतिताश्छायाच्छलेन त्वचः ॥ १७ ॥

914
दलविततिभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः ।
मदचपलचकोरचञ्चुकोटीकवलनतुच्छमिवान्तरान्तराभूत् ॥ १८ ॥

---

**909** — a) P द्वित्रिचतुर-. K °पाट्याः. — b) P °कंदांबुज-. — d) S निभृत इव; P निभृततर-. S2.3 ऽभ्युदयति; P विजयते. **910** — a) The Murāri stanzas begin here, extending to 918. ○ Anr. 2.70; Smk. 72.11 (मुरारेः); Srb. p. 303.131. **911** — c) P °पट्टन°. — d) P श्रीरोत्संग-. ○ Anr. 2.72; Srb. p. 304.164. **912** ○ Anr. 2.74; Srb. p. 303.134. **913** — a) K कटक-. — b) P अत्यच्जो. K कायापदेशा°. ○ Anr. 2.75; Smk. 72.25 (श्रीमुरारेः); Srb. p. 303.132; Sab. 4.78 (मुरारेः). **914** ○ Anr. 2.76.

तथा पौरस्त्यायां दिशि कुमुदकेदारकलिका- 915 S. 1.82.2 (मुरारेः) P. 63a (anon)
कपाटघ्नीमिन्दुः किरणलहरीमुल्लयति ।
समन्तादुन्मीलद्बहलजलबिन्दुस्तबकिनो
यथा पुञ्जायन्ते प्रतिगुडकमेणाङ्कमणयः ॥ १९ ॥

भूयस्तराणि यदमूनि तमस्विनीषु ज्यौत्स्नीषु च प्रविरलानि ततः प्रतीमः । (916) P. 51b
संध्यानलेन भृशमम्बरमूषिकायामावर्तितैरुडुभिरेव भृतोऽयमिन्दुः ॥ २० ॥

यं प्राक्प्रत्यगवागुदञ्चि ककुभां नामानि संबिभ्रतं (917) P. 61a (anon)
ज्योत्स्नाजालझलज्झलाभिरभितो लुम्पन्तमन्धं तमः ।
प्राचीनाद्चलादितस्त्रिजगतामालोकबीजाद्बहिर्
निर्यान्तं हरिणाङ्कमङ्कुरमिव द्रष्टुं जनो जीवति ॥ २१ ॥

प्राचीनाचलचूलचन्द्रमणिभिर्निर्व्यूढपाद्यं निजैर् (918) P. 61b (anon)
निर्यासैरुडुभिर्निजेन वपुषा दत्तार्घलाजाञ्जलि ।
अन्तःप्रौढकलङ्कतुच्छमभितः सान्द्रं परिस्तीर्यते
बिम्बादङ्कुरभग्ननैशिकतमःसंदोहमिन्दोर्महः ॥ २२ ॥

**मुरारेरमी ॥**

शशिनमसूत प्राची नृत्यति मदनो हसन्ति ककुभोऽपि । 919 S. 1.82.1 P. 55b (anon)
कुमुदरजःपटवासं विकिरति गगनाङ्गणे पवनः ॥ २३ ॥

**धर्मकीर्तेः ॥**

कह्लारस्पर्शिगर्भैः शिशिरपरिगमात्कान्तिमद्भिः कराग्रैश् (920) S. 1.83.1 P. 55b (anon)
चन्द्रेणालिङ्गितायास्तिमिरनिवसने स्रंसमाने रजन्याः ।
अन्योन्यालोकिनीभिः परिचयजनितप्रेमनिष्यन्दिनीभिर्
दूरारूढे प्रमोदे हसितमिव परिस्पष्टमाशावधूभिः ॥ २४ ॥

**पाणिनेः ॥**

---

**915** — [b]) P कपात-. — [c]) S3 °द्बहुल°. S°व्यतिकरैर्. — [d]) S3 °गुणक°; P गुल्क°; ○ Anr. 2.78. **916** — [b]) K ज्योत्स्नीषु; P ज्योत्स्नासु. — [c]) P भूषिका-. — [d]) P कृतोऽ. ○ Anr. 2.81. **917** — [c]) P प्राचीनाक°. ○ Anr. 7.60. **918** — [a]) P °चलचूड°. — [b]) P °जांजलिः ।. — [c]) P°प्रोढिकलंकि-. ○ Anr. 7.72. **919** ○ ŚB. 2.3. **920** — [a]) SP °स्पर्श°. SP °परिचयात्. — [c]) SP °प्रेमनिस्यंदि°. — [d]) SP °मागासखीभिः ॥.

921
S. 1.76.1
P. 52b
(विद्यायाः)

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष झगिति क्रोधादिवालोहितः ।
उद्यन्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
स्फायत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥ २५ ॥
वसुकल्पस्य ॥

(922)
S. 1.83.3
(वसुकल्पस्य)
P. 51a
(वदरुचेः)

यातस्यास्तमनन्तरं दिनकृतो वेषेण रागान्वितः
स्वैरं शीतकरः करं कमलिनीमालिङ्गितुं योजयन् ।
शीतस्पर्शमवेत्य सान्द्रमनया रुद्धे मुखाम्भोरुहे
हास्येनेव कुमद्वतीदयितया वैलक्ष्यपाण्डूकृतः ॥ २६ ॥
राजशेखरस्य ॥

(923)
S. 1.84.5
(योगेश्वरस्य)

तथोद्दामैरिन्दोः सरसबिसदण्डद्युतिधरैर्
मयूखैर्विक्रान्तं सपदि परितः पीततिमिरैः ।
दिनंमन्या रात्रिश्चकितचकितं कौशिककुलं
प्रफुल्लं निद्राणैः कथमपि यथाम्भोरुहवनैः ॥ २७ ॥
धोयीकस्य ॥

(924)
S. 1.74.2
(अपराजित-
रक्षितस्य)

उद्गर्भहूणतरुणीरमणोपमर्दभुग्नोन्नतस्तननिवेशनिभं हिमांशोः ।
बिम्बं कठोरबिसकाण्डकडारगौरैर्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥२८॥ ↑ K. 67b

(925)
S. 1.87.4
(अपराजित-
रक्षितस्य)

तमोभिर्दिक्कालैर्वियदपि विलङ्घ्य क नु गतं
गता द्राङ् मुद्रापि क नु कुमुदकोषस्य सरसः ।
क धैर्यं तच्चाब्धेर्विदितमुदयाद्रेः प्रतिसर-
स्थलीमध्यासीने शशिनि जगदप्याकुलमिदम् ॥ २९ ॥
अपराजितस्य ॥

---

**921** — [a]) S वामेक्षणानां हृदि. — [b]) S थिगिति; P झटिति. — [c]) S1.2 P उद्यद्दूर-. S तत्क्षणे. ○ Han. 2.5; Smk. 72.6; Śp. 3636; Pv. 577 (महाकवेः); Ssm. 534; Kpk. 239; Kpd. p. 223; Slp. 4.26. Sab. 4.70 (25a); SK. 5.28; Any. p. 9.78; Bps. 33; Amd. 335; Sd. ad 7.8; Jsv. 294.1. **922** — [a]) S वेशेन; P रोगेन. P रोगारुणः. — [c]) S3 °स्पर्शमवाप्य संप्रति तया गुप्ते. — [d]) S हासेनेव. S2 °वनितया. ○ Han. 2.7; Slp. 4.27 (रामनाटकात्). **923** — [a]) S1 अथोद्दा°. **924** — [a]) S3 उद्दर्प-. S °हूणरमणी-. — [b]) K भग्नोन्नत-. — [c]) K °कदार-. ○ Skb. 1.193; ŚB. 2.238, 3.188; Cit. p. 13; Ak. p. 21; Amd. 674; Vām. ad 4.2.2. **925** — [a]) S1.2 °र्दिक्कोणैर्. S वियदिव. — [b]) S3 दृङ्मुद्रापि. — [c]) S परिसर-.

प्रथममरुणच्छायस्तावत्ततः कनकप्रभस् N. lm. 24b 926 S. 1.80.1 (राजशेखरस्य) P. 50a (चित्तपस्य)
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
प्रसरति पुनर्ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ ३० ॥

चन्द्रः क्षीरमिव क्षरत्यविरतं धारासहस्रोत्करैर् 927 S. 1.78.5 (विक्रमादित्य-चण्डाल-विद्या-कालिदासानाम्)
उद्ग्रीवैस्तृषितैरिवाद्य कुमुदैर्ज्योत्स्नापयः पीयते ।
क्षीरोदाम्भसि मज्जतीव दिवसव्यापारखिन्नं जगत्
तत्क्षोभाज्जलबुद्बुदा इव तरन्त्यालोहितास्तारकाः ॥ ३१ ॥
चतुर्णाम् ॥

स्फटिकालवाललक्ष्मीं प्रवहति शशिबिम्बमम्बरोद्याने । 928 S. 1.79.4 (राजशेखरस्य)
किरणजलसिक्तलाञ्छनबालतमालैकविटपस्य ॥ ३२ ॥

इह बहलितमिन्दोर्दीधि[तीनां प्रभा]भिर् मदविकलचकोरीचञ्चुमुद्राङ्किताभिः । (929)
रतिभरपरिखेदस्रस्तरार्थं वधूनां करकिसलयलीलाभञ्जनव्यञ्जिकाभिः ॥ ३३ ॥

रजनिपुरन्ध्रिरोध्रतिलकस्तिमिरद्विपयूथकेसरी (930)
रजतमयोऽभिषेककलशः कुसुमायुधमेदिनीपतेः ।
अयमुदयाचलैकचूडामणिरभिनवदर्पणो दिशाम्
उदयति गगनसरसि हंसस्य हसन्निव विभ्रमं शशी ॥ ३४ ॥
बाणस्य ॥

एष सान्द्रतिमिरे गगनान्ते वारिणीव मलिने यमुनायाः । 931 P. 58b
भाति पक्षपुटगोपितचञ्चू राजहंस इव शीतमयूखः ॥ ३५ ॥

गगनतलतडागप्रान्तसीम्नि प्रदोष- (932) S. 1.84.3 (परमेश्वरस्य)
प्रबलतरवराहोत्खन्यमानश्वकास्ति ।
परिकलितक↑लङ्कः स्तोकपङ्कानुलेपो
निजकिरणमृणालीमूलकन्दोऽयमिन्दुः ॥ ३६ ॥ ↑K. 67b

---

**926** — b) P °होद्भाम्यत्तन्वी°. — c) SP प्रभवति ततो°. — d) P सरसि° ○ Smk. 72.4; Sbh. 2004; Kvv. p. 45; Skb. 1.120; ŚB. 2.195, 2.222; Kpk. 140; Kpd. p. 167; Aś. p. 22 ad 8.8; Bps. 29; Vkj. 1.40, 2.6 (pratīka). **927** S order *cdab*. — d) S इव भवंत्या°. — e) K चतुर्णाः ॥. **929** — d) K °लीनां भञ्जनं°. **930** ○ Kav. p. 74. **932** — b) K प्रवनतर°. — c) S °कलंकस्तोक°.

(933) परिणतलवलीफलाभिपाण्डुस्तनुरभवन्मलिनोदरा हिमांशोः ।
जनहृदयविभेदकुण्ठितेषोर्विशिखनिशातशिलेव मन्मथस्य ॥ ३७ ॥

(934) लब्धोदये सुहृदि चन्द्रमसि स्ववृद्धिम् आसाद्य भिन्नसमयस्त्रिदशोद्धृतानि ।
रत्नानि लिप्सुरिव दिग्भुवनान्तराले ज्योत्स्नाच्छलेन धवलो जलधिर्जगाह ॥ ३८ ॥
गणपतेः ॥

935 P. 53a (कालिदासस्य) पिनष्टीव तरङ्गाग्रैरर्णवः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाम् ॥ ३९ ॥

(936) P. 52a (वसुकल्पस्य) सर्वस्वं गगनश्रिया रतिपतेर्विश्वासपात्रं सखा
वास्तव्यो हरमूर्ध्नि सर्वभुवनध्वान्तौघमुष्टिंधयः ।
क्षीराम्भोधिरसायनं कमलिनीनिद्रौषधीपल्लवो
देवः कान्तिमहाधनो विजयते दाक्षायणीवल्लभः ॥ ४० ॥

937 S. 1.78.3 कर्पूरद्रवशीकरोत्करमहानीहारमग्नामिव N. lm. 25a
प्रत्यग्रामृतफेनपङ्कपटलीलेपोपदिग्धामिव ।
स्वच्छैकस्फटिकाश्मवेश्मजठरक्षिप्तामिव क्ष्मामिमां
कुर्वन् पार्वणशर्वरीपतिरसावुद्दाममुद्द्योतते ॥ ४१ ॥
परमेश्वरस्य ॥

(938) असौ बिभ्रत्ताम्रत्विषमुदयशैलस्य शिरसि
स्खलन् प्रालेयांशुर्यदि भवति मत्तो हलधरः ।
तदानीमेतत्तु प्रतिनवतमालद्युतिहरं
तमोऽपि व्यालोलं विगलति तदीयं निवसनम् ॥ ४२ ॥
योगेश्वरस्य ॥

(939) S. 1.79.5 यथायं भात्यंशून् दिशि दिशि किरन् कुन्दविशदान्
शशाङ्कः काश्मीरीकुचकलशलावण्यलडितः ।

---

**933** — [c]) K °तेर्षोर्. **935** — [d]) P दिगंगना. ○ Smk. 72.23 (भगवतो व्यासस्य); Kuv. p. 37, p. 197; Skb. 2.198, 4.238; SB. 2.350; BIS. 4081 (1778); Amd. 954; Srb. p. 299.4. **936** — [b]) P °मूर्धनि त्रिभुवन-. — [c]) P निद्रौषधीयन्दवो. — [d]) P कांतिमहोदय. P °यणीनां पतिः ।. **937** — [d]) S °द्दाम विद्योतते. — [e]) S2 (var.) S3 पञ्चमेश्वरस्य. **939** — [a]) S1 तथायं. — [b]) S °लावण्यघटितः. — [c]) S कस्तूरीमसि-. S1.2 °मुद्रावलि°; S3 °मुद्रावति°. — [e]) K सर्वस्य.

तथायं कस्तूरीमदलिखितपत्रावलितुलां
नवाम्भोदच्छेदच्छविरपि समारोहति मृगः ॥ ४३ ॥
शर्वस्य ॥

यथैवैष श्रीमांश्चरमगिरिविश्रान्तजलधौ (940) S. 1.86.1
सुधासूतिश्वेतः कनककमलाशङ्किं कुरुते । ↑ K. 68a
तथायं लावण्यप्रसरमकरन्दद्रवतृषा-
पतद्भृङ्गश्रेणीश्रियमपि कलङ्कः कलयति ॥ ४४ ॥

स्फुटकोकनदारुणं पुरस्तादथ जाम्बूनदपत्रपिञ्जराभम् । (941) S. 1.74.3
क्रमलङ्घितमुग्धभावमिन्दोः स्फटिकच्छेदनिभं विभाति बिम्बम् ॥ ४५ ॥
भगीरथस्य ॥

वियति विसर्पतीव कुमुदेषु बहूभवतीव योषितां (942)
प्रतिफलतीव जठरशरकाण्डविपाण्डुषु गण्डभित्तिषु ।
अम्भसि विकसतीव हसतीव सुधाधवलेषु धामसु
ध्वजपटपल्लवेषु ललतीव समीरचलेषु चन्द्रिका ॥ ४६ ॥

अनलसजवापुष्पोत्पीडच्छवि प्रथमं ततः (943) S. 1.74.1
समदयवनीगण्डच्छायं पुनर्मधुपिङ्गलम् ।
तदनु च नवस्वर्णादर्शप्रभं शशिनस्ततस्
तरुणतगराकारं बिम्बं विभाति नभस्तले ॥ ४७ ॥

रक्तः करं किरति पाण्डुपयोधराग्रे चन्द्रो विधूय तिमिरावरणं निशायाः । (944) P. 51a
दिग्योषितस्तदवलोक्य कुतूहलिन्यो ह्रीणाश्च सस्मितमिवापसरन्ति दूरम् ॥४८॥

गोरोचनारुचकभङ्गपिशङ्गिताङ्गस्तारापतिर्मसृणमाक्रमते क्रमेण । (945) S. 1.76.4
गोभिर्नवीनबिसतन्तुवितानगौरैराढ्यंभविष्णुरयमम्बरमावृणोति ॥ ४९ ॥

असौ समालोकितकाननान्तरे विकीर्णविस्पष्टमरीचिकेसरः । (946)
विनिर्गतः सिंह इवोदयाचलाद्गृहीतनिष्पन्दमृगो निशाकरः ॥५०॥
पाणिनेः ॥

---

**941** — c) S3 भागीरथस्य. **942** ○ Kav. p. 74; KHA. 529; Amd. 740. **943** — c) S स्वर्णाभोजप्रभं. — d) S तरुणि. S3 तु गवाकारं. **944** — c) P °हलिन्या°. — d) P व्रीडाश्च.

(947) P. 58b (anon) इन्दुमिन्द्रदिगसूत सरस्वानुत्तरङ्गभुजराजिरनृत्यत् ।
उज्जहर्ष झषकेतुरवापुः षट्पदाः कुमुदबन्धनमोक्षम् ॥ ५१ ॥
अभिनन्दस्य ॥

948 S. 1.81.1 (अभिनन्दस्य) P. 51b मृगेन्द्रस्येव चन्द्रस्य मयूखैर्नखैरिव ।
पाटितध्वान्तमातङ्गमुक्ताभा भान्ति तारकाः ॥ ५२ ॥

(949) गौरत्विषां कुचतटेषु ↑ कपोलपीठेष्वेणीदृशां रभसहासमिवारभन्ते । ↑ K. 68b
तन्वन्ति वेल्लनविलासमिवामलासु मुक्तावलीषु विशदाः शशिनो मयूखाः ॥ ५३ ॥

950 S. 1.74.4 (कस्यचित्) कचमूलबद्धपन्नगनिश्वासविषाग्निधूमहतमध्यम् ।
ऐशानमिव कपालं स्फुटलक्ष्म स्फुरति शशिबिम्बम् ॥ ५४ ॥
K. दक्षस्य ॥

951 गते ज्योत्स्नासितव्योमप्रासादाट्टकतुल्यताम् ।
हिमांशुमण्डले लक्ष्म नीलपारावतायते ॥ ५५ ॥

(952) S. 1.78.4 (राजशेखरस्य) सद्यःपाटितकेतकोदरदलश्रेणीश्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधौ योग्यच्छविः प्रागभूत् ।
उन्मेया कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः
पातव्या च शशिन्यमुग्धविभवे सा वर्तते चन्द्रिका ॥ ५६ ॥

(953) S. 1.77.1 ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छद-
च्छायाधामभृतो मृणाललतिकालावण्यभाजोऽत्र ये ।
ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रियस्
तेऽमी स्फाटिकदण्डडम्बरजितो जाताः सुधांशोः कराः ॥ ५७ ॥
राजशेखर[स्यैतौ] ॥

(954) त्रियामावामायाः कमलमृदुगण्डस्थलधृति-
प्रगल्भो गण्डाली न विधुरयमक्षुण्णकिरणः ।

---

**947** — b) P °रनर्तत ।· **948** — a) P मृगेंद्रेण च चंद्रेण· — c) P पातित-· — d) P भाति तारका· **950** — a) S करमूल°. — b) S om. निश्वास· S3 °धूमाहतं मध्ये. — c) N om.; S कस्यचित्· **952** — a) S °श्रेणि°. ○ Smk. 72.15; Śp. 3638; Sab. 4.74. **953** — a) S यवशूकसूचि°. — b) K °धामपुनर्मृ°. S °भाजश्च ये. — d) S °डंबररुचो· — e) K राजशेषरी· ○ Vid. 3.10. — b) °साम्यभृतो; KHV. 432. **954** — b) K गर्भाली or गर्ताली, both obscure.

तदक्ष्णः सीम्नेयं यदुरसि मनागञ्जनमयी
मृगच्छाया दैवादघटि न कलङ्कः पुनरयम् ॥ ५८ ॥

ज्योत्स्नामुग्धवधूविलासभवनं पीयूषवीचीसरः (955) S. 1.87.2 P. 58b
क्षीराब्धेर्नवनीतकूटमवनीतापार्तितोयोपलः ।
यामिन्यास्तिलकः कला मृगदृशां प्रेमव्रतैकाश्रमः
क्रामत्येष चकोरयाचकमहः कर्पूरवर्षः शशी ॥ ५९ ॥

ताराकोरकराजिभाजिगगनोद्याने तमोमक्षिकाः 956 S. 1.81.4 (हरेः)
संध्यापल्लवपातिनीः कवलयन्नेकान्ततस्तर्कय ।
एतस्मिन्नुदयास्तभूधरतरुद्वन्द्वान्तराले ततैर्
एभिर्भाति गभस्ति↑तन्तुपटलैः श्वे↑तोर्णनाभः शशी ॥ ६० ॥ ↑ K. 69a ↑ N. 25b

वसुकल्पस्य ॥

॥ इति चन्द्रव्रज्या ॥ २९ ॥

## ॥ ततः प्रत्यूषव्रज्या ॥ ३० ॥

मध्येव्योमकटिभ्रमास्तु कितवप्राग्भारकोपक्रम- (957)
क्षिप्रक्षिप्तकपर्दमुष्टिकलनां कुर्वन्त्यमूस्तारकाः ।
किं चायं रजनीपतिः प्रविगलल्लावण्यलक्ष्मीरितः
पर्यन्तस्थितचारुवृत्तकठिनीखण्डच्छविं वाञ्छति ॥ १ ॥

कविमल्लस्य ॥

तमोभिः पीयन्ते गतवयसि पीयूषवपुषि (958)
ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिशः ।
सरोजानां कर्षन्नलिमय[म]यस्कान्तमणिवत्
क्षणादन्तःशल्यं तपति [पति]रद्यापि न रुचाम् ॥ २ ॥

---

**955** — [a]) P °वीचीलवः. — [b]) S1.2 °वनीभावार्ति-. P तापोपनः ।. — [d]) K चकोरपारक°. P कर्पूरवेशः. **956** — [c]) S3 °न्नुदयान्त-. S °पर्वततरु-. — [d]) S एतैर्भाति. Vrajyā **30** : N om. completely. **957** — [b]) K क्षिप्रं. **958** ○ Anr. 2.1; Smk. 824 (श्रीमुरारेः); Sab. 5.65 (मुरारेः).

(959) जाताः पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारकाः
प्राचीमङ्कुरयन्ति किंचन रुचो राजीवजीवातवः ।
लूतातन्तुवितानवर्तुलमितो बिम्बं दधच्चुम्बति
प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चन्द्रमाः ॥ ३ ॥

(960) प्राचीविभ्रमकर्णिकाकमलिनीसंवर्तिकाः संप्रति
द्वे तिस्रो रमणीयमम्बरमणेर्द्यामुच्चरन्ते रुचः ।
सूक्ष्मोच्छ्वासमपीदमुत्सुकतया संभूय कोषाद्बहिर्
निष्क्रामद्भ्रमरौघसंभ्रमभरादम्भोजमुज्जृम्भते ॥ ४ ॥

(961) एकद्विप्रभृतिक्रमेण गणनामेषामिवास्तं यतां
कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्तिकाः ।
भूयोऽपि क्रमशः प्रसारयति ताः संप्रत्यमूनुद्यतः
संख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान् ॥ ५ ॥

(962) पीत्वा भृशं कमलकुड्मलशुक्तिकोषा दोषातनीतिमिरवृष्टिमथ स्फुटन्तः ।
निर्यन्मधुव्रतकदम्बमिषाद्वमन्ति बिभ्रन्ति कारणगुणानिव मौक्तिकानि ॥ ६ ॥
[अमी] मुरारेः ॥

(963) ताराणां तगरत्विषां परिकरः संख्येयशेषः स्थितः
स्पर्धन्तेऽस्तरुचः प्रदीपकशिखाः सार्धं हरिद्राङ्कुरैः । ↑ K. 695
तत्र स्तम्भितपारदद्रवजडो जातः प्रगे चन्द्रमाः
पौ[रस्त्यं] च [पुराण]सीधुमधुरच्छायं नभो वर्तते ॥ ७ ॥

(964) द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकैर्
ज्योत्स्नापानभरालसेन वपुषा सुप्ताश्चकोराङ्गनाः ।
यातोऽस्ताचलचूलमुद्वसमधुच्छत्रच्छविश्चन्द्रमाः
प्राची बालबिडाललोचनरुचां याता च पात्रं ककुप् ॥ ८ ॥

---

**959** ○ Anr. 2.2; Sbh. 2169 (मुरारेः). **960** — [a]) K °कर्णिकाः. ○ Anr. 2.4. **961** ○ Anr. 2.5; Sab. 5.77 (मुरारेः). **962** — [b]) K °तिमिदृष्टि°. — [c]) K °कदंबि°. ○ Anr. 2.11; Smk. 82.28. (मुरारेः). **963** — [b]) K ऽस्तगुरुः. ○ Bāl. 7.1; ŚB. 3. 190. **964** ○ Vid. 111; Kav. p. 95; Smk. 82.1 (राजशेखरस्य); KHV. 233.

क्षीणान्येव तमांसि किं तु दधति प्रौढिं न सम्यक् दृशो (965) S. 2.142.1 (वसुकल्पस्य)
वासः संवृतमेव किं तु जहति प्राणेश्वरं नाबलाः ।
पारावारगतैश्च कोकमिथुनैरानन्दतो गद्गदं
साकूतं रुतमेव किं तु बहलं सात्कृत्य नोड्डीयते ॥ ९ ॥

परिस्फुरत तारकाश्चरत चौरचक्राण्यलं (966)
प्रसर्पत तमांसि रे समय एष युष्मादृशाम् ।
न यावदुदयाचलोद्धतरजाः समाक्रामति
प्रभापटलपाटलीकृतनभोऽन्तरालो रविः ॥ १० ॥

प्रातः कोपविलोहितेन रविणा ध्वस्तं तमः सर्वतो (967)
भृङ्गाः पद्मपुटेषु वर्णसदृशास्तस्येति कृष्टाः करैः ।
हा कष्टं तिमिरत्विषो वयमपि व्यक्तं हता इत्यमी
काकाः संप्रति घोषयन्ति सभयाः काकेति नाम्नात्मनः ॥ ११ ॥

शक्यार्चनः सुचिरमीक्षणपङ्कजेन काश्मीरपिण्डपरिपाटलमण्डलश्रीः । (968) S. 2.143.2
ध्वान्तं हरन्नमरनायकपालितायां देवोऽभ्युदेति दिशि वासरबीजकोषः ॥१२॥
विष्णुहरेः ॥

कुन्तल इवावशिष्टः स्मरस्य चन्दनसरोनिमग्नस्य । (969)
प्रतिभाति यत्र हरिणः स हरिणलक्ष्मा गतोऽस्तमयम् ॥ १३ ॥
दक्षस्य ॥

पत्यौ याते कलानां वियति गतिवशादस्तमिन्दौ क्रमेण (970) S. 2.142.2 (योगेश्वरस्य)
क्रन्दन्ती पत्रिनादैर्विगलिततिमिरस्तोमधम्मिल्लभारा । ↑K. 70a
प्रभ्रंशिस्थूलमुक्ताफलनिकरपरिस्पर्धिताराश्रुबिन्दुः
प्रोन्मीलत्पूर्वसंध्याहुतभुजि रजनी पश्य देहं जुहोति ॥ १४ ॥

सोऽहं सुदूरमगमं द्विजराजरूढिं गाढप्रसक्तिरभवं बत वारुणीतः । (971)
इत्याकलय्य नियतं शशभृत्समस्तमस्ताद्रदौ झगिति झम्पमयं पयोधौ ॥१५॥
नरसिंहस्य ॥

**965** — [a]) S3 क्षुण्णान्येव. S3 दृशोर्. — [d]) S किं तु सहसा झात्कृत्य. **966** — [c]) K °लोद्धतजा रः. **969** — [c]) K दक्षः. **970** — [a]) S पत्यौ पात्रे. S व्रजति. — [b]) S1 पत्रिशारैर्; S2.3 पत्रिरावैर्. K °विगिलित-. S1 °ल्लभावा ।. — [c]) S3 °ताराग्र°. ○ Jsv. 292,3.

(972) स्तोकस्तोकममूभिरम्बरतले ताराभिरस्तं गतं
गच्छत्यस्तगिरेः शिरस्तदनु च च्छायादरिद्रः शशी ।
प्रत्यासन्नतरोदयस्थतरणेर्बिम्बारुणिम्ना ततो
मञ्जिष्ठारसलोहिनी दिगपि च प्राची समुन्मीलति ॥ १६ ॥
लक्ष्मीधरस्य ॥

(973) S. 1.86.3 मुषितमुषितालोकास्तारातुषारकणत्विषः
सवितुरपि च प्राचीमूले मिलन्ति मरीचयः ।
श्रयति शिथिलच्छायाभोगस्तटीमपराम्बुधेर्
जठरलवलीलावण्याच्छच्छविर्मृगलाञ्छनः ॥ १७ ॥
शर्वस्य ॥

(974) व्रजत्यपरवारिधिं रजतपिण्डपाण्डुः शशी
नमन्ति जलबुद्बुदद्युतिसपक्ष्यस्तारकाः ।
कुरुण्टकविपाण्डुरं दधति धाम दीपाङ्कुराश्
चकोरनयनारुणा भवति दिक्च सौत्रामणी ॥ १८ ॥
राजशेखरस्य ॥

(975) लब्ध्वा बोधं दिवसकरिणः कीर्णनक्षत्रमालं
दीर्घाद[स्मा]द्गगनशयनादुज्जिहानस्य दर्पात् ।
सज्जद्दानोदकतुनमलो जर्जराभीषुरज्जुर्
भ्रश्यत्येष प्रशिथिल इव श्रोत्रशङ्खः शशाङ्कः ॥ १९ ॥

(976) S. 2.143.3 (शिवस्वामिनः) तेजोराशौ भुवनजलधेः प्लाविताशातटान्तं
भानौ कुम्भोद्भव इव पिबत्यन्धकारोत्कराम्भः ।
सद्यो माद्यन्मकरकमठस्थूलमत्स्या इवैते
यान्त्यन्तस्थाः कुलशिखरिणो व्यक्तिवर्त्मक्रमेण ॥ २० ॥

---

**972** ○ Skb. 5.464; ŚB. 2.396, 3.191. **973** — [d]) S3 जरठ°. — [c]) K सर्वस्य. **974** — [c]) K कुरुण्ट्यक- ○ Vid. 4.1; Smk. 82.21 (राजशेखरस्य); Śp. 3719. **975** — [c]) K °तुलमनो. ○ Kap. 15.10. **976** — [d]) S1 सृष्टिवर्त्म; S2, 3 °दृष्टिवर्त्म°. ○ Kap. 15.32.

आमृद्न[न्त]स्तम इव सरःसीम्नि संभूय पङ्कं (977)
तारा↑सार्थैरिव पतिशुचा फेनकैः श्लिष्टपादाः । ↑ K. 70b
भ्रान्त्यादष्टस्फुटबिसलताचु[ञ्चुभिश्च]ञ्चुचक्रैश्
चक्रा बन्दीकृतविरहकृच्चन्द्रलेखा इवैते ॥ २१ ॥
**भट्ट[शिवस्वामिन]ः ॥**

कृतपादनिगूहनोऽवसीदन्नधिकश्यामकलङ्कपङ्कलेखः । (978) S. 1.86.2
गगनोदधिपश्चिमान्तलग्नो विधुरुत्तान इवास्ति कूर्मराजः ॥ २२ ॥
**शतानन्दस्य ॥**

अयमुदयति मुद्राभञ्जनः पद्मिनीनाम् उदयगिरिवनालीबालमन्दारपुष्पम् । (979) S. 2.143.1 P. 49a
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोधताम्रस्तमांसि ॥ २३ ॥ (विद्यायाः)
**योगेश्वरस्य ॥**

रथ्याकार्पटिकैः पटच्चरशतस्यूतोरुकन्थाबल- (980)
प्रत्यादिष्टहिमागमार्तिविशदप्रस्निग्धकण्ठोदरैः ।
गीयन्ते नगरेषु नागरजनप्रत्यूषनिद्रानुदो
राधामाधवयोः परस्पररहःप्रस्तावनागीतयः ॥ २४ ॥
**डिम्बोकस्य ॥**

॥ इति प्रत्यूषव्रज्या ॥ ३० ॥

## ॥ ततो मध्याह्नव्रज्या ॥ ३१ ॥

मध्याह्ने परिपुञ्जितैस्तरुतलच्छाया मृगैः सेव्यते (981)
कासारे स्फुटितोदरे सुनिभृतं कीटैरहर्नीयते ।
उत्सङ्गश्लथमुक्तहस्तयुगलन्यस्ताननः कानने
झिल्लीतोयकणाभिषेकसुखितो निद्रायते वानरः ॥ १ ॥

---

**977** — [b]) K शिष्टपादाः. ○ Kap. 15.37. **978** — [d]) K °रुत्ताल. **979** — [c]) P °द्वंद्वबध्वं. — [d]) SP क्रोडताम्रस्. — [e]) K योगेश्वरी. ○ Śp. 3738; Skb. 1.100, 2.29; ŚB. 2.217, 2.270, 3.184; Aś. p. 22 (ad 8.8); Amd. 517. Vrajyā **31** : N om. completely.

(982) S. 2.144.1 एतस्मिन्दिवसस्य मध्यसमये वातोऽपि चण्डातप-
त्रासेनेव न संचरत्यहिमगोर्बिम्बे ललाटंतपे ।
किं चान्यत्परितप्तधूलिलुठनप्लोषासहत्वादिव
च्छाया दूरगतापि भूरुहतले व्यावर्त्य संलीयते ॥ २ ॥

(983) आदौ मानपरिग्रहेण गुरुणा दूरं समारोपिता
पश्चात्तापभरेण तानवकृता नीता परं लाघवम् ।
उत्संगान्तरवर्तिनामनुगमात् संपीडिता गामिमां
सर्वाङ्गप्रणयप्रियामिव↑ तरुच्छाया समालम्बते ॥ ३ ॥ ↑K. 71a

**मलयराजस्यैते ॥**

(984) किरति मिहिरे विष्वद्रीचः करानतिवामनी
स्थलकमठवद्देहच्छाया जनस्य विचेष्टते ।
गजपतिमुखोद्गीर्णैराप्यैरपि त्रसरेणुभिः
[शि]शिरमधुरामेणाः कच्छस्थलीमधिशेरते ॥ ४ ॥

(985) उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपल-
ज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः ।
भौमोष्मप्लवमानसूरकिरणक्रूरप्रकाशा दृशोर्
आयुःकर्म समापयन्ति धिगमूर्मध्येऽह्नि शून्या दिशः ॥ ५ ॥

**मुरारेरेतौ ॥**

(986) रथ्यागर्भेषु खेलारसिकशिशुगणं त्याजयेत्पूर्वकेलीर्
उद्दण्डाब्जच्छदालीतलमुपगमयेद्राजहंसीकुलानि ।
अध्येतॄणां दधानं भृशमलसदृशां किंचिदङ्गावसादं
देवस्यैतत्समन्ताद्भवतु समुचितश्रेयसे मध्यमह्नः ॥ ६ ॥

**पुरुषोत्तमदेवस्य ॥**

(987) काश्मर्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते
नीराश्मन्तकशिम्बिचुम्बनमुखा धावन्त्यपःपूर्णिकाः ।

---

**982** — [a]) K चन्द्रातप-. — [b]) S1 °मगोर्विचे. — [c]) K°प्लौषाग्रह-. — [d]) S व्यावृत्य. **983** ○ Tāp. 3.17 ; Smk. 60.19 (अनङ्गहर्षस्य); Nāṭ. ad 19 (Tāp. 3). **984** — [c]) K °राध्यैरपि. ○ Anr.1.54; Srb. p.336.40. **985** ○ Anr. 2.30; Smk. 60.20 (श्रीमुरारेः); Srb. p. 337.46. **987** ○ Māl. 9.7. — [b]) तीराश्मन्त°; Ssm. 775; Ak. p. 294; ŚB. 4.841; Srb. p. 337.49.

दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितं
वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुक्कुभाः ॥ ७ ॥

उद्दामज्वलदंशुमालिकिरणव्यर्थातिरेकादिव (988)
च्छायाः संप्रति यान्ति पिण्डपदवीं मूलेषु भूमीरुहाम् ।
किं चैतद्दनुजाधिराजयुवतीवर्गावगाहोत्सरत्-
क्षोभोड्डीनविहंगमण्डलकृतालीकातपत्रं सरः ॥ ८ ॥
धर्मांशोकस्य ॥

धत्ते पद्मलतादलेप्सुरुपरि स्वं कर्णतालं द्विपः (989) S. 2.144.2
शष्पस्तम्बरसान्नियच्छति शिखी मध्येशिखण्डं शिरः । (राजशेखरस्य)
मिथ्या लेढि मृणालकोटिरभसाद्दंष्ट्राङ्कुरं शूकरो
मध्याह्ने महिषश्च वाञ्छति निजच्छायामहाकर्दमम् ॥ ९ ॥

विशन्तीनां स्नातुं जघनपरिवेशैर्मृगदृशां ↑ K. 71b (990)
यदम्भः संप्राप्तं प्रमदवनवाप्यास्तटभुवम् ।
गभीरे तन्नाभीकुहरपरिणाहेऽध्वनि सकृत्
कुहुंकारस्फारं रचयति च नादं नमति च ॥ १० ॥
राजशेखरस्य ॥

विष्वङ् मुर्मुरनर्म बिभ्रति पथां गर्भेष्वदभ्राः पटु- (991)
ज्योतिर्मुक्तनिरभ्रदीधितिघटानिर्धूपिता धूलयः ।
मेघच्छायधियाभिधावति पुरो निर्दग्धदूर्वावनं
पान्थः किं च मरीचिवीचिषु पयःपूरभ्रमः क्रामति ॥ ११ ॥

ध्वान्तानीलवनाद्रिकोटरगृहेष्वध्यासते कोकिलाः (992)
पान्थाः पोतवदापिबन्ति कलुषं धान्याः प्रतप्तं पयः ।
तल्लाम्भो वनतामसोलनिवहस्याशक्तसूर्यस्तुति-
व्रातस्फीतवराहसैरिभसभास्वस्थैणयूथाच्युतम् ॥ १२ ॥

---

**988** — [c]) K धर्मशोकस्य. **989** ○ Vid. 1.43; Smk. 60.21 (राजशेखरस्य). Śp. 3837 (राजशेखरस्य); Srb. p. 337.44. **990** ○ Vid. 1.44; Srb. p. 337.43. — [d]) निनादं नयति च. **991** — [a]) K विम्व°. K °नर्मु. **992** — [a]) K ध्वान्तानीव°.

(993) धूमोऽटन्नटवीषु चाटुपटलानाटीकयत्युच्छलत्-
पांशुप्रांशुभराभि[राभि]रभितो वातोर्मिभिर्वर्त्मनः ।
उत्सर्पद्दवधूमविभ्रमभृतः किं च प्रतीचीरपः
कुर्वन्त्यच्छमरीचिवी[चि]निचयभ्रान्त्या ह्रदान्ते मृगाः ॥ १३ ॥
बुद्धाकरगुप्तस्य ॥

(994) मध्याह्ने परिनिर्मलेषु शकुलः शैवालमालाम्बुषु
स्थूलत्वाज्जलरङ्कुनिर्जितभयः पुच्छाग्ररोमावलीः ।
लीलाताण्डवडम्बरैरवकिरन् पानीयपूर्णोदरस्
तुण्डाग्रात् क्षणपीतवारिगुडिकामुद्गीर्य संलीयते ॥ १४ ॥

॥ इति मध्याह्नव्रज्या ॥ ३१ ॥

## ॥ ततो यशोव्रज्या ॥ ३२ ॥

995 S. 3.47.5 (रथाङ्गस्य) P. 75a

देव स्वस्ति वयं द्विजास्तत इतस्तीर्थेषु सिस्नासवः
कालिन्दीसुरसिन्धुसंगपयसि स्नातुं समीहामहे ।
तद्याचेमहि सप्तपिष्टपशुचीभावैकतानव्रतं
संयच्छ स्वयशः सितासितपयोभेदाद्विवेकोऽस्तु नः ॥ १ ॥

996 S. 3.50.3 (तुतातितस्य) P. 75b

किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थस् ↑K. 72a
तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्याम्
उन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥ २ ॥
विद्यायाः ॥

997 S. 3.51.5 (राजशेखरस्य) P. 75b

सा चन्द्रादपि चन्दनादपि दरव्याकोषकुन्दादपि
क्षीराब्धेरपि शेषतोऽपि फणिनश्चण्डीशहासादपि ।

---

**993** — [a]) K धूम्याटं नट-. K °पटनामाटी°. **994** — [b]) K °ज्जलटङ्कु°. Vrajyā **32** : NK have identical stanzas. **995** — [a]) S °षु निष्कल्मषाः; P प्रतिष्ठासवः. — [c]) S₂ °विष्टप°. — [d]) S स्वं यच्छस्व. ○ KHA. 286; Kvv. p. 21. **996** — [b]) K मुखरकुहरो; P प्रकृतिचपलो. S₁ दाक्षिणात्यः. — [c]) S देशे देशे विप°. ○ Śp. 1227 (मातङ्गदिवाकरस्य); Sbh. 2544 (मातङ्गदिवाकरस्य); Ssm. 73; KHA. 614; As. ad 37. **997** — [b]) P शेषभोगी°. — [d]) S₃ °रिपोर्-.

कर्णाटीसितदन्तपत्रमहसोऽप्यत्यन्तमुद्द्योतिनी
कीर्तिस्ते भुजवीर्यनिर्जितरिपो लोकत्रयं भ्राम्यति ॥ ३ ॥
वार्तिककारस्य ॥

त्वद्यशोराजहंसस्य पञ्जरं भुवनत्रयम् । 998 P. 75b (डिम्बोकस्य)
अमी पानकरङ्काभाः सप्तापि जलराशयः ॥ ४ ॥
बिम्बोकस्य ॥

यत्क्षारं च मलीमसं च जलधेरम्भस्तदम्भोधरैः 999 P. 75b
कृत्वा स्वादु च निर्मलं च निहितं यत्नेन शुक्तौ तथा ।
येनानर्घतया च सुन्दरतया चेदं यशोभिस्तव
स्पर्धामेत्य विराजते ननु परीणामोऽद्भुतो मौक्तिकः ॥ ५ ॥
अचलसिंहस्य ॥

दृष्टं संगरसाक्षिभिर्निगदितं वैतालिकश्रेणिभिर् 1000 S. 3.48.4 (राजशेखरस्य) P. 76a
न्यस्तं चेतसि सज्जनैः सुकविभिः काव्येषु संचारितम् ।
उत्कीर्णं कुशलैः प्रशस्तिषु सदा गीतं च नाकेसदां
दारैरुज्जयनीभुजङ्ग भवतश्चन्द्रावदातं यशः ॥ ६ ॥

उत्कल्लोलस्य लक्ष्मीं लवणजलनिधिर्लम्भितः क्षीरसिन्धोः 1001 P. 76a
को विन्ध्यः कश्च गौरीगुरुरिति मरुतामभ्युदस्तो विवेकः ।
नीताः कर्कत्वमर्कप्रवहणहरयो हारितोत्सङ्गलक्ष्मा
राजन्नुद्दामगौरैरजनि च रजनीवल्लभस्त्वद्यशोभिः ॥ ७ ॥
अभिनन्दस्य ॥

निर्मुक्तशेषधवलैरचलेन्द्रमन्थसंक्षुब्धदुग्धमयसागरगर्भगौरैः । 1002
राजन्निदं बहुलपक्षदलन्मृगाङ्कच्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ ८ ॥

---

**999** — [a]) N °स्तदाम्भो°. — [c]) P °नर्घ्यतया. — [d]) P परीनामोऽस्तु ते मौक्तिकः. — [e]) N °सिंघस्य ॥. **1000** — [b]) P कर्णेषु सं°. — [c]) P गीर्तिं. S1.2 नाकेषदां. — [d]) S दारैर्जितवैरिवीर भवत°. **1001** — [a]) KP लक्ष्मी-. P °निधिर्लंघितः. — [d]) K त्वद्दशोभिः. **1002** ○ Anr. 1.35; Ak. p. 154.

1003 P. 76a स्वस्ति क्षीराब्धिमध्यान्निजदयितभुजाभ्यन्तरस्थाब्जहस्ता ↑ K. 72b
क्षमायामक्षामकीर्तिं कुशलयति महाभूभुजं भोज्यदेवम् ।
क्षेमं मेऽन्यद्युगान्तावधि तपतु भवान् यद्यशोघोषणाभिर्
देवो निद्रादरिद्रः सफलयति हरियौवनर्द्धिं ममेति ॥ ९ ॥

1004 P. 76b त्वत्कीर्तिर्जातजाड्येव सप्ताम्भोनिधिमज्जनात् ।
प्रतापाय जगन्नाथ याता मार्तण्डमण्डलम् ॥ १० ॥

1005 S. 3.50.1 (छित्तपस्य) P. 76b का त्वं, कुन्तलमल्लकीर्तिर्, अहह क्वासि स्थिता, न क्वचित्,
सख्यस्तास्तव कुत्र कुत्र वद वाग्लक्ष्मीस्तथा कान्तयः ।
वाग्याता चतुराननस्य वदनं लक्ष्मीर्मुरारेरुरः
कान्तिर्मण्डलमैन्दवं मम पुनर्नाद्यापि विश्राममभूः ॥ ११ ॥

1006 S. 3.51.3 (हरेः) P. 76b (अमरसिंहस्य) आसीदुप्तं यदेतद्रणभुवि भवता वैरिमातङ्गकुम्भान्
मुक्ताबीजं तदेतत्त्रिजगति जनयामास कीर्तिद्रुमं ते ।
शेषो मूलं प्रकाण्डं हिमगिरिरुदधिर्दुग्धपूरालवालं
ज्योत्स्ना शाखाप्रतानः कुसुममुडुचयो यस्य चन्द्रः फलं च ॥ १२ ॥

1007 S. 3.53.4 (मुरारेः) P. 76b (अमरसिंहस्य) अद्य स्वर्गवधूगणे गुणमय त्वत्कीर्तिमिन्दूज्ज्वलाम् ↑ N. 26a
उच्चैर्गायति निष्कलङ्किमदशामादास्यते चन्द्रमाः ।
गीताकर्णनमोदमुक्तयवसग्रासाभिलाषो वद
स्वामिन्नङ्कमृगः कियन्ति हि दिनान्येतस्य वर्तिष्यते ॥ १३ ॥

1008 P. 77a अभयमभयं देव ब्रूमस्तवासिलतावधूः
कुवलयदलश्यामा शत्रोरुरःस्थलशायिनी ।
समयसुलभां कीर्तिं भव्यामसूत सुतामसाव्
अपि रमयितुं रागान्धेव भ्रमत्यखिलं जगत् ॥ १४ ॥

**अमरसिंहस्य** ॥

---

**1003** — [b]) P °क्ष्यामकीर्तिं· K मुदा (महा-). P °भूभुजं भोजराजं· — [c]) P क्षेमं मन्ये· P त्वद्यशो-· **1004** — [d]) N जाता· ○ SK. 4.5. — [c]) आतपाय महीपाल· — [d]) गता· **1005** — [b]) S वाग्लक्ष्मीरुचः संप्रति· **1006** — [b]) S विमुक्तं (तदेतत्)· S1 कीर्तिद्रुमस्; P कीर्तिस्त्रयं· — [c]) P दग्ध- (दुग्ध-). — [d]) S3 °मुडुचया· **1007** — [a]) S स्वर्गि-· P गुणमयस्· P मिंदुज्वला· — [c]) P ग्रीवाकर्णललाटमुक्त-· S3 वर- (वद). — [d]) P कियंति दिवसान्· **1008** — [b]) P गतो°(शत्रो°). — [c]) P समरसुलभां· P यशस्यसाव्· — [d]) P वमयितुं रागादाशा· — [e]) N °सिंघस्य ॥.

द्यामावृणोति धरणीतलमातनोति पातालमूलतिमिराणि तिरस्करोति । 1009 P. 77a
हारावलीहरिणलक्ष्महराट्टहासहेरम्बदन्तहरिशङ्खनिभं यशस्ते ॥ १५ ॥

देव त्वद्यशसि प्रसर्पति शनैर्लक्ष्मीसुधोच्चैःश्रवश्- ↑K. 73a 1010 P. 77a (कविराजस्य)
चन्द्रैरावतकौस्तुभाः स्थितिमिवामन्यन्त दुग्धोदधौ ।
किं त्वेकः परमस्ति दूषणकणो यन्नोपयाति भ्रमात्
कृष्णं श्रीः शितिकण्ठमद्रितनया नीलाम्बरं रेवती ॥ १६ ॥

ऐरावणन्ति करिणः फणिनोऽप्यशेषाः शेषन्ति हन्त विहगा अपि हंसितारः । 1011 S. 3.47.4 (महाशक्तेः) P. 77a
नीलोत्पलानि कुमुदन्ति च सर्वशैलाः कैलासितुं व्यवसिता भवतो यशोभिः॥१७॥

रामः सैन्यसमन्वितः कृतशिलासेतुर्यदम्भोनिधेः 1012 S. 3.50.2 (छित्तपस्य) P. 77b
पारं लङ्घितवान् पुरा तदधुना नाश्चर्यमापादयेत् ।
एकाकिन्यपि सेतुबन्धरहितान् सप्तापि वारांनिधीन्
हेलाभिस्तव देव कीर्तिवनिता यस्मात्समुल्लङ्घति ॥ १८ ॥

न तच्चित्रं यत्ते विततकरवालोग्ररसनो 1013 S. 3.48.1 P. 77b (संहरश्रियः)
महीभारं वोढुं भुजभुजगराजः प्रभवति ।
यदुद्भूतेनेदं नवबिसलतातन्तुशुचिना
यशोनिर्मोकेण स्थगितमवनीमण्डलमभूत् ॥ १९ ॥

संघश्रियः ॥

श्रीखण्डपाण्डिमरुचः स्फुटपुण्डरीकषण्डप्रभापरिभवप्रभवास्तुदन्ति । 1014
त्वत्कीर्तयो गगनदिग्वलयं तदन्तःपिण्डीभवन्निबिडमूर्तिपरम्पराभिः ॥ २० ॥

बुद्धाकरगुप्तस्य ॥

अपनय महामोहं राजन्ननेन तवासिना 1015 S. 3.29.3 P. 82b
कथय कुहकक्रीडाश्चर्यं कथं क च शिक्षितम् ।

---

**1010** — [a]) P देवस्. K शनैर्लक्ष्म्या ; P समैर्लक्ष्मी. ○ Śp. 1226. **1011** — [b]) S2 हंसिभावः। **1012** — [b]) S °मुत्पादयेत्।; P °मुत्पादयन्।. — [c]) P °रहिता. — [d]) P कीर्तिरबला. P °ह्लंघते. **1013** — [a]) S चित्ते (यत्ते). — [b]) S सोढुं. **1014** — [e]) K °करगुप्तानां॥; perhaps Buddhākaragupta was promoted between N and K (*cf.* 17). **1015** — [a]) P om. महा-. — [b]) S कुहकाश्चर्यं केदं कथं. S3 नु (क). P सिक्षितम्. — [d]) SP झटिति.

यदरिरुधिरं पायं पायं कुसुम्भरसारुणं
झगिति वमति क्षीराम्भोधिप्रवाहसितं यशः ॥ २१ ॥
दक्षस्य ॥

1016 त्वं काम्बोज विराजसे भुवि भवत्तातो दिवि भ्राजते
तत्तातस्तु विभूषणः स किमपि ब्रह्मौकसि द्योतते ।
युष्माभिस्त्रिभिरेभिरर्पिततनुस्त्वत्कीर्तिरुज्जृम्भिणी
माणिक्यस्तबकत्रयप्रणयिनीं हारस्य धत्ते ↑ श्रियम् ॥ २२ ॥ ↑ K. 73b
वसुकल्पस्य ॥

1017 जनानुरागमिश्रेण यशसा तव सर्पता ।
दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कमम् ॥ २३ ॥

1018 P. 83b इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारिर्
दिग्नागानां मदजलमसीभाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक श्यामलिम्नावलिप्तान्य्
आभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥ २४ ॥

॥ इति यशोव्रज्या ॥ ३२ ॥

## ॥ ततोऽन्यापदेशव्रज्या ॥ ३३ ॥

1019 S. 4.18.5 P. 70a अये मुक्तारत्न प्रसर बहिरुद्द्योतय गृहान्
अपि क्षोणीन्द्राणां कुरु फलवतः स्वानपि गुणान् ।
किमत्रैवात्मानं जरयसि मुधा ↑ शुक्तिकुहरे ↑ N. 26b
महागम्भीरोऽयं जलधिरिह कस्त्वां गणयति ॥ १ ॥
मुरारेः ॥

---

**1017** ○ Kav. p.26,p.41,p.83. — [a]) गुणानु°. **1018** — [a]) P मुरारेर्. ○ Sbh. 2563 (राजशेखरकवेः); Kuv. p. 157; As. ad 37; Amd. 834; ŚB. 2.340; Srb. p.135.32. — [c]) °तिलक-. **1019** — [b]) S2.3 क्षौणींद्राना. — [c]) S धिगत्रैवात्मानं. S2 जनयति. P सुधा. — [d]) P °धिरिति. ○ Any. p. 92.53.

अप्रत्याकलितप्रभावविभवे सर्वाश्रयाम्भोनिधौ 1020 P. 69a (कविराजस्य), 70b (anon)
वासो नाल्पतपःफलं यदपरं दोषोऽयमेको महान् ।
शम्बूकोऽपि यदत्र दुर्लभतरै रत्नैरनर्घैः सह
स्पर्धामेकनिवासकारणवशादेकान्ततो वाञ्छति ॥ २ ॥

पद्माकरः परिमितोऽपि वरं स एव यस्य स्वकामवशतः परिभुज्यते श्रीः । 1021 P. 70b
किं तेन नीरनिधिना महता तटेऽपि यस्योर्मयः प्रकुपिता गलहस्तयन्ति ॥ ३ ॥
दामोदरस्य ॥

नीरेऽस्मिन्नमृतांशुमुत्सुकतया कर्तुं करे कौतुकिन् 1022
मा निम्नेऽवतरार्जवादियमधस्तस्य प्रतिच्छायिका ।
मर्त्येऽस्य ग्रहणं क्व दर्शनसुधाप्युन्मुक्तनेत्रश्रियां
स्वर्लोकेऽपि लवः शवेश्वरजटाजूटैकचूडामणिः ॥ ४ ॥
वल्लणस्य ॥

केनासीनः सुखमकरुणेनाकरादुद्धृतस्त्वं 1023 S. 4.17.5 (मङ्गलस्य) P. 175b
विक्रेतुं वा त्वमभिलषितः केन देशान्तरेऽस्मिन् । N. lm. 26b
यस्मिन् वित्तव्ययभरसहो ग्राहकस्तावदास्तां
नास्ति भ्रातर्मरकतमणे त्वत्परीक्षाक्षमोऽपि ॥ ५ ॥

मूर्धारोपणसत्कृतैर्दिशि दिशि क्षुद्रैर्विहङ्गैर्गतं ↑K. 74a 1024 S. 4.49.2
छायादाननिराकृतश्रमभरैर्नष्टं मृगैर्भीरुभिः ।
हा कष्टं फललोलुपैरपसृतं शाखामृगैश्चञ्चलैर्
एकेनैव दवानलव्यतिकरः सोढः परं शाखिना ॥ ६ ॥

अयं वारामेको निलय इति रत्नाकर इति 1025 S. 4.9.3 (विद्यापतेः) P. 68b (कालिदासस्य)
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।

---

**1020** — [a]) P1 अप्रत्या; P2 स्वप्रत्या-. — [b]) P1 नान्यतपः°. P1 °को भवान्; P2 °को वने ।. — [c]) P1 दुर्लभतलै°. **1023** — [a]) S3 नादराद्. — [b]) S कथमुपनतः; P समभिलषितः-. P देशांतरेऽपि. — [c]) S अस्मिन्. P lac. after °व्ययभ-. ○ Smk. 28.11 (सर्ववर्मणः); Śp. 1110 (शर्ववर्मणः); Any. p. 91.46; ŚB. 2.9 **1024** — [a]) S द्रुतं (गतं). **1025** — [b]) K जलनिधेः. — [c]) N ? नन्दीकस्य. ॥; rest as shown; note variant ascription in following sources. ○ Smk. 27.18 (वररुचेः); Śp. 1091 (मालवरुद्रस्य); Bhallaṭaśataka 108 (final); Kuv. p. 108; SK. 3.234; Kpk. 490; Kpd. p. 356; BIS. 546 (3573); Any. p. 98.43; SG. 32a; Jsv. 291.5; As. p. 135.

क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ७ ॥

K. कविनन्दस्य ॥

1026 जन्म व्योमसरःसरोजकुहरे मित्राणि कल्पद्रुमाः
क्रीडा स्वर्गपुरन्ध्रिभिः परिचिताः सौवर्णवल्लीस्रजः ।
अप्यस्मादवतार एव भवतो नोन्मादभेरीरवः
सम्यक्मूर्च्छितकेलयः पुनरिमे भृङ्ग द्विरभ्याहतिः ॥ ८ ॥

1027 अङ्गेनाङ्गमनुप्रविश्य मिलतो हस्तावलेपादिभिः
का वार्ता युधि गन्धसिन्धुरपतेर्गन्धोऽपि चेत्के द्विपाः ।
जेतव्योऽस्ति हरेः स लाञ्छनमतो वन्दामहे तामभूद्
यद्गर्भे शरभः स्वयंजय इति श्रुत्वापि यो नाङ्कितः ॥ ९ ॥

वल्लणस्यैतौ ॥

1028 S. 4.20.2 (अमरसिंहस्य) आजन्मस्थितयो महीरुह इमे कूले समुन्मूलिताः
कल्लोलाः क्षणभङ्गुराः पुनरमी नीताः परामुन्नतिम् ।
अन्तः प्रस्तरसंग्रहो बहिरपि भ्रश्यन्ति गन्धद्रुमा
भ्रातः शोण न सोऽस्ति यो न हसति त्वत्संपदां विप्लवे ॥ १० ॥

1029 S. 4.60.5 (अचलसिंहस्य) अमुं कालक्षेपं त्यज जलद गम्भीरमधुरैः
किमेभिर्निर्घोषैः सृज झटिति झात्कारि सलिलम् ।
अये पश्यावस्थामकरुणसमीरव्यतिकर-
स्फुरद्दावज्वालावलिजटिलमूर्तेर्विटपिनः ॥ ११ ॥

1030 युक्तं त्यजन्ति मधुपाः सुमनोविनाश-
काले यदेनमवनीरुहमेतदस्तु ।
एतत्त्वदृष्टचरमश्रुतवार्↑तमेताः ↑ K. 74b
शाखास्त्वचोऽपि तनुकाण्डसमा↑स्त्यजन्ति ॥ १२ ॥ ↑ N. 27a

---

**1027** — [d]) N श्रुत्यापयो· — [e]) K om. एतौ. **1028** — [b]) S °भंगुराश्च सहसा· — [d]) S2 हसते. ◌ Smk. 30.5; Śp. 1122; Any. p. 102.77; SG. 24b. **1029** S order *cdab.* ◌ Śp. 784 (अचलस्य); Smk. 13.13 (अचलस्य); Ssm 1138 (अचलस्य); SK. 3.51.

↑स वन्द्यः पाथोदः स खलु नयनानन्दजननः ↑N. 28*a l.* 1. 1031
परार्थे नीचेऽपि व्रजति लघुतां योऽर्थिसुभगाम् ।
कथापि श्रोतव्या भवति हतकेतोर्न च पुनर्
जनानां ध्वंसाय प्रभवति हि यस्योद्गतिरपि ॥ १३ ॥

उदञ्चद्धर्मांशुद्युतिपरिचयोन्निद्रबिसिनी- 1032
घनामोदाहूतभ्रमरभरझङ्कारमधुराम् ।
अपश्यत्कासारश्रियममृतवर्तिप्रणयिनीं
सुखं जीवत्यन्धूदरविवरवर्ति प्लवकुलम् ॥ १४ ॥
मैत्रीश्रियः ॥

सुवर्णकार श्रवणोचितानि वस्तूनि विक्रेतुमिहागतस्त्वम् । 1033
कुतोऽपि नाश्रावि यदत्र पल्ल्यां पल्लीपतिर्यावदविद्धकर्णः ॥ १५ ॥

यस्यावन्ध्यरुषः प्रतापवसतेर्नादेन धैर्यद्रुहां 1034 P. 198*b*
शुष्यन्ति स्म मदप्रवाहसरितः सद्योऽपि दिग्दन्तिनाम् ।
दैवात्कष्टदशावशं गतवतः सिंहस्य तस्याधुना
कर्षत्येष करेण केशरसटाभारं जरत्कुञ्जरः ॥ १६ ॥

उत्क्रान्तं गिरिकूटलङ्घनसहं ते वज्रसारा नखास् 1035 S. 4.36.3
तत्तेजश्च तदूर्जितं स च नगोन्माथी निनादो महान् । P. 198*b*
आलस्यादविमुञ्चता गिरिगुहां सिंहेन निद्रालुना
सर्वं विश्वजयैकसाधनमिदं लब्धं न किञ्चित्कृतम् ॥ १७ ॥

हंहो जनाः प्रतिपथं प्रतिकाननं च N. 27*a l.* 1 1036 P. 184*a*
तिष्ठन्तु नाम तरवः फलिता नताश्च ।
अन्यैव सा स्थितिरहो मलयद्रुमस्य
यद्गन्धमात्रमपि तापमपाकरोति ॥ १८ ॥

---

**1031** For the rest of this Vrajyā, N & K differ considerably in order; folio and line in N of the *first* of each group of stanzas is indicated, the rest following consecutively till the next change shown. **1032** — [d]) K जीवत्यन्दूदर-. **1033** ○ Sbh. 975 (? जयवर्धन); SG. 25*b*; Srb. p. 231.45. **1034** — [a]) P °देन हानात्मनां. — [c]) P गतस्य भवतः (गतवतः). ○ Śp. 916. **1035** — [a]) K तत्क्रांतं. — [b]) P नख * * माथी विनादो महा ।. — [d]) P किंचित्कुतः ॥. **1036** — [b]) P लताश्च ।.

1037 P. 195a (नन्दनस्य) यन्नीडप्रभवो यदञ्जनरुचिर्यत्खेचरो यद्द्विजस् N. 28a l. 5
तेन त्वं स्वजनः किलेति करटैर्यत्तैरुपब्रूयसे ।
तत्रातीन्द्रियमोदिमांसलरसोद्गारस्तवैष ध्वनिर्
दोषोऽभूत्कलकण्ठनायक निजस्तेषां स्वभावो हि सः ॥ १९ ॥
वल्लणस्य ॥

1038 S. 4.54.5 (कविराजस्य) P. 184a किं ते नम्र↑तया किमुन्नततया किं ते घनच्छायया ↑ K. 75a
किं ते पल्लवलीलया किमनया चाशोक पुष्पश्रिया ।
यत्त्वन्मूलनिषण्णखिन्नपथिकस्तोमः स्तुवन्नन्वहो
न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥ २० ॥

(1039) S. 4.57.5 (गदाधरस्य) कल्याणं नः किमधिकमितो जीवनार्थं यदस्माल्
लूत्वा वृक्षानहह दहसि भ्रातरङ्गारकार ।
किं त्वेतस्मिन्नशनिपिशुनैरातपैराकुलानाम्
अध्वन्यानामशरणमरुप्रान्तरे कोऽभ्युपायः ॥ २१ ॥

1040 P. 196a रुद्धा दिशः प्रवितताः सलिलं विषेण
पाशैर्मही हुतवहज्वलिता वनान्ताः ।
व्याधाः पदान्यनुसरन्ति गृहीतचापाः
कं देशमाश्रयतु यूथपतिर्मृगाणाम् ॥ २२ ॥ N. 27a l. 1

1041 P. 68b आदाय वारि परितः सरितां शतेभ्यः किं नाम साधितमनेन महार्णवेन ।
क्षारीकृतं च वडवादहने हुतं च पातालकुक्षिकुहरे विनिवेशितं च ॥२३॥ N. 28a l. 7

---

**1037** — [a]) P °प्रसवो. — [b]) P सुजनः. P °रुपाद्रीयसे. — [c]) P मासनरसोद्गारं. **1038** — [a]) K किं वा घन°. — [b]) P वाशोक. — [c]) KSP स्तुवन्नन्वयं. — [e]) S1 कविराजश्रीनारायणस्य. ○ Smk. 33.32 (श्रीभोजदेवस्य); Śp. 1004 (श्रीभोजदेवस्य); Pmt. 240; Ssm. 1284 (भोजस्य); Kvv. p. 7; BIS. 1753 (680) (Vetālabhaṭṭa, Nītipr. 9 in Haeberlin p. 527); St. 8.2; Any. p. 114.60; Jsv. 268.4; Srb. p. 238.77. **1039** — [a]) S °कमतो वर्तनार्थं. — [c]) S °रातपैस्तापितानां. — [d]) S °नामपयसि मरु-. ○ Smk. 33.6; Śp. 1183; Any. p. 147.50; SG. 32a; Srb. p. 220.4. **1040** — [d]) P °माश्रयति. ○ Bhallaṭaśataka 103. — [b]) हुतभुजा; Sbh. 648 (मुक्तापीडस्य); Any. p. 39.12. **1041** — [a]) P सरितां मुखेभ्यः. ○ Smk. 27.5 (शुकस्य); Śp. 1083 (श्रीशुकस्य); Sbh. 891; Auc. ad 20 (भट्टेन्दुराजस्य); Pmt. 247; Ssm. 1336; KHA. 562; Ssv. 1187; Kpk. 445; SK. 3.218; Any. p. 95.29; Amd. 815; Srb. p. 216.17.

सोढप्रौढहिमक्लमानि शनकैः पत्राण्यधः कुर्वते
संभाव्यच्छदवाञ्छयैव तरवः केचित्कृतघ्नव्रताः ।
नामन्यन्त तदातनीमपि निजच्छायाक्षतिं तैः पुनस्
तेषामेव तले कृतज्ञचरितैः शुष्यद्भिरप्यास्यते ॥ २४ ॥

(1042)
S. 4.49.5
(अचलसिंहस्य)
P. 183b

मदोष्मासंतापाद्वनकरिघटा यत्र विमले
ममज्जुर्निःशेषं तटनिकट एवोन्नतकराः ।
गते दैवाच्छोषं वरसरसि तत्रैव तरला
बकग्रासत्रासाद्विशति शफरी पङ्कमधुना ॥ २५ ॥

(1043)
S. 4.22.5
(मधुरशीलस्य)

यद्वीचीभिः स्पृशसि गगनं यच्च पातालमूलं
रत्नैरुद्द्योतयसि पयसा यद्धरित्रीं पिधत्से ।
धिक् तत्सर्वं तव जलनिधे यद्विमुच्याश्रुधारास्
तीरे नीरग्रहणरभसैरध्वगैरुज्झितोऽसि ॥ २६ ॥

(1044)
S. 4.11.3
(शुभाङ्कस्य)
P. 70b

लोला श्रीः शशभृत्कलङ्कमलिनः क्रूरो मणिग्रामणीर्
माद्यत्यत्रभ्रमुवल्लभोऽपि सततं तत्कालकूटं विषम् ।
इत्यन्तः स्वकुटुम्बदुर्णयपरामर्शाग्निना दह्यते ↑K. 75b
बाढं वाडवनामधेयदहनव्याजेन वारांनिधिः ॥ २७ ॥

(1045)
S. 4.12.1
(वाणीकुटिल-
लक्ष्मीधरस्य)
P. 69b
(लक्ष्मीधरस्य)

यन्मार्गोद्धुरगन्धवातकणिकातङ्कार्तिनानादरी-
कोणाकुञ्चदुरोनिगूहितशिरःपुच्छा हरीणां गणाः ।
दृप्यद्दुर्दमगन्धसिन्धुरजयोत्खातेऽपि कामं स्तुतः
स्मेरोऽयं शरभः परां हृदि घृणामायाति जातिस्मरः ॥ २८ ॥

(1046)
S. 4.35.2
(वल्लणस्य)
P. 201b

---

**1042** — [c]) S3 च्छायाक्षिति. S2 ते; P भैः (तैः) ○ SG. 33a; Smk. 33.8 (बिल्हणस्य). **1043** — [a]) S मदोष्ण(S1 ष्ण)प्रागल्भ्याद्. — [b]) S ममज्जुर्निःशंकं. — [c]) S गते शोषं दैवाद्. **1044** — [b]) S °रुद्दीपयसि. S यत्पिधत्से धरित्रीं. — [c]) P तदखिलनिधेर्. — [d]) S °ग्रहणविमुखैर्. — [e]) S1 शुभाङ्कस्य. ○ Smk. 27.14; Śp. 1090 (गौडाभिनन्दस्य); SK. 3.216. **1045** — [b]) P माद्यन्तभ्रमु-. — [d]) S गाढं. S1 धारां निधेः. **1046** P corrupt. — [a]) S यस्यानुद्ध (S2 द्ध) रगंध-. — [b]) S कोणोदञ्च° — [a]) S दृप्यद्दुर्जय-. S° त्वातेन का मे स्तुतिः. — [d]) S सरभः. S जातस्मय: ॥.

1047 S. 4.8.2 (शब्दार्णवस्य) P. 70a

एकेनापि पयोधिना जलमुचस्ते पूरिताः कोटिशो N. 28a l. 8
जातो नास्य कुशाग्रलीनतुहिनश्लक्ष्णोऽपि तोयव्ययः ।
आहो शुष्यति दैवदृष्टिवलनादम्भोभिरम्भोमुचः
संभूयापि विधातुमस्य रजसि स्तैमित्यमप्यक्षमाः ॥ २९ ॥

(1048) S. 4.8.5 (सुवर्णरेखस्य) P. 68a (बधिर-कविराजस्य)

मर्यादाभङ्गभीतेरमितरसतया धैर्यगाम्भीर्ययोगान्
न क्षुभ्यन्त्येव तावन्नियमितसलिलाः सर्वदैते समुद्राः ।
आहो क्षोभं व्रजेयुः क्वचिदपि समये दैवयोगात्तदानीं
न क्षोणी नाद्रिवर्गो न च रविशशिनौ सर्वमेकार्णवं स्यात् ॥ ३० ॥

1049 P. 70b

श्रुतं दूरे रत्नाकर इति परं नाम जलधेर् N. 27a l. 2
न चास्माभिर्दृष्टा नयनपथगम्यस्य मणयः ।
पुरो नः संप्राप्तास्तटभुवि सलिप्सं तु वसताम्
उदग्राः कल्लोलाः स्फुटविकटदंष्ट्राश्च मकराः ॥ ३१ ॥

1050 S. 4.49.3 (विद्यायाः) P. 184a

सुच्छायं फलभारनम्रशिखरं सर्वार्तिशान्तिप्रदं
त्वामालोक्य महीरुहं वयममी मार्गं विहायागताः ।
अन्तस्ते यदि कोटरोदरचलद्व्यालावलीविस्फुरद्-
वक्त्रोद्वान्तविषानलातिभयदं वन्द्यस्तदानीं भवान् ॥ ३२ ॥

1051 S. 4.69.5 (अचलसिंहस्य)

परभृतशिशो मौनं तावद्विधेहि नभस्तलोत्- N. 28a l. 9
पतनविषये पक्षौ स्यातां ↑ न यावदिमौ क्षमौ । ↑K. 76a
ध्रुवमितरथा द्रष्टव्योऽसि स्वजातिविलक्षण-
ध्वनितकुपितध्वाङ्क्षत्रोटीपुटाहतिजर्जरः ॥ ३३ ॥

---

**1047** — a) SP एकेनैव. P कोटिशः पूरिता. — b) SP °तुहिनस्वल्पो. — c) S दैवदुर्विलसितैर्. SP अंभोधिर्. — d) SP रजसः. **1048** — a) SP °भीतेरमृतमयतया. — b) P [न] क्षुभ्यन्ते कदाचिन्निय°. — d) S1.2 क्षोणीर्. S नाद्रिवर्गो; P नाद्रिकन्दो. **1049** — b) P चास्माभिस्तृष्णा. — c) P पुरो वः. P सलिलांशु वसतां. — d) P °दंष्ट्राश्च मणयः. **1050** — a) P सर्वार्त्ति°. — b) S सुभूरुहं खलु वयं. — c) P °विलव्यालावली°. — d) P °भयदो. S2 वन्य°; S3 धन्य° °(वंद्य°). **1051** — a) S तावन्मौनं. — b) S °त्पतनविधये. — c) S ध्रुवमपरथा. ○ Smk. 14.9 (अचलस्य); Any. p. 65.108; Jsv. 285.1.

मज्जत्कठोरनखरक्षतकृत्तिकृत्तरक्तच्छटाच्छुरितकेसरभारकायः । N. *lm.* 28a 1052*
सिंहोऽप्यलङ्घ्यमहिमा हरिनामधेयं धत्ते जरत्कपिरपीति किमत्र वाच्यम् ॥ ३४ ॥

क मलयतटीजन्मस्थानं क ते च वनेचराः 1053 S. 4.51.5 (मलयजस्य) P. 184b
क खलु परशुच्छेदः कासौ दिगन्तरसंगतिः ।
क च खरशिलापट्टे घृष्टिः क पङ्कसुरूपता
मलयज सखे मा गाः खेदं गुणास्तव दूषणम् ॥ ३५ ॥

वदत विदितजम्बूद्वीपसंवृत्तवार्तां कथमपि यदि दृष्टं वारिवाहं विहाय । 1054 S. 4.65.2
सरिति सरसि सिन्धौ चातकेनार्पितोऽसावपि बहलपिपासापांशुलः कण्ठनालः॥३६॥
लक्ष्मीधरस्य ॥

उच्चैरुन्मथितस्य तेन बलिना दैवेन धिक्कर्मणा (1055) S. 4.7.3 (लक्ष्मीधरस्य) P. 68a (लक्ष्मीधरस्य)
लक्ष्मीमस्य निरस्यतो जलनिधेर्जातं किमेतावता ।
गाम्भीर्यं किमयं जहाति किमयं पुष्णाति नाम्भोधरान्
मर्यादां किमयं भिनत्ति किमयं न त्रायते वाडवम् ॥ ३७ ॥

उन्मुक्तक्रमहारिमेरुशिखरात्क्रामन्तमन्यो धरः ↑ N. 28b 1056 S. 4.35.1 P. 201b (anon)
कोऽत्र त्वां शरभीकिशोरपरिषद्धौरेय धर्तुं क्षमः ।
तस्माद्दुर्गमशृङ्गलङ्घनकलादुर्ललितात्मन् व्रज
त्वद्वासाय स एव कीर्णकनकज्योत्स्नो गिरीणां पतिः ॥ ३८ ॥
वल्लणस्य ॥

दुर्दिनानि प्रशान्तानि दृष्टस्त्वं तेजसां निधे । (1057)
अथाशाः पूरयन्नेव किं मेघैर्व्यवधीयते ॥ ३९ ॥

व्याप्याशाः शयितस्य वीचिशिखरैरुल्लिख्य खं प्रेङ्खतः (1058) S. 4.9.1 P. 71a
सिन्धोर्लोचनगोचरस्य महिमा तेषां तनोत्यद्भुतम् ।

---

**1053** — c) P °शिलोपट्टे. S2 दृष्टिः. K पंकस्वरूपता; SP पंकसरूपता. **1054** — a) S1 °संभूत°. S °वार्ताः. — b) S कचिदपि. — c) N सरति. S3 °नार्पिताऽ. — d) S अतिबहल-. **1055** — a) K देवेन. — b) P निरस्यतां. S1 °निधेर्यातं. — d) S3 जहाति (भिनत्ति). S पत्रिणः ॥. **1056** — a) P °क्रमहारि°. S3 शैल- (मेरु-). — b) S1.2 सरभी-. P शरभां. P °पतितं धौरेय. KP कर्तुं. — c) S तस्मादुद्गम°. SP °केलिलंघन- (S3 °लंघित-). S1.2 °दुर्ललितां न (S2 नु) व्रज; S3 °दुर्वीतलादुद्व्रज. — d) S कीर्तिकनकज्योत्स्ना; P कीर्णकटकज्योत्स्ना. **1058** — a) S वीचिवलनैर्. — b) S °गोचरः स. P ततोभ्यद्भुतं. — c) S1 °र्नीवरो; P °नीरदा. — d) S3 करशुक्तिकोदर-; P करकुंठितोदर-. S3 °गतो (°लघुर्.)

संश्लिष्टाङ्गुलिरन्ध्रलीनमकरग्राहावलिर्नीरवो
यैर्नायं करकुण्डिकोदरलघुर्दृष्टो मुनेरञ्जलौ ॥ ४० ॥
अभिनन्दस्य ॥

(1059) S. 4.23.5 (छित्तपस्य)
भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः
पाठीनैः पृथुपङ्कपीठलुठनादस्मिन् मुहुर्मूर्च्छितम् ।
तस्मिन्नेव सरस्यकालजलदेनागत्य तच्चेष्टितं ↑ K. 76b
येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥ ४१ ॥
डिन्दूकस्य ॥

(1060) S. 4.37.5 (वीर्यमित्रस्य) P. 199a
हंहो सिंहकिशोरक त्यजसि चेत्कोपं वदामस्तदा
हत्वैनं करिणां सहस्रमखिलं किं लब्धमायुष्मता ।
एवं कर्तुमहं समर्थ इति चेद्धिङ् मूर्ख किं सर्वतो
नालं प्लावयितुं जगज्जलनिधिर्धैर्यं यदालम्बते ॥ ४२ ॥

(1061) S. 4.52.2 (शालिकनाथस्य) P. 184b
सत्यं पिप्पल पादपोत्तम घनच्छायोन्नतेन त्वया
सन्मार्गोऽयमलंकृतः किमपरं त्वं मूर्तिभेदो हरेः ।
किं चान्यत्फलभोगहृष्टमुखरास्त्वामाश्रिताः पत्रिणो
यत्पुंस्कोकिलकूजितं विदधते तन्नानुरूपं परम् ॥ ४३ ॥

(1062) S. 4.58.1 (शालिकनाथस्य) P. 184b (anon)
न्यग्रोधे फलशालिनि स्फुटरसं किंचित्फलं पच्यते
बीजान्यङ्कुरगोचराणि कतिचित्सिध्यन्ति तस्मिन्नपि ।
एकस्तेष्वपि कश्चिदङ्कुरवरो बध्नाति तामुन्नतिं
यामध्वन्यजनः स्वमातरमिव क्लान्तिच्छिदे धावति ॥ ४४ ॥
शालिकस्य ॥

---

**1059** — [b]) S तनुपंकपीठ° (S1 °पीठपंक°). S3 °लुठनाद्यस्मिन्. ○ Śp. 777 (अकालजलदस्य); Sbh. 843 (दाक्षिणात्यस्य); Bpb. 201; Pad. p. 104.77 (भोजप्रबन्धात्); Pv. 727 (अकालजलदस्य); Prab. 70 (इत्यकालजलदराजशेखरोक्तिः); St. 27.9; SK. 3.72; Any. p. 23.188; Jsv. 277.2. **1060** — [a]) S2, 3 वदामस्त्वया. — [b]) S1, 2 हत्वैकं; S3 हत्वैवं. — [c]) S3 इत्थं (एवं). — [d]) K °निधेर्द्धैर्यं; P °निधैर्यं. S1 धैर्यं समा-; S3 यद्धैर्यमा-. **1061** — [c]) S3 °भोगक्लृष्ट-; P °भोगतृष्ण-. — [d]) S1, 2 पिदधते; P शिरशिते. P तन्नामरूपं-. **1062** — [b]) S तत्रापि च ।. — [c]) S एकस्तत्र स. P °दंकुररसो. — [d]) K कांतिच्छिदे; P क्लांतिच्छिदो. ○ Kvv. p. 35; Any. p. 129.172; Bps. 255; Smv. 9.1.

एतस्मिन्कुसुमे स्वभावमहति प्रायो महीयः फलं (1063) S. 4.55.5 (शालिकनाथस्य)
रम्यं स्वादु सुगन्धि शीतलमलं प्राप्तव्यमित्याशया ।
शाल्मल्याः परिपाककालकलनाबोधेन कीरः स्थितो
यावत्तत्पुटसंधिनिर्गतपतत्तूलं फलात्पश्यति ॥ ४५ ॥

माधुर्यादतिशैत्यतः शुचितया संतापशान्त्या द्वयोः (1064)
स्थाने मैत्र्यमिदं पयः पय इति क्षीरस्य नीरस्य च ।
तत्राप्यर्णसि वर्णना स्फुरति मे यत्संगतौ वर्धते
दुग्धं येन पुरैव चास्य सुहृदः क्वाथे स्वयं क्षीयते ॥ ४६ ॥

दारैः क्रीडितमुन्मदैः सुरगुरोस्तेनैव नैवामुना (1065)
भग्नं भूरि सुरासुरव्यतिकरे तेनैव नैवामुना ।
नैवायं स इमं नृजः स इव वा नैवैष दोषाकरः
कोऽयं भोः शशिनीव लोचनवतामर्के कलङ्कः समः ↑ ॥ ४७ ॥ ↑ K. 77a
मधुकूटस्य ॥

आयान्ति यान्ति सततं नीरं शिशिरं खरं न गणयन्ति । (1066)
विघ्नो न हन्त दिवसाः कस्य किमेते करिष्यन्ति ॥ ४८ ॥

उपालभ्यो नायं सकलभुवनाश्चर्यमहिमा (1067)
हरेर्नाभीपद्मः प्रभवति हि सर्वत्र नियतिः ।
यदत्रैव ब्रह्मा पिबति निजमायुर्मधु पुनर्
विलुम्पन्ति स्वेदाधिकममृतहृद्यं मधुलिहः ॥ ४९ ॥

यदा हत्वा कृत्स्नां तिमिरपटलीं जातमहिमा N. 27a l. 4 1068
जगन्नेत्रं मित्रः प्रभवति गतोऽसाववसरः ।
इदानीमस्ताद्रिं श्रयति गलितालोकविभवः
पिशाचा वल्गन्तु स्थगयतु तमिस्रं च ककुभः ॥ ५० ॥
कुशलनाथस्य ॥

---

**1063** — [a]) S गरीयः फलं· — [c]) K °कलनाकार्येण; $S_3$ °कलनारोधेन· $S_1$ काकः स्थितो· — [c]) $S_2$ om. **1064** ○ Smk. 120.9. **1065** — [d]) K कलंकं·

(1069) S. 4.11.2 (पपाकस्य) P. 71a (anon)

उपाध्वं तत्पान्थाः पुनरपि सरो मार्गतिलकं
यदासाद्य स्वच्छं विलसथ विनीतक्लमभराः ।
इतस्तु क्षाराब्धेर्जरठमकरक्षुण्णपयसो
निवृत्तिः कल्याणी न पुनरवतारः कथमपि ॥ ५१ ॥

यंप्याकस्य ॥

(1070) S. 4.21.5 (शकटीय-शबरस्य)

सलीलं हंसानां पिबति निवहो यत्र विमलं
जलं तस्मिन्मोहात्सरसि रुचिरे चातकयुवा ।
स्वभावाद्दर्वाद्वा न पिबति पयस्तस्य शकुनेः
किमेतेनोच्चैस्त्वं भवति लघिमा वापि सरसः ॥ ५२ ॥

(1071) S. 4.36.5 P. 201a (anon)

प्रसीद प्रारम्भाद्विरम विनयेथाः क्रुधमिमां
हरे जीमूतानां ध्वनिरयमुदीर्णो न करिणाम् ।
असंज्ञाः खल्वेते जलशिखिमरुद्धूमनिचयाः
प्रकृत्या गर्जन्ति त्वयि तु भुवनं निर्मदमिदम् ॥ ५३ ॥

अमरसिंहस्य ॥

1072 S. 4.39.1 (नारायणस्य)

अकस्मादुन्मत्त प्रहरसि किमध्वक्षितिरुहं N. 27a l. 5
ह्रदं हस्ताघातैर्विदलसि किमुत्फुल्लनलिनम् ।
तदा जानीमस्ते करिवर बलोद्गारमसमं
सटां सुप्तस्यापि स्पृशसि यदि पञ्चाननशिशोः ॥ ५४ ॥

1073 S. 4.16.3

समुद्रेणान्तःस्थस्तटभुवि तरङ्गैरकरुणैः
समुत्क्षिप्तोऽस्मीति त्वमिह परितापं त्यज मणे । ↑ K. 77b
अवश्यं कोऽपि त्वद्गुणपरिचयाकृष्टहृदयो
नरेन्द्रस्त्वां कुर्यान्मुकुटमकरीचुम्बितरुचिम् ॥ ५५ ॥

---

**1069** — a) P तत्पन्थाः. P सरोमंग-. — b) S स्वेच्छं. S1.2 विद्दरत; S3 विहरथ; P विहरति. S1.2 विलीन-. — c) P क्ष्मावारेर्जठर-. S °कमठक्षुण्ण. — e) S3 पापाकस्य. ○ Smk. 31.12 (यायाकस्य); Amd. 817; Skb. 4.97; ŚB 1.436. **1070** — b) S मोहात्तस्मिन्सरसि. — c) S1 शकुने. — d) S चापि. ○ Ssm. 1322. **1071** SP order *cdab*. — a) K प्रमी क्रूरारंभा°. S3 विजयेथाः. — c) K अल्पेते ?. — d) S निर्मदमदः. **1072** — b) S दंताघातैर्. S1.2 दलयसि S3 °सलिलं ।. — c) N करिकर. S3 मदोद्गार-. ○ Any. p. 36.88.

अशोके शोकार्तः किमसि बकुलेऽप्याकुलमना 1074 S. 4.28.5
निरानन्दः कुन्दे सह च सहकारैर्न रमसे ।
कुसुम्भे विश्रम्भं यदिह भजसे कण्टकशतैर्
असंदिग्धं दग्धभ्रमर भवितासि क्षतवपुः ॥ ५६ ॥

पातः पूष्णो भवति महते नैव खेदाय यस्मात् (1075)
कालेनास्तं क इह न गता यान्ति यास्यन्ति चान्ये ।
एतावत्तु व्यथयति यदालोकबाह्यैस्तमोभिस्
तस्मिन्नेव प्रकृतिमहति व्योम्नि लब्धोऽवकाशः ॥ ५७ ॥

कश्चित्कष्टं किरति करकाजालमेकोऽतिमात्रं 1076
गर्जत्येव क्षिपति विषमं वैद्युतं वह्निमन्यः ।
सूते वातं जवनमपरस्तेन जानीहि तावत्
किं व्यादत्से विहग वदनं तत्र तत्राम्बुवाहे ॥ ५८ ॥

मा संचैषीः फलसमुदयं मा च पत्रैः पिधास्त्वं (1077)
रोधःशाखिन् वितर तदिदं दानमेवानु[ कूलम् ] ।
नूनं प्रावृट्समयकलुषैरूर्मिभिस्तालतुङ्गैर्
अद्य श्वो वा सरिदकरुणा त्वां श्रिया पातयित्री ॥ ५९ ॥

आमोदैस्ते दिशि दिशि गतैर्दूरमाकृष्यमाणाः (1078) S. 4.51.2
साक्षाल्लक्ष्म्या तव मलयज द्रष्टुमभ्यागताः स्मः । ( अचलसिंहस्य ) P. 185a
किं पश्यामः सुभग भवतः क्रीडति क्रोड एव
व्याडस्तुभ्यं भवतु कुशलं मुञ्च नः साधु यामः ॥ ६० ॥

अणुरपि ननु नैव क्रोडभूषास्य काचित् परिभजसि यदेतत्तद्विभूतिस्तथैव । (1079) P. 180a
इह सरसि मनोज्ञे संततं पातुमम्भः श्रमपरिभवमग्नाः के न मग्नाः करीन्द्राः ॥६१॥
श्रीधर्मकरस्य ॥

---

**1074** — a) S किमपि. S व्याकुल°. — b) S3 कौन्दे. — c) S3 विस्रम्भं. — d) S मुग्धभ्रमर. **1075** ○ Bhallaṭaśataka 10; Sbh. 563 ( भट्टभल्लटस्य ); Any. p. 6.51; Smk. 10.5 ( भट्टभल्लटस्य ); Śp. 745 ( भल्लटस्य ). **1078** — b) SP °लक्ष्मीं. K नु च; S3 बत. P मलयजरसादूरमभ्यागताः स्मः । — c) S पश्यामः किं; P तरव- ( भवतः ). K क्रीडित-. — d) SP व्याड-. S3 साधयामः ॥. ○ Smk. 33.24 Śp. 998; Ssm. 1274; BIS. 978 (366); Bh. 825; Srb. p. 237.52; St. 18.4; Any. p. 116.73. **1079** — a) K अनु-; P मुधे ( अणु- ). — b) K °स्तथैव । — d) K करीमाः ॥.

1080 S. 4.63.2 ( अचलसिंहस्य )
नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखनिसृष्टोत्तानचञ्चूपुटेन ।
जलधर जलधारा दूरतस्तावदास्तां ↑ ↑ K. 78a
ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥ ६२ ॥

(1081) S. 4.10.5 ( कमलगुप्तस्य )
श्रमपरिगतैर्विस्तीर्णश्रीरसीति पयः परं
कतिपयमपि त्वत्तोऽस्माभिः समुद्र समीहितम् ।
किमसि नितरामुत्क्षुब्धोर्मिः प्रसीद नमोऽस्तु ते
दिशि दिशि शिवाः सन्त्यस्माकं शतं कमलाकराः ॥ ६३ ॥
अचलस्यैतौ ॥

1082 S. 4.51.4 ( भामहस्य ) P. 185a ( तरणिनन्दनस्य )
ककुभि ककुभि भ्रान्त्वा भ्रान्त्वा विलोक्य विलोकितं
मलयजसमो दृष्टोऽस्माभिर्न कोऽपि महीरुहः ।
उपचितरसो दाहे च्छेदे शिलातलघर्षणेऽ-
प्यधिकमधिकं यत्सौरभ्यं तनोति मनोहरम् ॥ ६४ ॥
तरणिनन्दिनः ॥

1083 S. 4.63.3 ( अचलसिंहस्य )
अभिपतति घनं शृणोति गर्जाः सहति शिलाः सहते तडित्तरङ्गान् ।
विधुवति गरुतं रुतं विधत्ते जलघृषते कियतेऽपि चातकोऽयम् ॥ ६५ ॥
अचलस्य ॥

1084
बद्धोऽसि विद्धि तावन्मधुरसन व्यसनमीदृगेतदिति ।
अनवहितकमलमीलन मधुकर किं विफलमुत्फलसि ॥ ६६ ॥
तस्यैव ॥

1085
हृत्वापि वसुसर्वस्वममी ते जलदाः सखि । N. 27b l. 11
मित्रमप्यपकुर्वन्ति विप्रियाणां तु का कथा ॥ ६७ ॥

---

**1080** — [a]) N शीदता. — [b]) S °मुखनिविष्टो°. ○ Smk. 13.2; SK. 3.57; Bpb. 208; BIS. 3360 (1428); Any. p. 23.186. **1081** — [a]) S1 श्रमपरि°. S परं पयः. — [b]) S कतिपयमितं. — [c]) K नितरामरुतोसिथ प्र°. — [d]) S पथि पथि शिवाः. **1082** — [a]) SP भ्रामं भ्रामं. — [c]) S1, 2 दाहच्छेदे; S3 दाहच्छेदैर्; P दाहोच्छेदे. S3 °घर्षणैर्. — [d]) S अधिकमधिकं. — [e]) K °नन्दन ॥. **1083** — [b]) K शिवाः. — [c]) S विसहति मरुतं. — [d]) K कियतोऽपि. — [e]) N om. because of next. **1084** — [a]) K विहिता°. — [e]) N अचलस्यैतौ.

श्रीफलेनामुनैवायं कुरुते किं न वानरः । N. 27b l. 12 1086
हसत्युल्लसति प्रेङ्खत्यधस्तादीक्षते जनम् ॥ ६८ ॥

तरणिनन्दिनः ॥

अन्योऽपि चन्दनतरोर्महनीयमूर्तेः सेकार्थमुत्सहति तद्गुणबद्धतृष्णः । (1087)
शाखोटकस्य पुनरस्य महाशयोऽयमम्भोद एव शर[णं] यदि निर्गुणस्य ॥ ६९ ॥

त्वं गर्ज नाम विसृजाम्बुद नाम्बु नाम विद्युल्लताभिरभितर्जय नाम भूयः । (1088) S. 4.65.3
प्राचीनकर्मपरतन्त्रनिजप्रवृत्तेरेतस्य पश्य विहगस्य गतिस्त्वमेव ॥ ७० ॥ P. 192b

आमन्थिनीकलश एष सदुग्धसिन्धुर्वेत्रं च वासुकिरयं गिरिरेष मन्थः । N. 28b l. 1 1089
संप्रत्युपोढमदम↑न्थरबाहुदण्डकण्डूयनावसर एव सुरासुराणाम् ॥७१॥ ↑K. 78b

भट्टगणपतेः ॥

व्याकुर्महे बहु किमस्य तरोः सदैव नैसर्गिकोऽयमुपकाररसः ↑ परेषु । N. 27a l. 12 ↑ N. 27b 1090 S. 4.49.4
उन्मूलितोऽपि मरुता बत वारिदुर्गमार्गे यदत्र जनसंक्रमतामुपेतः ॥ ७२ ॥ P. 185a

विस्रं वपुः परवधप्रवणं च कर्म तिर्यक्तयैव कथितः सदसद्विवेकः । (1091) S. 4.36.4
इत्थं न किंचिदपि चारु मृगाधिपस्य तेजस्तु तत्किमपि येन जगद्वशकम् ॥७३॥ (वसुंधरस्य)

कस्य तृषं न क्षपयसि न पयसि तव कथय के निमज्जन्ति । (1092) P. 71a
यदि सन्मार्गजलाशय नक्रो न क्रोडमधिवसति ॥ ७४ ॥

वीरस्य ॥

न स्फूर्जति न च गर्जति न च करकाः किरति सृजति न च तडितः । 1093
न च विनिमुञ्चति वात्यां वर्षति निभृतं महामेघः ॥ ७५ ॥

न भवतु कथं कदम्बः प्रतिप्रतीकप्ररूढघनपुलकः । (1094) P. 185a
विश्वं धिनोति जलदः प्रत्युपकारस्पृहारहितः ॥ ७६ ॥

अचलसिंहस्य ॥

---

**1086** — [e]) K तरणिनन्दन ॥. **1087** — [b]) K °बंधतृष्णः. ○ Śp. 774; St. 27.15; Any. p. 20.165; SG. 5.7; BIS. 387 (3510); Srb. p. 212.37. **1088** — [b]) S₂ °रभितो जय- — [cd]) P प्रवृत्ते चेतस्य. **1089** — [b]) S वासुति°. N मन्थाः । — [e]) K भट्टगणेशः ।. **1090** — [b]) S यदुपकार-. — [c]) KSP वारिदुर्गे. — [d]) S यदन्यजन°. **1091** — [b]) S विदितः सद°. ○ Sbh. 600; Sb. 40b. 19; Any. p. 28.31. **1092** — [a]) P दृष्टिर् (तृषं). ○ Smk. 31.2; Srb. p. 219.3. **1094** — [b]) P प्रतिशाकः प्रतिरूढघनपुनश्च- — [d]) P प्रियारहितः ॥.

1095 P. 50a करं प्रसार्य सूर्येण दक्षिणाशावलम्बिना । N. 27b l. 12
न केवलमनेनात्मा दिवसोऽपि लघूकृतः ↑ ॥ ७७ ॥ ↑ N. 28a

(1096) न शक्यं स्नेहपात्राणां वितानं च विरूक्षणम् ।
दह्यमानान्यपि स्नेहव्यक्तिं कृत्वा स्फुटन्ति यत् ॥ ७८ ॥

(1097) S. 5.70.3 नालम्बनाय धरणिर्न तृषार्तिशान्त्यै सप्तापि वारिनिधयो न धनाय मेरुः ।
पूर्वार्जिताशुभवशीकृतपौरुषस्य कल्पद्रुमोऽपि न समीहितमातनोति ॥ ७९ ॥

(1098) S. 4.61.1 आश्वास्य पर्वतकुलं तपनोष्मतप्तं निर्वाप्य दावविधुराणि च काननानि ।
नानानदीनदशतानि च पूरयित्वा रिक्तोऽसि यज्जलद सैव तवोन्नतश्रीः ॥८०॥

(1099) S. 4.56.4 P. 185b (विम्बोकस्य) ये पूर्वं परिपालिताः फलदल↑च्छायादिभिः प्राणिनो ↑ K. 79a
विश्रामद्रुम कथ्यतां तव विपत्काले क्व ते सांप्रतम् ।
एताः संनिधिमात्रकल्पितपुरस्कारास्तु धन्यास्त्वचो
यासां छेदनमन्तरेण पतितो नायं कुठारस्त्वयि ॥ ८१ ॥
वित्तोकस्य ॥

1100 दूरं यदि क्षिपसि भीमजवैर्मरुद्भिः संचूर्णयस्यपि दृढं यदि वा शिलाभिः । N. 27b. l. 1
सौदामिनीभिरसकृद्यदि हंसि चक्षुर् नान्या गतिस्तदपि वारिद चातकस्य ॥८२॥

1101 S. 4.64.2 P. 192b यस्योदये बहुमनोरथमन्थरेण संचिन्तितं किमपि चेतसि चातकेन ।
हा कष्टमिष्टफलदानविधानहेतोरम्भोधरात्पतति संप्रति वज्रघातः ॥ ८३ ॥
लडहचन्द्रस्य ॥

---

**1095** — [b]) P दक्षिणायनलंबिना. ○ Śp. 742; Sbh. 550 (भट्टनारायणस्य); Pad. p. 106.89; Pv. 736 (जगज्जीवनत्रज्यायाः); BIS. 1540 (3870) (Śp.); Pt. 10.2; St. 24.4; SK. 6.528; Bps. 209; Smv. 9.23. **1097** — [ab]) S आलंबनाय धरणी न च नागभूमिः स्वर्वासिनां च वसतिर्न भवेदमुष्य ।. **1098** — [b]) K °विधुरा स च. — [c]) K नदीनिद°. — [d]) S तवोन्नता. ○ Śp. 778; Bph. 280; Bps. 218; Pmt. 190; Ssm. 1142; BIS. 1059; St. 27.14; SG. 16a; Any. p. 22.179. **1099** — [a]) S पत्रिणो. — [b]) P तपविपत्. — [c]) S °मात्रदर्शित°. P °पुरःसारा°. P धन्यास्त्वतो. — [d]) S1 छेदमनंतरेण. ○ Śp. 985; Ssm. 1262; St. 21.12; SK. 3.240; Any. p. 113.54. **1100** — [a]) K पदं (यदि). — [c]) N सौदामनी°. **1101** — [a]) S अस्योदये (S1 °ये) बहु°. — [d]) S3 °धराद्भवति. SP वज्रपातः. ○ Smk. 21.3 Srb. p. 212.49.

देवे कालवशं गते सवितरि प्राप्यान्तरासंगतिं 1102
हन्त ध्वान्त किमेधसे दिशि दिशि व्योम्नः प्रतिस्पर्धया ।
तस्यैवास्तमुपेयुषः करशतान्यादाय विध्वंसयन्न्
एष त्वां कलितः कलाभिरुदयत्यग्रे शशी पार्वणः ॥ ८४ ॥

धन्यस्त्वं सहकार संप्रति फलैः काकान् शुकान् पूरयन् (1103) S. 4.31.1
पूर्वं तु त्वयि मुक्तमञ्जरिभरोन्निद्रे य इन्दिन्दिरः । (वल्लणस्य)
अक्रीडन्निमिषं स नैति फलितं यत्त्वां विकाशैकमुत्
तद्धर्मोऽस्य फलाशया परिचयः कल्पद्रुमेऽप्यस्ति किम् ॥ ८५ ॥

यः पूर्वस्फुटदस्थिसंपुटमुखे दृष्टः प्रवालाङ्कुरः (1104) S. 4.53.4
प्रायः स द्विदलादिकक्रमवशादारब्धशाखाशतः । P. 185b
स्निग्धं पल्लवितो घनं मुकुलितः स्फारच्छटं पुष्पितः
सोत्कर्षं फलितो भृशं च विनतः कोऽप्येष चूतद्रुमः ॥ ८६ ॥

जायन्ते बहवोऽत्र कच्छपकुले किं तु क्वचित्कच्छपी (1105) S. 4.1.3
नैकाप्येकमसूत नापि च पुनः सूते न वा सोष्यते । (शतानन्दस्य) P. 38a
आकल्पं धरणीभरोद्वहनतः संकोचखिन्नात्मनो (anon)
यः कूर्मस्य दिनानि नाम कति चिद्विश्रामदानक्षमः ॥ ८७ ॥ ↑ K. 79b

हनूमतः ॥

भवकाष्ठमयी नाम नौके हृदयवत्यसि । N. 27b l. 10 1106 P. 180b
परकीयैरपरथा कथमाकृष्यसे गुणैः ॥ ८८ ॥

भगवति यामिनि वन्दे त्वयि भुवि दृष्टः पतिव्रताधर्मः । N. 28b l. 2 1107
गतवति रजनीनाथे कज्जलमलिनं वपुर्वहसि ॥ ८९ ॥

धिगेतद्गाम्भीर्यं धिगमृतमयत्वं च जलधेर् 1108 S. 4.11.5
धिगेतां द्राघीयः प्रचलतरकल्लोलभुजताम् । (कपालेश्वरस्य) P. 69b (कलिकाकारस्य)

---

**1102** — c) K तस्यैकास्त-. **1103** — c) S आक्रीडन्ननिशं. S3 °शैकभुक् — d) K परिनयः. **1104** — a) S यो दृष्टः स्फुट°. S °मुखान्निर्यत्प्रवाल°. — b) S लब्धः (प्रायः). S °वशादारूढ-. — c) S1 पुलकितः; P मुकुटितः. S3 स्फारच्छदं. — d) P फलिनो दृशश्च. **1105** — b) S °सूत सुनुमपरं सूते. — c) SP °धरो (°भरो). S संतापखिन्ना°; P संकोचखिद्या-. **1106** — b) P °वत्यपि. **1108** — b) SP °तद्राघीयः. S पृथुलतर-; P पृथुतरतर-. — d) S1.2 °भ्युपकृता; P °व्यपहृता. ○ SG. 28a.

यदेतस्यैवाग्रे कवलिततनुर्दावदहनैर्
न तीरारण्यानी सलिलचुलुकेनाप्युपकृता ॥ ९० ॥
कणिकाकारस्य ॥

(1109) अम्भोनिधेरनवगीतगुणैकराशेरुच्चैःश्रवप्रभृतिषु प्रसभं हृतेषु ।
आश्वासनं यदवकृष्टमभून्महर्षे तोयं त्वया तदपि निष्करुणेन पीतम् ॥ ९१ ॥
वनारोहस्य ॥

1110 S. 4.20 3 (भोजदेवस्य) P. 67b
कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि भविता ते । N. 27b l. 4
तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥ ९२ ॥

(1111) S. 4.20.5 (कस्यचित्)
प्रशान्ताः कल्लोलाः स्तिमितमसृणं वारि विमलं
विनीतोऽयं वेशः शममिव नदीनां कथयति ।
तथाप्यासां तैस्तैस्तरुभिरभितस्तीरपतितैः
स एवाग्रे बुद्धौ परिणमति रुद्धोऽप्यविनयः ॥ ९३ ॥
शब्दार्णवस्य ॥

(1112) P. 180a
सततं या मध्यस्था प्रथयति यष्टिः प्रतिष्ठितासीति ।
पुष्करिणि किमिदमुचितं तां चेदानीमधो नयसि ॥ ९४ ॥
कुशलनाथस्य ॥

1113 कृतमिदमसाधु हरिणैः शिरसि तरूणां दवानले ज्वलति । N. 27b l. 11
आजन्म केलिभवनं यद्भीतैरुज्झितं विपिनम् ॥ ९५ ॥
खदिरस्य ॥

1114 S. 2.160.2 (योगेश्वरस्य)
विध्वस्ता मृगपक्षिणो विधुरतां नीताः स्थलीदेवता N. 27b l. 4
धूमैरन्तरिता स्वभावमलिनैराशा मही तापिता ।
भस्मीकृत्य सपुष्पपल्लवदलांस्तांस्ता↑न्महापादपान् ↑ K. 80a
दुर्वृत्तेन दवानलेन विहितं वल्मीकशेषं वनम् ॥ ९६ ॥

---

**1109** ○ SG. 32.a. **1110** — [c]) S2 भोजस्य. ○ Śp. 1124; Smk. 30.2; Ssm. 1351; St. 38.3; Pt. 8.5; SK. 6.141; Smv. 5.10; Any. p. 101.72; Sa. 26.30 (10); SG. 33b. **1111** — [a]) S कल्लोला-. — [d]) S2 विरुद्धी° (रुद्धो°). ○ Smk. 30.4. **1112** — [a]) K ग्रामध्यस्था. — [b]) P पथयति. P °ष्ठिताप्यासीत्. — [c]) P पुष्करिणी. P °मेधो नयति. **1113** — [b]) K शिरसि तरसा. **1114** — [a]) S3 विश्वस्ता. S1.2 विरसतां; S3 विवशतां. — [b]) S °रंतरिताः. — [c]) S °पल्लवफलांस्-. — [d]) S निर्वृत्तेन. KS1 कृतं (वनं). ○ Smk. 34.5; Śp. 1159; Srb. p 220.7; Any. p. 106.106.

कर्णाहतिव्यतिकरं करिणां विपक्षदानं व्यवस्यति मधुव्रत एष तिक्तम् । 1115
स्मर्तव्यतामुपगतेषु सरोरुहेषु धिग्जीवितव्यसनमस्य मलीमसस्य ॥ ९७ ॥

चित्रं तदेव महदश्मसु तापनेषु यन्नोद्गिरन्त्यनलमिन्दुकराभिमृष्टाः । 1116
संभाव्यतेऽपि किमिदं नु यथेन्दुकान्तास्ते पावनं च शिशिरं च रसं सृजन्ति॥९८॥
अचलस्यैतौ ॥

दाहच्छेदनिकाषैरतिपरिशुद्धस्य ते वृथा गरिमा । 1117 S. 4.19.4 (बाणस्य) P. 178a
यदसि तुलामधिरूढं काञ्चन गुञ्जाफलैः सार्धम् ॥ ९९ ॥
सुरभेः ॥

सिन्धोरुच्चैः पवनचलनादुत्सलद्भिस्तरङ्गैः (1118) S. 4.15.5 (अनुरागदेवस्य) P. 178b (सुरुचितस्य)
कूलं नीतो हतविधिवशाद्दक्षिणावर्तशङ्खः ।
दग्धः किं वा न भवति मसी चेति संदेहिनीभिः
शम्बूकाभिः सह परिचितो नीयते पामरीभिः ॥ १०० ॥
सुचरितस्य ॥

छिद्रं मणेर्गुणार्थं नायकपदहेतुरस्य तारल्यम् । 1119 P. 178b
कथमन्यथेश्वराणां विलुठति हृदये च मौलौ च ॥ १०१ ॥

परिणतिसुकुमार स्वादुमाकन्द निन्दां (1120)
कथमिव तव भृष्टो राजकीरः करोतु ।
अनवधिकठिनत्वं नारिकेरस्य यस्मिन्
वशिकहृदयवृत्तेर्लुप्तसारश्रियश्च ॥ १०२ ॥

किंपाक पाके बहिरेव रक्त तिक्तासितान्तर्दृशि कान्तिमेषि । N. 28b l. 4 1121
एतावता काकमपास्य कस्य हृत्प्रीतिभित्तिस्त्वमिदं न जाने ॥ १०३ ॥
वुद्धाकरगुप्तस्य ॥

विगर्जामुन्मुञ्च त्यज तरलतामर्णव मनाग् N. 27b l. 8 1122 S. 4.10.3 (शतानन्दस्य) P. 69b (नारायणदत्तस्य)
अहंकारः कोऽयं कतिपयमणिग्रावगुडकैः ।

1115 — a) K दंताविति व्यतिकरं. 1117 — a) S °च्छेदननिकषै(S2 रै)र्. — b) N व्यथा (वृथा). — c) N °मधिरोढुं. 1118 — a) K संधोरुच्चैः. P वलनाद्. S उच्छलद्भिस्; P उच्छरद्भिस्. — b) S तीरं (कूलं). — c) S भवति न. S वेति; P वेत्ति; — d) S परित्रयान्. 1119 — b) P तारतम्यं ।. 1121 — a) K विपाकबहिरेवरक्त-. — c) K काकपथास्य. 1122 — a) P धिग्गर्जान्. — b) S अहंभावः. K उदकैः; P °गुलकैः ।. — c) K दिशा; S1.2 P भृशं (दृशं). K om. मेरौ. P दम्भ्या. P प्रस्थनिचितो. — d) P मौनस्थैर्या°. S द्रढयति ॥; P स्थगयति ॥.

दृशं मेरौ दद्याः स हि मणिमयप्रस्थमहितो
महामौनः स्थैर्यादथ भुवनमेव स्थिरयति ॥ १०४ ॥

(1123) S. 4.13.3 (शाल्लकस्य) आज्ञामेव मुनेर्निधाय शिरसा विन्ध्याचल स्थीयताम्
अत्युच्चैः पदमिच्छता पुनरियं नो लङ्घनीया त्वया ।
मैनाकादिमहीध्रलब्धवसतिं यः पीतवानम्बुधिं
तस्य त्वां गिलतः कपोलमिलनक्लेशोऽपि किं ↑ जायते ॥१०५॥ ↑ K. 80b

1124 अभ्युद्यत्कवलग्रहप्रणयिनस्ते शल्लकीपल्लवास्
तच्चास्फालसहं सरः क्षितिभृतामित्यस्ति को निह्नुते ।
दन्तस्तम्भनिषण्णनिःसहकरः श्वासैरतिप्रांशुभिर्
येनायं विरही तु वारणपतिः स्वामिन् स विन्ध्यो भवान् ॥ १०६ ॥
विद्दूकस्य ॥

॥ इत्यन्यापदेशव्रज्या ॥ ३३ ॥

**॥ ततो वातव्रज्या ॥ ३४ ॥** N. 28b l. 4

1125 उद्दामद्विरदावलूनबिसिनीसौरभ्यसंभावित-
व्योमानः कलहंसकम्पितगरुत्पालीमरुन्मांसलाः ।
दूरोत्तानतरङ्गलङ्घनकलाजङ्घालगर्वस्पृशः
कर्पूरद्रवशीकरैरिव दिशो लिम्पन्ति पम्पानिलाः ॥ १ ॥

1126 S. 1.89.3 (कस्यचित्) अन्ध्रीनीरन्ध्रपीनस्तनतटलुठनायासमन्दप्रचाराश्
चारूनुल्लासयन्तो द्रविडवरवधूहारिधम्मिल्लभारान् ।
जिघ्रन्तः सिंहलीनां मुखकमलमलं केरलीनां कपोलं
चुम्बन्तो वान्ति मन्दं मलयपरिमला वायवो दाक्षिणात्याः ॥ २ ॥
वसुकल्पस्यैतौ ॥

(1127) लतां पुष्पवतीं स्पृष्ट्वा कृतस्नानो जलाशये ।
पुनस्तत्सङ्गशङ्कीव वाति वातः शनैः शनैः ॥ ३ ॥
विनयदेवस्य ॥

---

**1123** — a) S मुनेः प्रणम्य. — — b) $S_{2.3}$ नोल्लंघनीया. — d) $S_1$ गिलितः. S कपोलफलक- ($S_3$ °के). **1124** — c) K विज्जूट्स्य. **1126** — b) S °वधूहार°. — c) S °कमलवनं. K केल्लीनां. — d) K दक्षिणात्याः ॥. — e) K कल्पवसोः. **1127** — c) K °शंगीव. ○ Pad. p. 61.7; Ssm. 812; SK. 6.110 (*bis*); Jsv. 279.1.

कान्ताकर्षणलोलकेरलवधूधम्मिल्लमल्लीरजश्- 1128
चौराश्चोडनितम्बिनीस्तनतटे निष्पन्दतामागताः ।
रेवाशीकरधारिणोऽन्ध्रमुरलस्त्रीमानमुद्राभिदो
वाता वान्ति नवीनकोकिलवधूहूंकारवाचालिताः ॥ ४ ॥

श्रीकण्ठस्य ॥

धुनानः कावेरीपरिसरभुवश्चम्पकतरून् मरुन्मन्दं कुन्दप्रकरमकरन्दानवकिरन् । 1129 S. 1.90.2
प्रियप्रेमाकर्षच्युतरचनमामूलसरलं ललाटे लाटीनां लुठितमलकं ताण्डवयति ॥५॥ (S1 अचलस्य)

वहति ललितमन्दः कामिनीमानबन्धं श्लथयितुमयमेको दक्षिणो दाक्षिणात्यः । 1130
वितरति घनसारामोदमन्तर्धुनानो जलधिजलतरङ्गान् खेलयन् गन्धवाहः ॥ ६ ॥

भुक्त्वा चिरं दक्षिणदिग्वधूमिमां विहाय तस्या भयतः शनैः शनैः । (1131)
सगन्धसारादिकृताङ्गभूष[ः प्र]यात्युदीचीं दयितामिवानिलः ↑ ॥ ७ ॥ ↑ K. 81a

वाति व्यस्तलवङ्गलोध्रलवलीकुञ्जः करञ्जद्रुमान् 1132
आधुन्वन्नुपभुक्तमुक्तमुरलातोयोर्मिमालाजडः ।
स्वैरं दक्षिणसिन्धुकूलकदलीकच्छोपकण्ठोद्भवः
कावेरीतटताडिताडनतटत्कारोत्तरो मारुतः ॥ ८ ॥

चुम्बन्नाननमालुठन्स्तनतटीमान्दोलयन् कुन्तलं 1133 S. 1.89.1
व्यस्यन्नंशुकपल्लवं मनसिजक्रीडाः समुल्लासयन् । (विनयदेवस्य)
अङ्गं विह्वलयन् मनो विकलयन् मानं समुन्मूलयन्
नारीणां मलयानिलः प्रिय इव प्रत्यङ्गमालिङ्गति ॥ ९ ॥

अलीनां मालाभिर्विरचितजटाभारमहिमा N. lm. 28b 1134 S. 1.88.2
परागैः पुष्पाणामुपरचितभस्मव्यतिकरः । (वीर्यमित्रस्य)
वनानामाभोगे कुसुमवति पुष्पोच्चयपरो
मरुन्मन्दं मन्दं विचरति परिव्राजक इव ॥ १० ॥

---

**1128** — [b]) K चातनितंबिनी°. — [c]) K °न्ध्रमुरुण-. **1129** — [a]) S3 °श्चंदनतरून्. — [b]) S1 मरुन्मंद्रं. — [c]) S3 °प्रेमावर्ष°. ○ Kav. p. 110. **1130** — [a]) K लुलितमन्दः. **1132** — [a]) K °कुंजन्. — [c]) K °कच्छोदकश्चोद्भवः. K दक्षिणमेरु°. — [d]) K °तटाक्षारोत्तरो. **1133** — [b]) S °क्रीडां. **1134** — [d]) S1 विचरिति.

(1135) शष्पश्यामलितालवालनिपतत्कुल्याजलप्लावित-
क्रीडोद्याननिकेतनाजिरजुषामस्पृष्टभूरेणवः ।
सुप्तं संप्रति बोधयन्ति शनकैश्चेतोभुवं कामिनां
प्रत्यग्रस्फुटमल्लिकासुरभयः सायंतना वायवः ॥ ११ ॥
अचलसिंह[स्य] ॥

(1136) अद्याभोगिनि गाढमर्मनिवहे हर्म्याग्रवेदीजुषां
सद्यश्चन्दनशोषिणि स्तनतटे सङ्गे कुरङ्गीदृशाम् ।
प्रायः प्रश्लथयन्ति पुष्पधनुषः पुष्पाकरे निष्ठिते
निर्वेदं नवमल्लिकासुरभयः सायंतना वायवः ॥ १२ ॥
शतानन्दस्य ॥

(1137) P. 86a (anon) शिशिरशीकरवाहिनि मारुते चरति शीतभयादिव सत्वरः ।
मनसिजः प्रविवेश वियोगिनीहृदयमाहितशोकहुताशनः ॥ १३ ॥
कुमारदासस्य ॥

(1138) दीर्घोन्मुक्तः सपदि मलयाधित्यकायाः प्रसङ्गाद्
आविष्कुर्वन् प्रणयपिशुनं सौरभं चन्दनस्य ।
मन्दं मन्दं निपतति चिरादागतो माधवीषु
व्याकुर्वाणो भयमिव परं दाक्षिणो गन्धवाहः ॥ १४ ॥
मधुशील[स्य] ॥

(1139) S. 1.92.2 (अचलस्य) प्रभाते सन्नद्धस्तनितमहिमानं जलधरं
स्पृशन्तः सर्वत्र स्फुटितवनमल्लीसुरभ↑यः । ↑K. 81b
अमी मन्दं मन्दं सुरतसमरश्रान्ततरुणी-
ललाटस्वेदाम्भःकणपरिमुषो वान्ति मरुतः ॥ १५ ॥

(1140) सुरतभरखिन्नपन्नगविलासिनीपानकेलिजर्जरितः ।
पुनरिह विरहिश्वासैर्मलयमरुन्मांसलीभवति ॥ १६ ॥

---

**1135** — [c]) K कानिनां· **1137** — [a]) P शिशिरकिरणवाहिनि· — [b]) P सपदि (चरति)· — [c]) P वियोगिनो· — [e]) K कुमारिदाशस्य· ○ Sp. 3897 (कुमारदासस्य); Sbh. 1757 (कुमारदासस्य). **1139** — [a]) S °तनिमानं· — [b]) K स्पृशन्तिः· S1.2 °नवमल्ली-; S3 °तरमल्ली-. — [d]) S1.2 ललाटे· K °परिमुखो· **1140** ○ Vid. 1.28. — [a]) °क्रियते (°भवति); Srb. p. 325.3; Smk. 59.30 (राजशेखरस्य); SG. 73b.

एते पल्लीपरिवृढवधूप्रौढकन्दर्पकेलि- (1141) S. 1.88.5
क्लिष्टापीनस्तनपरिसरस्वेदसंपद्विपक्षाः ।
वान्ति स्वैरं सरसि सरसि क्रोडदंष्ट्राविमर्द-
त्रुट्यद्बुन्द्रापरिमलगुणग्राहिणो गन्धवाहाः ॥ १७ ॥

नाधन्यैः शङ्खपाणेः क्षणधृतगतयः प्रांशुभिश्चन्द्रकान्त- (1142)
प्रासादैर्द्वारकायां तरलितचरमाम्भोधिनीराः समीराः ।
सेव्यन्ते नित्यमाद्यत्करिकठिनकरास्फालकालप्रबुद्ध-
क्रुध्यत्पञ्चाननाग्रध्वनिभरविगलद्गुग्गुलूद्गारगर्भाः ॥ १८ ॥

हिमस्पर्शादङ्गे घनपुलकजालं विदधतः 1143
पिकत्रोटीत्रुट्यद्विकचसहकाराङ्कुरलिहः ।
अमी स्वैरं स्वैरं ↑ मलयमरुतो वान्ति दिनजं ↑ N. 29a
दिनापाये चक्षुःक्लममपहरन्तो मृगदृशाम् ॥ १९ ॥

अयमुषसि विनिद्रद्राविडीतुङ्गपीनस्तनपरिसरसान्द्रस्वेदबिन्दूपमर्दी । 1144 S. 1.92.1
स्रुतमलयजवृक्षक्षीरसौरभ्यसभ्यो वहति सखि भुजङ्गीभुक्तशेषः समीरः ॥ २० ॥

ये दोलाकेलिकाराः किमपि मृगदृशां मन्युतन्तुच्छिदो ये (1145) S. 1.89.4
सद्यः शृङ्गारदीक्षाव्यतिकरगुरवो ये च लोकत्रयेऽपि ।
ते कण्ठे लोठयन्तः परभृतवयसां पञ्चमं रागराजं
वान्ति स्वैरं समीराः स्मरविजयमहासाक्षिणो दाक्षिणात्याः ॥ २१ ॥
राजशेखरस्य ॥

दरोन्मीलच्चूडप्रकरमुकुलोद्गारसुरभिर् (1146)
लतालास्यक्रीडाविधिनिबिडदीक्षापरिचयः ।
विभिन्दन्नुद्यानान्यतनुमकरन्दद्रवहर-
श्रमस्वैरो वायुर्मनसिजशरैर्जर्जरयति ॥ २२ ॥

---

**1141** — [b]) S क्लिश्यत्पीन-. — [c]) K क्रोदद्रष्टा°. **1144** — [a]) S1.2 °पीनतुंग°. — [c]) KS1 श्रुतमलयज-. S3 °सौरम्यरम्यो. **1145** — [c]) K राजशेखरः. ○ Vid. 1.27; Cf. Bāl. 10.55; Smk. 59.29 (राजशेखरस्य); Śp. 3816. **1146** — [cd]) K °द्रवभूरंशूमस्वैरो.

1147 श्रान्ताश्चूतवनानि कुञ्जपटलप्रेङ्खोलनादुन्मिषन्- N. *lm.* 29*a*
मल्लीकुड्मलसान्द्रसौरभसरित्संस्यन्दशृङ्गारिणः ।
एते संवसथोपकण्ठविलसद्वृष्ट्यम्बुवीचीचयोन्-
मीलद्बालतुषारशीकरकिरः क्रीडन्ति झञ्झानिलाः ॥ २३ ॥
बुद्धाकरगुप्तस्य ॥

॥ इति वातव्रज्या ↑ ॥ ३४ ॥ ↑ K. 82*a*

## ॥ ततो जातिव्रज्या ॥ ३५ ॥

1148 अजाजीजम्बाले रजसि मरिचानां च लुठिताः
कटुत्वादुष्णत्वाज्जनितरसनौष्ठव्यतिकराः ।
अनिर्वाणोत्थेन प्रबलतरतैलाक्ततनवो
मया सद्यो भृष्टाः कतिपयकवय्यः कवलिताः ॥ १ ॥

1149 ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ २ ॥
कालिदासस्य ॥

1150 स्वैरं चक्रानुवृत्त्या मुहुरुपरि परिभ्रम्य सम्यक्कृतास्थः
क्षिप्ताधोदृष्टिलक्ष्यीकृतपलशकलः पक्कणप्राङ्गणेषु ।
तीव्राधःपातपुञ्जीकृतविततचलत्पक्षपालीविशालश्
चिल्लश्चाण्डालपल्लीपिठरजठरतः प्रोद्धरत्यर्धदग्धम् ॥ ३ ॥

1151 S. 2.171.5 उद्ग्रीवा विवृतारुणास्यकुहरास्तृष्णाचलत्तालवः
पक्षासंभववेपमानतनवः प्रोड्डीय किंचिद्ध्रुवः ।

---

**1147** N indicates insertion after 1143. — *b*) N °संसन्द-; K संसद्द-. — *c*) K °वीचीवधो-. — *e*) N बुद्धाकरस्य; K बुद्धाकरगुप्त ॥. **1149** — *e*) K कालिदाश ॥. ○ Śāk. 1.7; Han. 4.3; Smk. 93.1 (कालिदासस्य); Pmt. 177; Ssm. 993 (कालिदासस्य); Kvv. p. 32; KHA. 114; Kpk. 42; Kpd. p. 83; Aś. p. 74 ad 20.23; Ekāvalī. p. 101; Ak. p. 327; Amd. 127; Vyk. ad 2.120; Srb. p 207.7. **1150** — *d*) K श्यैनश्चाण्डाल°. **1151** — *a*) $S_1$ °नयनास्तृष्णा-. $S_{1.2}$ °ज्वलत्तालवः. — *b*) K किंचिद्ध्रुतंः; S किंचिन्मुहुः. — *c*) K °क्रमितः; S °क्षमिणः. — *d*) S °प्रणाली-. $S_1$ °द्रुतम् ॥.

अन्योन्याक्रमिणः शरारिशिशवः प्रातर्नदीरोधसि
प्रालेयाम्बु पिबन्ति वीरणदलद्रोणीप्रणालस्रुतम् ॥ ४ ॥

रज्जुक्षेपरयोन्नमद्भुजलताव्यक्तैकपार्श्वस्तनी (1152) S. 5.1.4. (शरणस्य)
सूत्रच्छेदविलोलशङ्खवलयश्रेणीझणत्कारिणी ।
तिर्यग्विस्तृतपीवरोरुयुगला पृष्ठानतिव्याकृता-
भोगश्रोणिरुदस्यति प्रतिमुहुः कूपादपः पामरी ॥ ५ ॥

पक्षाभ्यां सहितौ प्रसार्य चरणावेकैकशः पार्श्वयोर् 1153 S. 5.5.5 (शङ्गारस्य)
एकीकृत्य शिरोधरोपरि शनैः पाण्डूदरे पक्षती ।
निद्राशेषविशेषरक्तनयनो निर्याय नीडोदराद्
आसृक्कान्तविदारिताननपुटः पारावतो जृम्भते ॥ ६ ॥
K. भृङ्गार[स्य] ॥

प्रातर्वारविलासिनीजनरणन्मञ्जीरमञ्जुस्वनैर् 1154 S. 5.5.4 (विक्रमादित्यस्य)
उद्बुद्धः परिधूय पक्षतिपुटं पारावतः सस्पृहम् ।
किंचित्कुञ्चितलोचनां सहचरीं संचुम्ब्य चञ्च्वा चिरं
मन्दान्दोलि↑तकण्ठकुण्ठितगलः सोत्कण्ठमुत्कूजति ॥ ७ ॥ ↑K. 82b
विक्रमादित्यतपस्विनोः ॥

उत्प्लुत्य दूरं परिधूय पक्षावधो निरीक्ष्य क्षणबद्धलक्ष्यः । 1155 S. 5.7.1 (कस्यचित्)
मध्येजलं बुड्डति दत्तझम्पः समत्स्यमुत्सर्पति मत्स्यरङ्कः ॥ ८ ॥
वाक्पतिराजस्य ॥

नीडादपक्रम्य विधूय पक्षौ वृक्षाग्रमारुह्य ततः क्रमेण । (1156) S. 5.7.2 (मधोः)
उद्ग्रीवमुत्पुच्छमुदेकपादमुच्चूडमुत्कूजति ताम्रचूडः ॥ ९ ॥

अङ्गुष्ठाक्रमवक्रिताङ्गुलिरधः पादार्धनीरुद्धभूः 1157 S. 5.1.1 (कस्यचित्)
पार्श्वोद्वेगकृतो निहत्य कफणिद्वन्द्वेन दंशान्मुहुः ।

**1152** — [a]) K व्यस्तैकपालस्थली. **1153** — [c]) N om. **1154** — [b]) N doubtful; K परिभूय. — [d]) K °कण्डकुंठित-. S1 cor. °गलः to °कलः. K सोत्कूण्ड°. **1155** — [b]) KS1.2 °लक्षः ।. — [c]) S चञ्चति (बुड्डति). **1156** — [a]) K उपक्रम्य. — [b]) K उद्ग्रीविकेमुत्पुच्छ. **1157** — [a]) S अंगुष्ठाग्रिमवक्रितांगुलिरसौ. — [c]) S3 °वक्त्रांतरोध-. — [d]) S3 धारध्वान-. — [e]) K उपाध्यादामर ॥. ○ Smk. 96.14 (जोयिकस्य); PG. 262 (शरणस्य); Uj. p. 279.47 (PG.).

न्यग्जानुद्वययन्त्रयन्त्रितघटीवक्त्रान्तरालस्खलद्-
धाराध्वानमनोहरं सखि पयो गां दोग्धि गोपालकः ॥ १० ॥
उपाध्यायदामरस्य ॥

(1158) कर्णाग्रन्थितकिंतनुर्नतशिरा बिभ्रज्जराजर्जर-
स्फिक्संधिप्रविवेशितप्रविचलल्लाङ्गूलनालः क्षणम् ।
आराद्वीक्ष्य विपक्षसाक्रमकृतक्रोधस्फुरत्कन्धरं
श्वा मल्लीकलिकाविकाशिदशनः किंचित्क्वणन् गच्छति ॥ ११ ॥

(1159) तुन्दी चेत्परिचुम्बति प्रियतमां स्वार्थात्ततो भ्रश्यति
स्वार्थं चेत्कुरुते प्रियाधररसास्वादं न विन्दत्यसौ ।
तं चेमं च करोति मूढजडधीः कामान्धमुग्धो यतस्
तुन्दौ तुन्दितविग्रहस्य सुरते नैको भवेन्नापरः ॥ १२ ॥

(1160) नश्यद्वक्रिमकुन्तलान्तलुलितस्वच्छाम्बुबिन्दूत्करा
हस्तस्वस्तिकसंयमे नवकुचप्राग्भारमातन्वती ।
पीनोरुद्वयलीनचीनवसना स्तोकावनम्रा जलात्
तीरोद्देशनिमेषलोलनयना बालेयमुत्तिष्ठति ॥ १३ ॥
भोज्यदेवस्य ॥

1161 अम्भोमुचां सलिलमुद्गिरतां निशीथे
ताडीवनेषु निभृतस्थितकर्णतालाः ।
आकर्णयन्ति करिणोऽर्धनिमीलिताक्षा
धारारवं दशनकोटिनिषण्णहस्ताः ॥ १४ ॥ ↑ N. 29b
हस्तिपकस्य ॥

(1162) हलाग्रोत्कीर्णायां परिसरभुवि ग्रामचटका
लुठन्ति स्वच्छन्दं नखरशिखराच्छोटितमृदः ।
चलत्पक्षद्वन्द्वप्रभवमरुदुत्तम्भितरजः-
कणाश्लेषभ्रामद्द्रुतमुकुलितोन्मीलितदृशः ॥ १५ ॥ ↑ K. 83a

---

**1158** — c) K आवाद्वीक्ष्य. **1161** — b) K °ताली°. ○ Śp. 593; Sbh. 2413; Srb. p. 207.6.

आकुञ्चीकृतपृष्ठमुन्नतवलद्वक्त्राग्रपुच्छं भयाद् 1163 S. 5.4.3 (योगेश्वरस्य)
अन्तर्वेश्मनिवेशितैकनयनं निष्कम्पकर्णद्वयम् ।
लालाकीर्णविदीर्णसृक्कविकचद्दंष्ट्राकरालाननः
श्वा निःश्वासनिरोधपीवरगलो मार्जारमास्कन्दति ॥ १६ ॥

पयसि सरसः स्वच्छे मत्स्यान् जिघृक्षुरितस्ततो (1164) S. 5.6 5 (योगेश्वरस्य) P. 181a
वलितनयनो मन्दं मन्दं पदंनिदधद्बकः ।
वियति विधृतैकाङ्घ्रिस्तिर्यग्विवर्तितकन्धरो
दलमपि चलत्सप्रत्याशं मुहुर्मुहुरीक्षते ॥ १७ ॥

मुक्तेषु रश्मिषु निरायतपूर्वकाया निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः । (1165)
आत्मोद्धतैरपि रजोभिरलङ्घनीया धावन्त्यमी मृग[ज]वाक्षमयेव रथ्याः ॥ १८ ॥

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चैर् (1166) S. 5.2.4 (विक्रमादित्यस्य)
आसज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥ १९ ॥

आघ्रातक्षोणिपीठः खुरशिखरसमाकृष्टरेणुस्तुरङ्गः 1167 S. 5.2.3 (विक्रमादित्यस्य)
पुञ्जीकृत्याखिलाङ्घ्रीन् क्रमवशविनमज्जानुरुन्मुक्तकायः ।
पृष्ठान्तः पार्श्वकण्डूव्यपनयनरसाद्विस्त्रिरुद्वर्तिताङ्गः
प्रोत्थाय द्राङ् निरीहः क्षणमथ वपुरास्यानुपूर्व्या धुनोति ॥ २० ॥

आदौ वितत्य चरणौ विनमय्य कण्ठमुत्थाप्य वक्त्रमभिहत्य मुहुश्च वत्साः । (1168) S. 5.3.2 (चक्रपाणेः)
मात्रा प्रवर्तितमुखं मुखलिह्यमानपश्चार्धसुस्थमनसः स्तनमुत्पिबन्ति ॥ २१ ॥

---

**1163** — [c]) $S_3$ °सृक्व°. S °विकसद्-. — [d]) K निःश्वासविदीर्ण-. S °गलं. **1164** — [a]) K सरस-; $S_3$ सरसे; P om. — [b]) P चलित-. S °नयनं. P विदधन्. — [c]) P विवृतै°. **1165** — [b]) K निभृतोर्द्ध-. — [c]) K आत्मोद्धतैरपि. ○ Śāk. 1.8; Smk. 100.2 (कालिदासस्य). **1166** — [b]) S °भुग्नकंठं क्षणमुपरि. $S_{1,2}$ धूलिनम्रां. — [c]) K पासग्रासा°. S °त्प्रोथतुंग°. ○ Harṣacarita 3.5 Smk. 102.4 (भट्टबाणस्य); Sbh. 2420 (भट्टबाणस्य); Ssm. 117; Kpk. 492; Kpd. p. 356. **1167** — [a]) $S_3$ °क्षौणि-. — [b]) S °नमज्जानुकं मुक्त-. — [c]) $S_{2,3}$ °नयनवशाद्. K °दृष्टिरुद्वर्ति°. — [d]) $S_1$ °पूर्व्यां; $S_2$ °पूर्वां; $S_3$ °पूर्वं. **1168** — [a]) S अग्रे (आदौ). K विनिमय्य. — [c]) S मात्राविवर्तित-. $S_1$ °लिह्यमानः. — [d]) $S_1$ °स्वस्थमन°.

(1169) S. 4.45.3 (कालिदासस्य) प्रियायां स्वैरायामतिकठिनगर्भालसतया
किराते चाकर्णीकृतधनुषि धावत्यनुपदम् ।
प्रियाप्रेमप्राणप्रतिभयवशाकूतविकलो
मृगः पश्चादालोकयति च मुहुर्याति च मुहुः ॥ २२ ॥

(1170) शीर्णक्षुद्रातपत्री जठरवलयितानेकमात्राप्रपञ्चश्
चूडानिर्व्यूढचि↑ल्वच्छद उदरदरीभीषणो जीर्णकण्ठः । ↑ K. 835
दूराध्वभ्रान्तिखिन्नः कथमपि शनकैरङ्घ्रिपीडां नियम्य
स्वैरेन्धस्फोटनाय द्विजभवनमनु स्नातकः सायमेति ॥ २३ ॥

1171 S. 5.7.4 चञ्चच्चञ्चलचञ्चुवञ्चितचलच्चूडाग्रमुग्रं पतच्-
चक्राकारकरालकेसरसटास्फारस्फुरत्कन्धरम् ।
वारंवारमुदङ्घ्रिलङ्घनघनप्रेङ्खन्नखक्षुण्णयोः
कामं कुक्कुटयोर्द्वयं द्रुतपदक्रूरक्रमं युध्यति ॥ २४ ॥

(1172) एते जीर्णकुलायजालजटिलाः पांसूत्कराकर्षिणः
शाखाकम्पविहस्तदुःस्थविहगानाकम्पयन्तस्तरून् ।
हेलान्दोलितनर्तितोज्झितहतव्याघट्टितोन्मूलित-
प्रोत्क्षिप्तभ्रमितैः प्रपापटलकैः क्रीडन्ति झञ्झानिलाः ॥ २५ ॥

(1173) एते संततभृज्यमानचणकामोदप्रधाना मनः
कर्षन्त्यूषरसंनिवेशजरठच्छायाः स्थलीग्रामकाः ।
तारुण्यातिशयाग्रपामरवधूसोल्लासहस्तग्रह-
भ्राम्यत्पीवरयन्त्रकध्वनिरसद्गम्भीरगेहोदराः ॥ २६ ॥

(1174) S. 2.160.3 (बाणस्य) अस्मिन्नीषद्वलितविततस्तोकविच्छिन्नभुग्नः
किंचिल्लीलोपचितविभवः पुञ्जितश्चोत्थितश्च ।
धूमोद्गारस्तरुणमहिषस्कन्धनीलो दवाग्नेः
स्वैरं सर्पन् सृजति गगने गत्वरान् पत्रभङ्गान् ॥ २७ ॥

---

**1169** — [b]) S3 चाकर्ण धृत-. — [d]) K पश्चादालीकयति. ○ Any. p. 39.11. **1170** — [a]) K °प्रपञ्चश. — [b]) K °कण्ठः ।. — [d]) K स्वैरंभिस्फाटनाय. **1171** — [a]) S2.3 °चंचुवांछित-. — [b]) S1 °सटास्फाल-. — [d]) S द्रुतपदं. S1.2 युध्यते. ○ Smk. 96.10 (वररुचेः); Śp. 572 (वररुचेः). **1174** — [a]) S °द्वितततवलित-. — [b]) S °विनतः (°विभवः). K स्कंधलीनो. S1 दराग्निः. ○ Skb. 1.85; ŚB. 1.431, 2.214, 4.805.

कैश्चिद्वीतदयेन भोगपतिना निष्कारणोपप्लुत- (1175)
प्रक्षीणैर्निजवंशभूरिति मितैरत्यज्यमानाः कुलैः ।
ग्रामा निस्तृणजीर्णकुड्यबहुलाः स्वैरं भ्रमद्वभ्रवः
प्रायः पाण्डुकपोतकण्ठमुखरारामे न यान्त्युत्कताम् ॥ २८ ॥

दुरुपहितहलेषासार्गलद्वारमारात्परिचकितपुरन्ध्रीपातिताभ्यर्णभाण्डम् । (1176)
पवनरयतिरश्चीस्तोयधाराः प्रतीच्छन्विशति वलितशृङ्गः पामरागारमुक्षा ॥ २९ ॥

उत्प्लुत्या गृहकोणतः प्रचलिताः स्तोकाग्रजङ्घं ततो (1177)
वक्रस्वैरपदक्रमैरुपगताः किंचिच्चलन्तो गले ।
भेकाः पूतिनि↑पातिनो मिचिमिचीत्युन्मीलितार्धेक्षणा ↑K 84a
नक्राकारविदारिताननपुटैर्निर्मक्षिकं कुर्वते ॥ ३० ॥

विलासमसृणोल्लसन्मुसललोलदोःकन्दली- (1178) S. 2.118.3 (योगेश्वरस्य)
परस्परपरिस्खलद्वलयनिःस्वनैर्दन्तुराः ।
हरन्ति कलहूंकृतिप्रसभकम्पितोर[ः]स्थल-
त्रुटद्भमकसंकुलाः कलमकण्डनीगीतयः ॥ ३१ ॥

विकासयति लोचने स्पृशति पाणिनाकुञ्चिते (1179) S. 5.52.5 (कस्यचित्)
विदूरमवलोकयत्यतिसमीपसंस्थं पुनः ।
बहिर्व्रजति सातपे स्मरति नेत्रवर्तेः पुमान्
जराप्रमुखसंस्थितः समवलोकयन् पुस्तकम् ॥ ३२ ॥
वराह[स्य] ॥

प्रायो रथ्यास्थलभुवि रजःप्रायदूर्वालतायां (1180)
जाल्मैः पृष्ठापहृतसलवाः सक्षुधो मामहोक्षाः ।
स्वैरं श्वासानिलतरलितोद्भूतधूलीप्रवेश-
प्रुष्टघ्राणा विहितविधुतग्रासविघ्नं चरन्ति ॥ ३३ ॥

---

**1175** — d) K °रामेनयन्त्युत्कुतां ॥. **1176** — a) K °मार्गल. — b) K °पारिता-. **1177** — d) K लक्कोरविदा°. K निर्मेस्थिकं. **1178** — a) KS1 मुषल-. S कंदलाः. — b) S1.2 °नोद्दंतुराः; S3 नोद्धंधुराः ।. — c) S चलंति कलहुंकृति°. ○ Smk. 62.32 (विज्जाकायाः); Śp. 582 (विज्जकायाः); Skb. 5.87; ŚB. 2.155, 3.15, 3.192, 3.212; Sab. 2.11; Amd. 138. **1179** — a) KS1.2 विकाशयति. — b) S1 °संस्थः — c) K साततो. S1.3 नेत्रवृत्तेः; S2 नेत्रवृत्ते. S पुरा (पुमान्). **1180** — c) K °तरणितोभूत-.

(1181) सीमनि लघुपङ्कायामङ्कुरगौराणि चञ्चितोरस्काः ।
लघुतरमुत्प्लवमानाश्चरन्ति बीजानि कलविङ्काः ॥ ३४ ॥

(1182) क्वणद्वलयसंततिक्षणमुदञ्चिदोष्कन्दली
गलत्पटसमुन्मिषत्कुचतटीनखाङ्कावली ।
कराम्बुजधृतोल्लसन्मुशलमुन्नमन्ती मुहुः
प्रलम्बिमणिमालिनी [क]लमकण्डनी राजते ॥ ३५ ॥

वागुरस्य ॥

(1183) उत्पुच्छः प्रमदोच्छ्वसद्वपुरधोविस्रंसिपक्षद्वयः
S. 5.7.5 स्वैरोत्फालगतिक्रमेण परितो भ्रान्त्वा सलीलं मुहुः ।
(सोल्लोकस्य) उत्कण्ठालसकूजितः कलरुतां भूयो रिंसारस-
न्यग्भूतां चटकः प्रियामभिसरत्युद्वेपमानः क्षणम् ॥ ३६ ॥

सोन्नोकस्य ॥

(1184) सिद्धार्थयष्टिषु यथोत्तरहीयमानसंस्थानबद्धफलसूचिपरंपरासु ।
S. 2.177.4 विच्छिद्यमानकुसुमासु जनिक्रमेण पाकक्रमः कपिशिमानमुपादधाति ॥ ३७ ॥
(लक्ष्मीधरस्य)

(1185) बकोटाः पान्थानां शिशिरसरसीसीम्नि सरताम्
S. 5.6.2 अमी नेत्रानन्दं ददति चरणाचोटितमुखाः ।
(मधुकण्ठस्य) धुनाना मूर्धानं गलबिलगलत्स्फारशफर-
स्फुरत्पुच्छानच्छव्यतिकरसबाष्पाकुलदृशः ॥ ३८ ॥ ↑K. 84b

1186 तिर्यक्तीक्ष्णविषाणयुग्मचलनव्यानम्रकण्ठाननः
S. 5.3.3 किंचित्कुञ्चितलोचनः खुरपुटेनाचोटयन्भूतलम् ।
(योगेश्वरस्य) नि[:]श्वासैरतिसंततैर्बुषकणाजालं खले विक्षिपन्न्
उक्षा गोष्ठतटीषु लब्धविजयो गोवृन्दमास्कन्दति ॥ ३९ ॥

अचलस्य ॥

---

**1182** — [d]) K °मलिमालिनी-. K °कन्दनी. **1183** — [a]) S1 उत्पुच्छ-. S °दोल्लस°. — [b]) S स्वैरालोकगति-. — [d]) S °मनुसर°. S स्वयं (क्षणं). — [e]) K मोन्नोकस्य. **1184** — [a]) S यथोदय-. — [b]) S संतानवद्ध-(S2 °बंध-). — [d]) K यावक्रमः. K °मानमपादधाति. ○ Kav. p. 104; KHV. 288. **1185** — [a]) S बलाकाः पांथानां. — [c]) S °विशत् (गलत्). — [d]) S °द्युतिशबल (S1 °सकल°; S2 °कवल ) बाष्पारुणदृशः ॥. **1186** — [a]) S1, 2 °चरण°. N °कर्णाननः; S °ग्रीवाननः. — [b]) S °पुटैराचोट°. — [c]) S3 °जर्जरैर्बुष°

अर्चिर्मालाकरालाद्दिवमभिलिहतो दाववह्नेरदूराद् (1187)
उड्डीयोड्डीय किंचिच्छलभकवलनानन्दमन्दप्रचाराः ।
अग्रेऽग्रे संरटन्तः प्रचुरतरमसीपातदुर्लक्षधूम्रा
धूम्याटाः पर्यटन्ति प्रतिविटपममी निष्ठुराः स्वस्थलीषु ॥ ४० ॥
मधुकण्ठस्य ॥

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूतप्रिया- (1188)
पीतादप्यधिकं तपोवनमृगः पर्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ ४१ ॥
भवभूतेः ॥

मधुरमिव वदन्तः स्वागतं भृङ्गशब्दैर्नतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः । (1189)
मम ददत इवार्घं पुष्पवृष्टिं किरन्तः कथय नतिसपर्यां शिक्षिताः शाखिनोऽपि ॥४२॥
श्रीहर्षस्य ॥

अस्मिन् वृद्धवनेचरीकरतलैर्दत्ताः सपञ्चाङ्गुला (1190)
– – – ⏑ ⏑ – – ⏑ – शिखरिभिः शृङ्गैः करालोदराः ।
द्वारोपान्तपशूकृताप्यपुरुषक्षुब्धास्थिकिर्मीरिताश्
चित्तोत्कम्पमिवानयन्ति गहनाः कान्तार – – ⏑ – ॥ ४३ ॥

तैस्तैर्जीवोपहारैरिह कुहरशिलासंश्रयामर्चयित्वा (1191)
देवीं कान्तारदुर्गां रुधिरमुपतरु क्षेत्रपालाय दत्वा । S. 5.1.2 (कस्यचित्)
तुम्बीवीणाविनोदव्यवहितसरकामह्नि जीर्णे पुराणीं
हालां मालूरकोषैर्युवतिसहचरा बर्बराः शीलयन्ति ॥ ४४ ॥
योगेश्वरस्य ॥

अ[भि]नवमुखमुद्रं क्षुद्रकूपोपवीतं प्रशिथिलविपुलत्वं ज्वालकोच्छ्वासिपालम् । (1192)
परिणतिपरिपाटिव्याकृतेनारुणिम्ना हतहरितिमशेषं नागरङ्गं चकास्ति ॥४५॥ ↑K.85a
अभिनन्दस्य ॥

॥ इति जातिव्रज्या ॥ ३५ ॥

---

**1187** — [c]) K संवरटंतः. **1188** — [a]) K °प्रपूत-. ○ Ut. 4.1; Srb. p. 141.10. **1189** ○ Nāg. 1.11; Srb. p. 141.3. — [d]) कथमतिथि-. **1190** The lacunae are in K. **1191** — [a]) S °गिरिकुहर°. **1192** — [a]) K क्षुद्रकूपी-. — [b]) K °पालः ।. — [c]) K °कृतनौरुणिम्ना.

## ॥ ततो माहात्म्यव्रज्या ॥ ३६ ॥

1193 S. 4.72.4 P. 202a तद्ब्रह्माण्डमिह क्वचित्क्वचिदपि क्षोणी क्वचिन्नीरदास्
ते द्वीपान्तरमालिनो जलधयः क्वापि क्वचिद्भूभृतः ।
आश्चर्यं गगनस्य कोऽपि महिमा सर्वैरमीभिः स्थितैर्
दूरे पूरणमस्य शून्यमिति यन्नामापि नाच्छादितम् ॥ १ ॥
केशटस्य ॥

1194 आपीयमानमसकृद्भ्रमरायमाणैरम्भोधरैः स्फुरितवीचिसहस्रपत्रम् ।
क्षीराम्बुराशिमवलोकय शेषनालमेकं जगत्त्रयसरःपृथुपुण्डरीकम् ॥ २ ॥

(1195) P. 202a (केशटस्य) विष्णुर्बभार भगवानखिलां धरित्रीं तं पन्नगस्तमपि तत्सहितं पयोधिः ।
कुम्भोद्भवस्तु तमपीयत हेलयैव सत्यं न कश्चिदवधिर्महतां महिम्नः ॥ ३ ॥

1196 S. 4.8.3 (शब्दार्णवस्य) P. 70a (anon) किं ब्रूमो जलधेः श्रियं स हि खलु श्रीजन्मभूमिः स्वयं
वाच्यः किं महिमापि यस्य हि किल द्वीपं महीति श्रुतिः ।
त्यागः कोऽपि स तस्य बिभ्रति जगन्त्यस्यार्थिनोऽप्यम्बुदाः
शक्तिः कैव कथापि यस्य भवति क्षोभेण कल्पान्तरम् ॥ ४ ॥
वाचस्पतेः ॥

1197 S. 4.8.4 (हरेः) P. 73a (anon) एतस्माज्जलधेर्जलस्य कणिकाः काश्चिद्गृहीत्वा ततः
पाथोदाः परिपूरयन्ति जगतीं रुद्धाम्बरा वारिभिः ।
अस्मान्मन्दरकूटकोटिघटनाभीतिभ्रमत्तारकां
प्राप्यैकां जलमानुषीं त्रिभुवने श्रीमानभूदच्युतः ॥ ५ ॥
मुञ्जराजस्य ॥

1198 S. 4.12.4 P. 69b (anon) 202b आश्चर्यं वडवानलः स भगवानाश्चर्यमम्भोनिधिर्
यत्कर्मातिशयं विचिन्त्य हृदये कम्पः समुत्पद्यते ।

---

**1193** — a) P तद्ब्रह्माण्डमखण्डितं क्वचिदपि. S2.3 क्षौणी. — b) N दीपा°. K °सालिनो; P °सानिनो; S °शालिनो. P जनरयः. S क्वचित्पर्वताः ।. — c) P सौरेरमी-. — d) P पूरमनल्प. — e) Ss केशरस्य. **1195** ○ Sbh. 993. **1196** — b) S महिमास्य यस्य. P खलु (किल). P महीविश्रुतिः ।. — c) P न (स). S जगद्यस्यार्थिनो. ○ Smk. 104.10; Any. p. 96.33; Amd. 82. **1197** — b) P जगतिं रुद्धा सुधा वारिभिः. — c) SP अस्मिन्मंदर°. P °भीतभ्रम°. — d) P °मानुषीस्. ○ Smk. 104.9 (जलमानुषीरुद्रस्य); Auc. ad 20 (मालवरुद्रस्य); Any. p. 96.34; SG. 18b. **1198** — b) S यत्कार्यातिशयं. K विभित्स्व; S विलोक्य (विचिन्त्य). P1 कल्पः (कंपः). ○ Auc. ad 31 (भट्टेन्दुराजस्य; ed. footnote श्रीमदभिनवगुप्ताचार्यस्य गुरुर्भट्टेन्दुराजः); Sbh. 884; Jsv. 302.2.

एकस्याश्रयघस्मरस्य पिबतस्तृप्तिर्न जाता जलैर्
अन्यस्यापि महात्मनो न वपुषि स्वल्पोऽपि तोयव्ययः ॥ ६ ॥
केशटस्य ॥

निपीतो येनायं तटमधिवसत्यस्य स मुनिर् 1199 P. 202b
ददानोऽन्तर्दाहं ↑ स्रज इव स चौर्वोऽस्ति दहनः । ↑ K. 85b
तथा सर्वस्वार्थे बहुविमथितो येन स हरिः
स्वपित्यङ्के श्रीमानहह महिमा कोऽपि जलधेः ॥ ७ ॥
धराधरस्य ॥

अन्यः कोऽपि स कुम्भसंभवमुनेरास्तां शिखी जाठरो (1200) P. 75a (श्रीकेशवाचार्यस्य)
यं संचिन्त्य दुकूलवह्निसदृशः संलक्ष्यते वाडवः ।
वन्द्यं तज्जठरं स मीनमकरग्राहावलिस्तोयधिः
पश्चात्पार्श्वमपूरितान्तरवियद्यत्र स्वनन् भ्राम्यति ॥ ८ ॥
वाशटस्य ॥

श्वासोन्मूलितमेरुरम्बरतलव्यापी निमज्जन्मुहुर् (1201) S. 4.13.1 (शब्दार्णवस्य) P. 202b
यत्रासीच्छिशुमारविभ्रमकरः क्रीडावराहो हरिः ।
सीमा सर्वमहाद्भुतेषु स तथा वारांपतिः पीयते
पीतः सोऽपि न पूरितं च जठरं तस्मै नमोऽगस्तये ॥ ९ ॥
वाचस्पतेः ॥

उद्यन्तु नाम सुबहूनि महामहांसि चन्द्रोऽप्यलं भुवनमण्डलमण्डनाय । 1202 S. 4.4.1 (आनन्दवर्धनस्य) P. 203a
सूर्यादृते न तदुदेति न चास्तमेति येनो↑दितेन दिनमस्तमितेन रात्रिः ॥१०॥ ↑N.30a

उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरुस् 1203
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः ।
शौर्यं यच्च न तद्गिरां पथि ननु व्यक्तं हि तत्कर्मभिः
सत्यं ब्रह्मतपोनिधेर्भगवतः किं नाम लोकान्तरम् ॥ ११ ॥

---

**1199** — [a]) P तामनुसरत्यस्य. — [c]) P तथाप्येष स्वार्थे. P येन जलधिः. — [d]) P स्वपित्यंगे. **1200** P *cdab.* — [c]) P °ग्राहाकुल°. — [d]) P पार्श्वापार्श्वं-. **1201** — [c]) S वीचिव्याप्तदिगंतरः स हि तथा. — [e]) S1 शब्दार्णववाचस्पतेः. **1202** — [a]) S किं नैव सन्ति सुबहूनि. ○ Sbh. 558 (आनन्दवर्धनस्य); BIS. 1245 (468; Śp.); Sb. 37*b*; Any. p. 6.49; Śp. 741; Srb. p. 209.9. **1203** — [d]) N किं वा न. ○ Mahāvīracarita 2.36. — [d]) लोकोत्तरं; Han. 1.53; Smk. 109.43 (भवभूतेः); Daś. ad 2.2; Srh. 182.1 (भवभूतेः); KHA. 686; ŚB. 2.535; all these have order *acbd.*

(1204) P. 68a इतो वसति केशवः पुरमितश्च तद्विद्विषाम्
इतश्च शरणागताः शिखरिपक्षिणः शेरते ।
इतश्च वडवानलः सह समस्तसंवर्तकैर्
अहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ १२ ॥

(1205) S. 4.6.4 (मधुकूटस्य) P. 203a तत्तावदेव शशिनः स्फुरितं महीयो यावन्न तिग्मरुचिमण्डलमभ्युदेति ।
अभ्युद्गते सकलधामनिधौ च तस्मिन्निन्दोः सिताभ्रपटलस्य च को विशेषः॥१३॥

(1206) S. 4.1.5 (वराहस्य) P. 37b अपत्यानि प्रायो दश दश वराही जनयति ↑ K. 86a
क्षमाभारे धुर्यः स पुनरिह नासीन्न भविता ।
पदं कृत्वा यः स्वं फणिपतिफणाचक्रवलये
निमज्जन्तीमन्तर्जलधिवसुधामुत्तुलयति ॥ १४ ॥

(1207) तेषां तृषः परिणमन्ति न यत्र तत्र नान्यस्य वारिविभवोऽपि च तादृगस्ति ।
विश्वोपकारजननीव्यवसायसिद्धिमम्भोमुचां जलधयो यदि पूरयन्ति ॥ १५ ॥

1208 किं वाच्यो महिमा महाजलनिधेर्यत्रेन्द्रवज्राहति-
त्रस्तो भूभृदमज्जदम्बुविचलत्कौलीलपोताकृतिः ।
मैनाकोऽपि गभीरनीरविलुठत्पाठीनपृष्ठोल्लसच्-
छेवालाङ्कुरकोटिकोटरकुटीकुड्यान्तरे निर्वृतः ॥ १६ ॥
वल्लणस्य ॥

1209 S. 4.13.2 P. 203a किं ब्रूमो हरिमस्य विश्वमुदरे किं वा फणां भोगिनः
शेते यत्र हरिः स्वयं जलनिधेः सोऽप्येकदेशे स्थितः ।
आश्चर्यं कलशोद्भवः स जलधिर्यस्यैकहस्तोदरे
गण्डूषीयति पङ्कजीयति फणी भृङ्गीयति श्रीपतिः ॥ १७ ॥

---

**1204** — [a]) P माधवः पुरमिदं तदीयद्विषां — [b]) P इतः परमनिर्वृताः P °पत्रिगः — [c]) P वडवानलः तदनुपत्तनं भोगिनां ○ Bh. 20; Śp. 1093 (भर्तृहरेः); Sbh. 886; Srh. 168.41; Srb. p. 216.25; Amd. 818; KHA. 565; Skb. 4.95; ŚB. 3.43; Any. p. 98.44; Jsv. 290.9. **1205** — [b]) S °भ्युदेति; P °भ्युपेति — [c]) S तु (च). ○ Sbh. 555 (प्रकाशदत्तस्य); KHV. 44 (? प्रकाशदत्त); Skb. 2.87; Kav. p. 59; Sb. 37*a* (प्रकाशदत्तस्य). **1206** — [a]) P नवदश — [b]) P धरोद्धारे धूर्यः P निसीन्दभरिता — [c]) P यः स्वं कृत्वा P °चक्र च नये — [d]) S °मुद्वलयति. **1208** (= 37). This is the proper place for the stanza. ○ Śp. 1096 (बधिरकवेः); Any. p. 98.47. **1209** — [c]) S1.2 मुनिरयं यस्यैक-; S3 [अ]म्बुधिरयं यस्यैक- P हस्तेऽम्बुधिर्. ○ Smk. 109.49 (मुरारेः); Śp. 4025; Pv. 797; Ssm. 969; Jsv. 291.4.

विस्तारो यदि नेदृशो न यदि तद्गाम्भीर्यमम्भोनिधेर् 1210 S. 4.12.2 P. 74a
न स्याद्वा यदि सर्वसत्त्वविषयस्तादृक्कृपानुग्रहः ।
अन्तः प्रज्वलता पयांसि दहता ज्वालावलीर्मुञ्चता
के न स्युर्वडवानलेन बलिना भस्मावशेषीकृताः ॥ १८ ॥
**केशटस्य** ॥

उद्दीप्ताग्निरसौ मुनिर्विजयते यस्योदरे जीर्यतः (1211)
पाथोधेरवशिष्टमम्बु कथमप्युद्गीर्णमन्तोऽर्णवम् ।
किं चास्माज्जठरानलादिव नवस्तत्कालवान्तिक्रमान्
निर्यातः स पुनर्य[मा]य पयसामन्तर्गतो वाडवः ॥ १९ ॥
**श्रीदशरथस्य** ॥

यस्मिन्नापस्तदधिकरणस्यास्य वह्नेर्निवृत्तिः (1212)
संवासान्ते व्रजति जलदे वैकृतस्ताभिरेव ।
अस्त्यन्योऽपि प्रलयरजनीसंनिपातेऽप्यनिद्रो
यः सामुद्रीरविरतमिमास्तेजसि स्वे जुहोति ॥ २० ॥
**केशटस्य** ॥

॥ इति माहात्म्यव्रज्या ॥ ३६ ॥

## ॥ ततः सद्व्रज्या ॥ ३७ ॥

असन्तो ↑ नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः K. 86b 1213 S. 5.35.4
प्रिया वृत्तिर्न्याय्या चरितमसुभङ्गेऽप्यमलिनम् ।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १ ॥
**धर्मकीर्तेः** ॥

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः 1214
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।

---

**1210** — [b]) P स्याद्वायसि. $S_3$ सत्वमात्रविषयस्. S दया-(कृपा-). — [c]) S ज्वालावलीं; P ज्वालावली-. $S_2$ युध्यते. — [d]) $S_1$ °शेषीकृतः. — [e]) K केशवस्य. ○ Smk. 27.17 (केसटस्य; printed केटसस्य). **1213** — [d]) $S_3$ केनादिष्टं. ○ Bh. 18, *bacd*; Sbh. 280 (जयादित्यस्य); Srb. p. 52.248; Pt. 1.56; Ssv. 417; Jsv. 182.3. **1214** — [d]) K °मनुमधिविशुद्धं. ○ Ut. 2.2; ŚB. 3.248.

पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपदि विशुद्धं विजयते ॥ २ ॥

भवभूतेः ॥

1215 निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु लक्ष्मीः परापततु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥३॥

भर्तृहरेः ॥

1216 निर्मलानां कुतो रन्ध्रं कथंचिदपविध्यते ।
विधीयते गुणैरेव तच्च मुक्तामणेरिव ॥ ४ ॥

N. त्र्यम्बकस्य ॥

1217 यदा किंचिज्ज्ञोऽहं गज इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित् किंचिद्बुधजनसकाशादधिगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ५ ॥

N. कालिदासस्य ॥

1218 अनुहरतः खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः ।
एकः कुरुते छिद्रं गुणवानन्यः प्रपूरयति ॥ ६ ॥

गोभट्टस्य ॥

(1219) पुण्ड्रेक्षुकाण्डसुहृदो मधुराम्बुभावाः सन्तः स्वयं यदि नमन्ति नमन्ति कामम् ।
आन्दोलितास्तु नमनस्पृहया परेण भज्यन्त एव शतधा न पुनर्नमन्ति ॥ ७ ॥

1220 जतुपङ्कायते दोषः प्रविश्यैवासतां हृदि ।
सतां तु न विशत्येव यदि वा पारदायते ॥ ८ ॥

---

**1215** ○ Bh. 265; Śp. 225 (भर्तृहरेः); Sbh. 278; Srb. p. 78.11; Srh. 28.12 (भर्तृहरेः); Alaṃkāraratnākara 471; St. 2.1 (भर्तृहरेः); Sa. 24.119; Shv. A. 47*a*. 342 (भर्तृहरेः); Ssm. 1447; Pt. 1.39; Smv. 28.24; Jsv. 173.4; SG. 17*b*; Sl. 28*b*; BIS. 3723 (1581); ŚB. 3.242. **1216** — [a]) K रन्ध्रा. — [b]) K °दध्वविद्यते. — [c]) K om. ○ Smk. 121.6. — [b]) कदाचिदपि जायते. **1217** — [a]) N समभवंस्. — [b]) N °मदलिप्तं. — [c]) K तस्यैव, which means that 1216–7 are Bhartṛhari's. ○ Bh. 5; Śp. 4177 (भर्तृहरेः); Sbh. 3456 (भर्तृहरेः); Srb. p. 41.58; SK. 6.37; Ssm. 1051; Ssv. 760; Bps. 157; SG. 4.1; BIS. 5188 (2437). **1218** — [a]) K अनुहवतः. ○ Smk. 6.11 (गोभटस्य); Shv. A 60*a*. 597 (शूचीगोभट्टस्य). Śp. 239 (गोभट्टस्य); Srb. p. 47.112.

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः । 1221
सर्वलोकस्य वा मूर्ध्नि शीर्यते वन एव वा ॥ ९ ॥
व्यासस्य ॥

राजा त्वं वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः (1222) S. 5.40.5
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः । (वल्लणस्य)
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ १० ॥ ↑K. 87a
भर्तृहरेः ॥

उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं 1223 S. 5.25.3
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ११ ॥
राजशेखरस्य ॥

सत्पक्षा ऋजवः शुद्धाः सफला गुणसेविनः । (1224)
तुल्यैरपि गुणैश्चित्रं सन्तः सन्तः शराः शराः ॥ १२ ॥

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः । (1225)
यशसि चाभिरतिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ १३ ॥

स साधुर्यो विपन्नानां साहाय्यमधिगच्छति । (1226)
न तु दुर्विहितातीतवस्तुपालनपण्डितः ॥ १४ ॥

---

**1221** — [c]) K व्यासः. ○ Bh. 34; Smk. 7.2 (भर्तृहरेः); Śp. 264 (भर्तृहरेः); Sbh. 201 (रविगुप्तस्य), 509 (anon); Srh. 102.2; Sa. 24.46; St. 43.23 (भर्तृहरेः); Shv. A. 71*a*. 779 (भर्तृहरेः); Garuḍamahāpurāṇa 110.13; Ssv. 1544; Jsv. 168.2; SG. 17*a*; Srb. p. 79.4; BIS. 1845 (1708), Hit. ed. Schl. 1.126, ed. Johns. 241; Sb. 33*a*. 10. **1222** — [c]) S3 om. ○ Bh. 163. — [a]) त्वं राजा; Śp. 204 (भर्तृहरेः); Sbh. 3473; Srb. p. 80.42; BIS. 2654 (1078). **1223** — [a]) S °च्छन्ना. S पतिरपां. — [b]) K परिणामं. ○ Bāl. 1.8; Bh. 219; Sbh. 322 (राजशेखरस्य); Srb. p. 51.233; Sd. ad 7.8 (*a* only); Amd. 310; Jsv. 109.1; KHA. 264; Sb. 22*b*. 73; Vyk. ad 2.29 (beginning); ŚB. 1.338. **1224** ○ Sbh. 229 (भट्टवासुदेवस्य); Srb. p. 47.79. **1225** ○ Bh 14; Smk. 6.23 (भर्तृमेण्ठस्य); Śp. 209 (भर्तृहरेः); Srh. 168.30 (भर्तृहरेः); Sbh. 267 (मेण्ढकस्य); Srb. p. 50.188; Sa. 24.97; Shv. A. 46*a*; SK. 2.66; Pt. 1.2; Ssv. 416; SG. 17*a*; BIS. 6147 (2825), Hit. ed. Schl. 1.28. ed. Johns. 32; ŚB. 1.179. **1226** — [d]) K °पालय-.

1227 सत्यं गुणा गुणवतां विधिवैपरीत्याद्यत्नार्जिता अपि कलौ विफला भवन्ति । ↑ N. 30b
साफल्यमस्ति सुतरामिदमेव तेषां यत्तापयन्ति हृदयानि पुनः खलानाम् ॥१५॥

1228 अपूर्वः कोऽपि कोपाग्निः सज्जनस्य खलस्य च ।
एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः ॥ १६ ॥

1229 छायां कुर्वन्ति चान्यस्य तापं तिष्ठन्ति वातपे ।
फलन्ति च परार्थाय पादपा इव सज्जनाः ॥ १७ ॥

1230 अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदा लोकहिते सक्ता रत्नदीपा इवोत्तमाः ॥ १८ ॥

1231 लक्ष्मीं तृणाय मन्यन्ते तद्भरेण नमन्ति च ।
अहो किमपि चित्राणि चरित्राणि महात्मनाम् ॥ १९ ॥

1232 S. 5.35.1 (गोभटस्य) अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् ।
अहो सुमनसां वृत्तिर्वामदक्षिणयोः समा ॥ २० ॥

1233 परगुणतत्त्वग्रहणं स्वगुणावरणं परव्यसनमौनम् ।
मधुरमशठं च वाक्यं केनाप्युपदिष्टमार्याणाम् ॥ २१ ॥

1234 विचिन्त्यमानो हि करोति विस्मयं विसारिणा सच्चरितेन सज्जनः ।
यदा तु चक्षुःपथमेति देहिनां तदामृतेनेव मनांसि सिञ्चति ॥ २२ ॥

1235 संपर्केण तमोभिदां जगदघप्रध्वंसिनां धीमतां
क्रूरोऽपि प्रकृतिं विहाय मलिनामालम्बते भद्रताम् । ↑ K. 87b
यत्तृष्णाग्लपितोऽपि नेच्छति जनः पातुं तदेव क्षणाद्
उज्झत्यम्बुधरोदरस्थितमपांपत्युः पयः क्षारताम् ॥ २३ ॥

---

**1227** ○ Sbh. 270 (पुण्यस्य). **1228** ○ Smk. 8.20 (गोभटस्य); Śp. 359; Ssm. 1574; St. 3.15; BIS. 448 (160); Srb. p. 54.7. **1229** ○ Any. p. 109.22; Sa. 16.2; BIS. 2307 (921), Vikramacaritra 65; Srb. p. 236.4. **1230** — [c]) K शक्ता. ○ Śp. 235; Sbh. 224; Pad. p. 110.30; Bh. 372; Srh. 31.3; Sa. 16.1; SK. 2.77; Ssm. 1483; Pt. 1.3; BIS. 455 (165); Srb. p. 46.42. **1232** ○ Smk. 6.4; Śp. 199; St. 1.8; Pt. 1.21; BIS. 118 (45). **1234** — [b]) K विमारिणा सर्व्वरितेन. **1235** — [a]) N तमोविदां.

क्वाकारणरुषां संख्या संख्याताः कारणक्रुधः । 1236
कारणेऽपि न कुप्यन्ति ये ते जगति पञ्चषाः ॥ २४ ॥

सुजनाः परुषाभिधायिनो यदि कः स्यादपरोऽपि मञ्जुवाक् । 1237
यदि चन्द्रकराः सवह्नयो ननु जायेत सुधा कुतोऽन्यतः ॥ २५ ॥
मङ्खलस्य ॥

ये दीनेषु कृपालवः स्पृशति यानल्पोऽपि न श्रीमदः (1238) S. 5.35.5 (शब्दार्णवस्य)
श्रान्ता ये च परोपकारकरणे हृष्यन्ति ये याचिताः ।
स्वस्थाः सत्यपि यौवनोदयमहाव्याधिप्रकोपेऽपि ये
ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ॥ २६ ॥

यशो रक्षन्ति न प्राणान् पापाद्बिभ्यति न द्विषः । (1239)
अन्विष्यन्त्यर्थिनो नार्थान् निसर्गोऽयं महात्मनाम् ॥ २७ ॥

यथा यथा परां कोटिं गुणः समधिरोहति । (1240)
सन्तः कोदण्डधर्माणो विरमन्ति तथा तथा ॥ २८ ॥

अयं निजः परो वेति गणना लघुचेतसाम् । (1241) S. 5.35.2 (केशटस्य)
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ २९ ॥

ये प्राप्ते व्यसनेऽप्यनाकुलधियः संपत्सु नैवोन्नताः (1242)
प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणोपयोगैरपि ।
ह्रीमन्तः स्वगुणप्रशंसनविधावन्यस्तुतौ पण्डिता
धिग्धात्रा कृपणेन येन न कृताः कल्पान्तदीर्घायुषः ॥ ३० ॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता (1243)
मुखे सत्या वाणी श्रुतमनवगीतं श्रवणयोः ।

---

**1238** — [a]) S दयालवः. — [b]) S व्यग्रा ये च. — [c]) S3 सुस्था. ○ Smk. 6.30; Śp. 228; SK. 2.64; St. 1.20; Bps. 111; SG. 3.9. **1240** ○ Ssv. 454. **1241** — [d]) K कुटुम्बिकम् ॥. ○ Bh. 376; Śp. 273; Sbh. 498 (भट्टोद्भटस्य); Srb. p. 70.9; Srh. 168.6 (उदात्तस्य); Pad. p. 110.31; Sa. 16.13; St. 5.5; Ssm. 1484; Pt. 1.4; SG. 15*b*; Ssv. 443; BIS. 550 (203), Hit. ed. Schl. 1.64, ed. Johns. 12, Vikramacaritra 67, Pañc. ed. Bomb. 5.38; Sb. 33*b*. 4 (भट्टोद्भटस्य). **1242** — [c]) K°प्रसंसिनि-. — [d]) K तेन च कृताः. ○ Bh. 695; Shv. A. 45*a*. 310 (भर्तृहरेः); Śp. 248; Srb. p. 52.256; Jsv. 259.7. **1243** ○ Bh. 72; Pt. 1.63; Ssv. 16; Jsv. 13.12, 182.9; Srb. p. 52.240; BIS. 1543 (601).

हृदि स्वच्छा वृत्तिर्विजयिभुजयोः पौरुषमथो
विनाप्यैश्वर्येण स्फुरति महतां मण्डनमिदम् ॥ ३१ ॥

(1244) वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ३२ ॥
चेः ॥

(1245) आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् । ↑ K. 88a
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ ३३ ॥

(1246) पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययहार्यबुद्धिः ॥ ३४ ॥
कालिदास[स्यैतौ] ॥

(1247) गुह्यपिधानैकपरः सुजनो वस्त्रायते सदा पिशुनम् ।
भवतामयं विडम्बो यदिदं छिद्रैर्विसूत्रयतु ॥ ३५ ॥

(1248) ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी ।
अङ्गुलीकथनादेव यत्र जीवन्ति मानिनः ॥ ३६ ॥

(1249) S. 5.25.2 (शालिकनाथस्य) यन्नेत्रैस्त्रिभिरीक्षते न गिरिशो नाष्टाभिरप्यब्जभूः
स्कन्दो द्वादशभिर्न वा न मघवा चक्षुःसहस्रेण वा ।
संभूयापि जगत्त्रयस्य नयनैर्द्रष्टुं न तच्छक्यते
प्रत्यादिश्य दृशौ समाहितधियः पश्यन्ति यत्पण्डिताः ॥ ३७ ॥

(1250) नीरसान्यपि रोचन्ते कर्पासस्य फलानि नः ।
येषां गुणमयं जन्म परेषां गुह्यगुप्तये ॥ ३८ ॥

---

**1244** ○ Ut. 2.7; Śp. 215 (भवभूतेः); Shv. A. 71b. 788, B. 10b. 84; ŚB. 3.252, 4.715; Srb. p. 45.4. **1245** ○ Śak. 1.2; Srb. p. 170.746. **1246** — [c]) K कालिदासः, for कालिदासस्यैतौ? ○ Mālavikāgnimitra 1.2; BIS. 4141 (4559). **1247** — [c]) K भवतामवे विडंबो. — [d]) K विसूत्रयत. **1248** ○ Smk. 7.3; Śp. 262; Shv. A. 71b. 785; Daś. ad 2.13; KHA. 687; Ssv. 1551. **1249** — [b]) S द्वादशभिस्तथा न. S यत् l. — [c]) S न यत्पार्यते. — [d]) S1 प्रत्याहृत्य; S2 3 प्रत्याहृत्य. S तत्पंडिताः. ○ Jsv. 169.3; Ssv. 779. **1250** ○ Śp. 294; Ssm. 1594; St. 4.5; Any. p. 138.237; Ssv. 620; Jsv. 162.1; BIS. 3802 (1633).

गुणवत्पात्र मात्रैकहार्यनिर्यासमाशयन् । (1251)
आत्मनावैति ते लोकः स्वबन्धुरिति धावति ॥ ३९ ॥

सततमसत्याद्बिभ्यति मा भैषीरिति वदन्ति भीतेषु । (1252)
अतिथिजनशेषमश्नति सज्जनजिह्वे कृतार्थासि ॥ ४० ॥

यद्यपि दैवात्स्नेहो नश्यति साधोस्तथापि सत्त्वेषु । (1253)
घण्टाध्वनेरिवान्तश्चिरमनुबध्नाति संस्कारः ॥ ४१ ॥
रविगुप्तस्य ॥

॥ इति सद्व्रज्या ॥ ३७ ॥

## ॥ ततोऽसद्व्रज्या ॥ ३८ ॥

अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः । 1254
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ १ ॥

सद्गुणालङ्कृते काव्ये दोषान् मृगयते खलः । 1255
वने पुष्पफलाकीर्णे करभः कण्टकानिव ॥ २ ॥

मुखरस्याप्रसन्नस्य मित्रकार्यविघातिनः । 1256
निर्माणमाशानाशाय दुर्जनस्य घनस्य च ॥ ३ ॥

निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्तौ शृणिः 1257
पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे । ↑K 88b
इत्थं तद्भुवि नास्ति यत्र विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥ ४ ॥

अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते । (1258)
विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे ॥ ५ ॥

---

**1252** — [d]) K कृतार्थोसि. **1254** ○ Vās. 7; Śp. 350 (सुबन्धोः); Sbh. 328 (सुबन्धोः); Shv. A. 58*a*. 560 (सुबन्धोः); St. 3 10; SK. 2.95; Sb. 23*a*. 3; Sa. 26.24; BIS. 142 (57); Srb. p. 57.126. **1257** — [b]) N पातो. ○ Srb. p. 61.264; BIS. 4189 (1823), Pañcaratna (Haeberlin 3), Hit. ed. Schl. 2.155, Johns. 164, ed. Calc. 1830, p. 286. (all in order *bacd*). **1258** — [b]) K °ज्जनो कंप°. ○ Srb. p. 59.221; (बृहस्पतिनीतिसार 112, गरुडमहापुराण).

1259 खलवृन्दं श्मशानं च भवत्यपचितं यदा ।
ध्रुवं तदैव लोकानां कल्याणमवगम्यते ॥ ६ ॥

1260 अन्तर्मलिनदेहेन बहिराह्लादकारिणा ।
महाकालफलेनेव कः खलेन न वञ्चितः ॥ ७ ॥

1261 सर्वत्रैव खलो जनः सरलतासद्भावनिःसङ्गिनां
साधूनां पदबन्धनाय पिशुनप्रौढाभिमानोद्यमः ।
सूत्रं किंचिदपूर्वमेव जठरादुत्पाद्य सद्यः स्वयं
लूतातन्तुवितानजालकुटिलं चक्रं करोत्यद्भुतम् ॥ ८ ॥

1262 देवानामपि पश्यन्तां स श्रिया मेध्यते खलु ।
वाससापि न योगोऽस्ति निश्चकस्य पिनाकिनः ॥ ९ ॥

1263 स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो नु सदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥ १० ॥

1264 आखुभ्यः किं खलैर्ज्ञातं खलेभ्यः किमथाखुभिः ।
अन्यत्परगृहोत्खातात्कर्म येषां न विद्यते ↑ ॥ ११ ॥ ↑ N. 31a

1265 दुर्जनदूषितमनसां पुंसां स्वजनेऽपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥ १२ ॥

1256 S. 5.36.4 (संघ [श्री] मित्रस्य) गुणोत्कर्षद्वेषात्प्रकृतिमहतामप्यसदृशं
खलः किंचिद्वाक्यं रचयति च विस्तारयति च ।
न चेदेवं तादृक्कमलकलिकार्धप्रतिनिधौ
मुनेर्गण्डूषेऽब्धिः स्थित इति कुतोऽयं कलकलः ॥ १३ ॥

---

**1259** — [d]) K °गमपगम्यते ॥. **1260** ○ Srb. p. 55.62 (कवितामृतकूप, Calcutta 1826). **1261** — [a]) NK शरलता-. **1263** — [a]) K °नोद्यति°. ○ Śp. 373; Sbh. 352; Sd. ad 10.12; SK. 2.112; Amd. 596; Ak. p. 245; Smv. 10.28; BIS. 842 (3299) *cdab*, Pañc. ed. Koseg. 1.166, ed. orn. 119, ed. Bomb. 150; Kpk. 378; Srb. p. 54.23. **1264** ○ BIS. 860 (3681). **1265** ○ Śp. 476; Sbh. 390; Sb. 27*a*. 53; SK. 2.116; Ssv. 526; BIS. 2855 (1184) Hit. ed. Schl. ad 4.101, Johns. 4.107. — [b]) often सुजनेऽपि; Srb. p. 56.124. **1266** — [a]) S1.2 किंचिद्वाच्यं. — [c]) S3 चेदेषां. — [d]) K कुतोऽयं. — [e]) S1 संघश्री°; S2 संघ°; S3 संघा-.

प्रियसखि विपद्दण्डप्रान्तप्रपातपरंपरा- (1267)
परिचयचले चिन्ताचक्रे निधाय विधिः खलः ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्
भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ १४ ॥

पादाहतोऽथ धृतदण्डविघट्टितो वा यं दंष्ट्रया स्पृशति तं किल हन्ति ↑ सर्पः ।↑ K. 89a (1268)
कोऽप्यन्य एष पिशुनोऽत्र भुजङ्गधर्मा कर्णे परं स्पृशति हन्त्यपरं समूलम्॥१५॥

परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान् व्यथते । 1269
पवनाशिनोऽपि भुजगाः परोपघातं न मुञ्चन्ति ॥ १६ ॥
रविगुप्तस्य ॥

अगम्यो मन्त्राणां प्रकृतिभिषजामप्यविषयः 1270
सुधासारासाध्यो विसदृशतरारम्भगहनः ।
जगद्भ्रामीकर्तुं परिणतधियानेन विधिना
स्फुटं सृष्टो व्याधिः प्रकृतिविषमो दुर्जनजनः ॥ १७ ॥

यः स्वानपि प्रथममस्तसमस्तसाधुवृत्तिर्गुणान् खलतया मलिनीकरोति । (1271)
तस्यास्य भोगिन इवोग्ररुषः खलस्य दाक्षिण्यमस्ति कथमन्यगुणोपमर्दे ॥ १८ ॥

रन्ध्रान्वेषिणि दुष्टदृष्टिविषिणि स्वच्छाशयद्वेषिणि 1272
क्षिप्रे रोषिणि शर्मशोषिणि विना हेतुं जगत्प्लोषिणि ।
स्वार्थार्थं मृदुभाषिणीष्टविहतावेकान्ततस्तोषिणि
श्रेयः क्रुद्धभुजंगभोगविषमे संविद्यते किं खले ॥ १९ ॥
गुणाकरस्य श्लेषश्लोकौ ॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं (1273)
शूरे निर्घृणतार्जवे विमतिता दैन्यं प्रियालापिनि ।

---

**1267** — [c]) K मृगमिव. — [d]) K विधान्यति. ○ Bh. 278; Śp. 451 (विज्जकायाः); Srb. p. 93.86; Sbh. 3137; Shv. A. 64*a*. 667, B. 2*b*. 63. (both विज्जायाः); BIS. 4353 (1921); SB. 4.555. **1268** — [c]) K विशुनोग्र. ○ Śp. 361; Sbh. 439; Srb. p. 60.237; Sb. 31*a*. 95. **1269** ○ Śp. 355; Sbh. 400 (रविगुप्तस्य); Shv. A. 58*a*. 555; St. 3.11; Sb. 27*b*. 59; SK. 2.97; SG. 21*b*. 9; Srb. p. 57.130. **1273** — [d]) K तत्कौ. ○ Bh. 24; Smk. 8.34; Sbh. 464 (भर्तृहरेः); Srb. p. 61.263; SK. 2.113; SG. 21*b*. Ssv. 525; Smv. 10.29.

तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत्को नाम भवेद्गुणः स गुणिनां यो दुर्जने नाङ्कितः ॥ २० ॥

(1274) वन्द्यान्निन्दति दुःखितानुपहसत्याबाधते बान्धवान्
शूरान् द्वेष्टि धनच्युतान् परिभवत्याज्ञापयत्याश्रितान् ।
गुह्यानि प्रकटीकरोति घटयत्यन्योन्यवैराश्रयान्
ब्रूते शीघ्रमवाच्यमुज्झितगुणो गृह्णाति दोषान् खलः ॥ २१ ॥

1275 यद्यदिष्टतरं तत्तद्देयं गुणवते किल ।
अत एव खलो दोषान् साधुभ्यः संप्रयच्छति ॥ २२ ॥

(1276) करुणाद्रवमेव दुर्जनः सुतरां सत्पुरुषं प्रबाधते ।
मृदुकं हि भिनत्ति कण्टकः कठिने कुण्ठक एव जायते ॥ २३ ॥

(1277) S. 5.37.5 (वाचस्पतेः) आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् । ↑ K. 89b
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ २४ ॥

1278 खलानां खर्जूरक्षितिरुहकठोरं क्व च मनः
क्व चोन्मीलन्मल्लीकुसुमसुकुमाराः कविगिरः ।
इतीमं व्यामोहं परिहर विचित्राः शृणु कथा
यथायं पीयूषद्युतिरुपलखण्डं द्रवयति ॥ २५ ॥

(1279) उपकारिणि शुद्धमतौ वार्य[ज]ने यः समाचरति पापम् ।
तं [ज]नमसत्यसंधं भगवति वसुधे कथं वहसि ॥ २६ ॥

(1280) मुखे नीचस्य पतिता अहेरिव पयःकणाः ।
क्षणेन विषतां यान्ति सूक्तपीयूषबिन्दवः ॥ २७ ॥

---

**1274** — [a]) K दुःखिताम्युप°. ○ Sbh. 459 (प्रकाशवर्षस्य); Srb. p. 62.277. **1275** ○ Sbh. 382; Ssv. 522; SG. 21*a*. 6; Srb. p. 56.111. **1276** K runs this stanza into the preceding. — [a]) K °द्रवनेव. **1277** — [a]) K क्षयणी. ○ Bh. 62; Pk. 64; Srb. p. 172.826; St. 3.38; Ssm. 1557; Ss. 27.3; Sl. 26*a*; Smv. 13.9; Jsv. 217.5; SG. 17*a*; BIS. 1004 (382), Pañc. ed. Koseg. 2.38. **1278** — [b]) K कदिगिरिः ।. — [c]) K व्यामोत्तं. — [d]) K °क्षतिरुपलमेव. **1279** ○ Sbh. 3061; Srb. p. 75.2; BIS. 1280 (484) Hit. ed. Schl. 1.73, ed. Johns. 80.

मुण्डाप्रियादायतिदुःखदायिनो वसन्तमुत्सार्य विजृम्भितश्रियः । (1281)
न कः खलात्तापितमित्रमण्डलादुपैति तापं तपवासरादिव ॥ २८ ॥

नरदत्तस्य ॥

तुल्योत्पत्ती प्रकृतिधवलावप्यमू शङ्खसोमौ (1282)
तत्र स्थाणुर्विधुमसदृशेनोत्तमाङ्गेन धत्ते ।
शङ्खस्तापक्रकचनिचयैर्भिद्यते शङ्खकारैः
को नामान्तःप्रकृतिकुटिलो दुर्गतिं नाभियाति ॥ २९ ॥

अकलितनि[ज]पररूपः स्वकमपि दोषं परस्थितं वेत्ति । (1283)
नावास्थितस्तटस्थानचलानपि विचलितान् मनुते ॥ ३० ॥

आश्रयाशः कृष्णवर्त्मा दहनश्चैष दु[र्ज]नः । (1284)
अग्निरेव तथाप्यस्मिन् स्याद्भस्मनि हुतं हुतम् ॥ ३१ ॥

वरमाक्षीणतैवास्तु शशिनो दु[र्ज]नस्य च । (1285)
न प्रवृद्धिस्तु विस्तारिलाञ्छनप्रतिपादिनी ॥ ३२ ॥

सर्वत्र मुखरचपलाः प्रभवन्ति न लोकसंमता गुणिनः । (1286)
तिष्ठन्ति वारिराशेरुपरि तरङ्गास्तले मणयः ॥ ३३ ॥

आरम्भ[र]मणीयानि विमर्दे विरसानि च । (1287)
प्रायो वै[रा]वसानानि संगतानि खलैः सह ॥ ३४ ॥

गुणकणिकामपि सुजनः शशिलेखामिव शिवः शिरसि कुरुते । 1288
चन्द्र इव पद्मलक्ष्मीं न क्षमते परगुणं पिशुनः ॥ ३५ ॥

बिभीमो वयमत्यन्तं ↑ चाक्रिकस्य गुणादपि । ↑ K. 90a 1289
निष्पन्नमपि यः पात्रं गुणेनैव निकृन्तति ॥ ३६ ॥

परसंतापनहेतुर्यत्राहनि न प्रयाति निष्पत्तिम् । (1290)
अन्तर्मना असाधुर्गणयति न तदायुषो मध्ये ॥ ३७ ॥

दिवसांस्तानभिनन्दति बहु मनुते तेषु [ज]न्मनो लाभम् । (1291)
ये यान्ति दुष्टबुद्धेः परोपतापाभियोगेन ॥ ३८ ॥

**1282** — [c]) K °निवयैर्. **1283** — [b]) K परिस्थित.

(1292) दयामृदुषु दुर्जनः पटुतरावलेपोद्धवः
परां व्र[ज]ति विक्रियां न हि भयं ततः पश्यति ।
यतस्तु भयशङ्कया सुकृशयापि संस्पृश्यते
विनीत इव नीचकैश्चरति तत्र शान्तोद्धवः ॥ ३९ ॥

शूरस्य ॥

(1293) अस[ज्ज]नाश्चेन्मधुरैर्वचोभिः शक्यन्त एव प्रतिकर्तुमार्यैः ।
तत्केतकीरेणुभिरम्बुराशेर्बन्धक्रियायामपि कः प्रयासः ॥ ४० ॥

(1294) नूनं दर्पात्तुहिनरुचिना दु[र्ज]नस्य प्रमार्ष्टुं
नीतं चेतो न च धवलितं [हे]लया नार्पितं च ।
येनेदानीं मलिनहृदयो लक्ष्यते शीतरश्मिर्
यस्माच्चायं हृदयरहितो दुर्विधः सर्वदैव ॥ ४१ ॥

(1295) निर्यन्त्रणं यत्र न वर्तितव्यं न मोदितव्यं प्रणयातिवादे ।
विशङ्कितान्योन्यभयं सुदूरान्नमस्क्रियामर्हति सौहृदं तत् ॥ ४२ ॥

अभिनन्दस्य ॥

(1296) S. 5.36.1 (गोभटस्य) एते स्निग्धतमा इति मा मा क्षुद्रेषु कुरुत विश्वासम् ।
सिद्धार्थानामेषां स्नेहोऽप्यश्रूणि पातयति ॥ ४३ ॥

(1297) वृथाज्वलितकोपाग्नेः परुषाक्षरवादिनः ।
दु[र्ज]नस्यौषधं नास्ति किंचिदन्यदनुत्तरात् ॥ ४४ ॥

(1298) चक्रसंभारिणि क्रूरे परच्छिद्रानुसारिणि ।
द्विजिह्वे दृष्टमात्रे चेत्कस्य न स्याच्चमत्कृतिः ॥ ४५ ॥

1299 चक्षुराश्रयते कामः कामुकस्य दरिद्रतः ।
क्रूरस्य चाप्रभवतः परद्रोहः सरस्वतीम् ॥ ४६ ॥

शतानन्दस्य ॥

---

**1292** ○ Jātakamālā 33.4. **1295** — [b]) K (?) °याभिवादे· — [c]) K अभिनन्दः· ○ RA. 3.51. **1296** — [a]) S एते स्नेहमया· — [b]) S क्षुद्रेषु यात· ○ Smk. 8.25 (सूचिगोभटस्य); Shv. A. 59*a*. 575 (? रविगुप्तस्य); Srb. p. 56.120. **1297** ○ Sbh. 379; SG. 21*b*; Sb. 16*a*. 44; Srb. p. 56.109.

खलं दृष्ट्वैव साधूनां हृदयं काष्ठवद्भवेत् । (1300)
ततस्तद्दारयन्त्यस्य वाचः क्रकचकर्कशाः ॥ ४७ ॥

हेतोर्विनोपकारी यदि नाम शतेषु कश्चिदेकः स्यात् । (1301)
तत्रापि क्लिष्टधियां दोषं व↑क्ष्यत्यतिखलत्वम् ॥ ४८ ॥ ↑ K. 90b

आक्रान्तेव महोपलेन मुनिना शप्तेव दुर्वाससा 1302
सातत्यं बत मुद्रितेव जतुना नीतेव मूर्च्छां विषैः ।
बद्धेवातनुरज्जुभिः परगुणान् वक्तुं न शक्ता सती
जिह्वा लोहशलाकया खलमुखे विद्धेव संलक्ष्यते ॥ ४९ ॥
श्रीधर्मदासस्य ॥

प्रकृतिरिह खलानां दोषचित्तं गुणज्ञे विनयललितभावे द्वेषरक्ता च बुद्धिः । 1303
उभयमिदमवश्यं जायते सर्ववारं पटुरपि नियतात्मा कीर्तिमेवाभिधत्ते ॥ ५० ॥

॥ इत्यसद्व्रज्या ॥ ३८ ॥

## ॥ ततो दीनव्रज्या ॥ ३९ ॥

प्रातर्बाष्पाम्बुबिन्दुव्यतिकरविगलत्क्लिन्नसृक्कः कथंचित् 1304 P. 169b
किंचित् संकुब्जजङ्घाजनितजडजवो जीर्णजानुर्जरार्तः ।
मुष्ट्यावष्टभ्य यष्टिं कटिपुटविचटत्कर्पटः प्लुष्टकन्थः
कुन्थन्नुत्थाय पान्थः पथि परुषमरुन्मूर्च्छ्यमानः प्रयाति ॥ १ ॥

पुण्याग्नौ पूर्णवाञ्छः प्रथममगणितप्लोषदोषः प्रदोषे 1305 S. 2.174.4 P. 170a
पान्थस्तस्वा प्रसुप्तस्तदनु तततृणे धामनि ग्रामदेव्याः ।
उत्कम्पी कर्पटार्धे जरति परिजडे छिद्रिणि च्छिन्ननिद्रो
वाते वाति प्रकामं हिमकणिनि कणन् कोणतः कोणमेति ॥ २ ॥
बाणस्यैतौ ॥

---

**1302** — [c]) K धर्मदाशः. ○ Vmm. 1.3; St. 3.2. **1304** — [a]) P °गलच्छिन्न-. — [b]) P संकोचि-. P °जडजरो. — [c]) P °कर्पटं. — [d]) P गन्तुन्नुत्थाय. P पथि पुरुष. **1305** — [a]) S3 पुण्यवांछः. P °मगलितप्रागदोषे. S2.3 °प्रोषदोषः. — [b]) S1.2 पान्थः सुप्त्वा. S प्रतत- (तदनु). SP तनुतृ( P °भृ° )णे. — [c]) K जरयति. S पदहतिच्छिद्रिते. P छिन्ननिद्रे. — [d]) P हिमकुलिनिरणतं कोणतः. — [e]) K बाण ॥. ○ Smk. 64.12 (बाणस्य); Śp. 3946 (बाणभट्टस्य); Sbh. 1857.

1306 P. 170a पोतानेतानपि गृहवति ग्रीष्ममासावसानं
यावन्निर्वाहयतु भवती येन वा केनचिद्वा ↑ । ↑ N. 31b
पश्चादम्भोधरजलपरीपातमासाद्य तुम्बी
कूष्माण्डी च प्रभवति तदा भूभुजः के वयं के ॥ ३ ॥
**धरणीधरस्य ॥**

1307 S. 5.48.3 क्षुत्क्षामाः शिशवः शवा इव तनुर्मन्दादरो बान्धवो
लिप्ता जर्जरकर्करी जतुलवैर्नो मां तथा बाधते ।
गेहिन्या स्फुटितांशुकं घटयितुं कृत्वा सकाकु स्मितं
कुप्यन्ती प्रतिवेशिनी प्रतिदिनं सूचीं यथा याचिता ॥ ४ ॥

1308 साक्रन्दाः शिशवः सपत्रपुटका वप्तुः पुरोवर्तिनः
प्रच्छन्ने च वधूर्विभागकुशला मध्ये स्थिता गेहिनी ।
कत्याच्छादनबन्धकेन कथमप्यासादितेना↑न्धसा ↑ K. 91a
सिन्दूरारुणमण्डले सवितरि प्राणाहुतिर्दीयते ॥ ५ ॥

1309 एते दरिद्रशिशवस्तनुजीर्णकन्थां स्कन्धे निधाय मलिनां पुलकाकुलाङ्गाः ।
सूर्यस्फुरत्करकरम्बितभित्तिदेशलाभाय शीतसमये कलिमाचरन्ति ॥ ६ ॥

(1310) S. 5.48.4 (वैनतेयस्य) P. 170a तस्मिन्नेव गृहोदरे रसवती तत्रैव सा कण्डनी
तत्रोपस्करणानि तत्र शिशवस्तत्रैव वासः स्वयम् ।
एतत्सोढवतोऽपि दुःस्थगृहिणः किं ब्रूमहे दुर्दशाम्
अद्य श्वो विजनिष्यमाणगृहिणी तत्रैव यत्कुन्थति ॥ ७ ॥

1311 S. 5.49.1 P. 170a अद्याशनं शिशुजनस्य बलेन जातं श्वो वा कथं नु भवितेति विचिन्तयन्ती ।
इत्यश्रुपातमलिनीकृतगण्डदेशा नेच्छेद्दरिद्रगृहिणी रजनीविरामम् ॥ ८ ॥

---

**1306** — [c]) P °परीवाह-. **1307** — [b]) S °जल° (°जतु°). — [c]) NK गेहिण्या; S गेहिन्याः. — [d]) S प्रतिमुहुः सूची. ○ Bpb. 215 (भास्कर); Bps. 100; SG. 41*a*. **1308** — [a]) N °रक्तः. — [c]) K °सादितेनान्ममा. — [d]) K प्राणानति-. **1309** — [a]) K °जीर्णकण्ठां. — [b]) N कन्धे. **1310** — [a]) K कंडली; P कन्दली. — [c]) S सर्वं; P नत्तत् (एतत्). S तां दशां. — [d]) P यत् गंतुभिः ॥. **1311** — [c]) S अत्यश्रुपात-कलुषीकृत-. — [cd]) S1. 2 नेच्छे; S3 °न्नैच्छद्; P नेच्छद्.

सक्तून् शोचति संप्लुतान् प्रतिकरोत्याक्रन्दतो बालकान् 1312 S. 5.49.5 (लङ्कदत्तस्य)
प्रत्युत्सिञ्चति कर्परेण सलिलं शय्यातृणं रक्षति ।
दत्वा मूर्धनि शीर्णशूर्पशकलं जीर्णे गृहे व्याकुला
किं तद्यन्न करोति दुःस्थगृहिणी देवे भृशं वर्षति ॥ ९ ॥
योगेश्वरस्य ॥

जरदम्बरसंवरणग्रन्थिविधौ ग्रन्थकार एकोऽहम् । 1313 S. 5.46.5 (भानोः) P. 170b
परिमितकदन्नवण्टनविद्यापारंगता गृहिणी ॥ १० ॥
वीरस्य ॥

मा रोदीश्चिरमेहि वत्स विफलं दृष्ट्वाद्य पुत्रानिमान् 1314 P. 170b
आयातो भवतोऽपि दास्यति पिता ग्रैवेयकं वाससी ।
श्रुत्वैवं गृहिणीवचांसि निकटे कुड्यस्य निःकिंचनो
निश्वस्याश्रुजलप्लुताननमुखः पान्थः पुनः प्रोषितः ॥ ११ ॥

कूष्माण्डीविटपः फलत्यविरतं सिक्तः सुवर्णाम्बुना (1315) P. 171a
भूयोभिर्गदितं हितैषिभिरितीवास्माभिरङ्गीकृतम् ।
तत्संयाच्य कुतश्चिदीश्वरगृहादानीयमानं शनैर्
अध्वन्येव हि बिन्दुभिर्विगलितं श्राणे शरावोदरे ॥ १२ ॥

मातर्धर्मरते कृपां कुरु मयि श्रान्ते च वैदेशिके (1316) S. 2.174.1 (शतानन्दस्य) P. 171a
द्वारालिन्दककोणकेषु निभृतः स्थित्वा क्षिपामि क्षपाम् ।
इत्येवं गृहिणीप्रचण्डवदनावाक्येन निर्भर्त्सितः ↑ K. 91b
स्कन्धे न्यस्तपलालमुष्टिविभवः पान्थः शनैर्गच्छति ॥ १३ ॥

लग्नः शृङ्गयुगे गृही सतनयो वृद्धौ गुरू पार्श्वयोः (1317) S. 5.46.1
पुच्छाग्रे गृहिणी खुरेषु शिशवो लग्ना वधूः कम्बले ।

---

**1312** — [c]) S मूर्ध्नि विशीर्ण-. ○ Sbh. 3201; SG. 42b. **1313** — [a]) KP जरदस्वर°. — [b]) S ग्रन्थविधौ. — [c]) K धरस्य. **1314** — [a]) P पुत्र (वत्स) — [c]) P निष्किञ्चनो. — [d]) P निःश्वासाश्रु-. P °प्लुतो. ○ Śp. 408; SG. 40a; Jsv. 203.1. **1315** — [b]) P हितैषिनिवती-. — [c]) P नीयमानः. — [d]) P अध्वन्येन. P ग्लाने शरावोदके. **1316** — [a]) SP धर्मपरे दयां. K शांते च. — [b]) K द्वारालिंदन-. SP निभृतं. $S_{1,2}$ P क्षपामि. — [d]) S हस्तन्यस्त-; P हस्तं न्यस्त-. ○ Smk. 96.3 (रविगुप्तस्य); Śp. 580 (रविदत्तस्य); Sbh. 2416 (रविदत्तस्य); Srb. p. 208.31. **1317** — [a]) K नग्नः. — [b]) K नत्रा वधूः.

एकः शीर्णजरद्गवो विधिवशात्सर्वस्वभूतो गृहे
सर्वेणैव कुटुम्बकेन रुदता सुप्तः समुत्थाप्यते ॥ १४ ॥

(1318) शीतवातसमुद्भिन्नपुलकाङ्कुरशालिनी ।
ममाम्बरविहीनस्य त्वगेव पटिकायते ॥ १५ ॥

(1319) P. 174b सद्यो विभिद्यते नूनं दरिद्रतनुपञ्जरम् ।
यदि न स्यान्मनोराज्यरज्जुभिर्दृढसंयतम् ॥ १६ ॥

(1320) S. 5.46.2 P. 174b प्रायो दरिद्रशिशवः परमन्दिराणां द्वारेषु दत्तकरपल्लवलीनदेहाः ।
लज्जानिगूढवचसो बत भोक्तुकामा भोक्तारमर्धनयनेन विलोकयन्ति ॥ १७ ॥

1321 S. 5.70.2 (राजशेखरस्य) P. 174b अध्वश्रमाय चरणौ विरहाय दारा अभ्यर्थनाय वचनं च वपुर्जरायै ।
एतानि मे विदधतस्तव सर्वदैव धातस्त्रपा यदि न किं न परिश्रमोऽपि ॥ १८ ॥

1322 वर्धनसुखासिकायामुदरपिशाचः किमिच्छकामिच्छन ।
पर्याकुलयति गृहिणीमकिंचनः कृपणसंवासः ॥ १९ ॥

शुभाङ्कस्य ॥

1323 S. 5.41.1 P. 175a (anon) वरं मृतो न तु क्षुद्रस्तथापि महदन्तरम् ।
एकस्य बन्धुर्नादत्ते नामान्यस्याखिलो जनः ॥ २० ॥

शब्दार्णवस्य ॥

(1324) S. 5.41.5 (श्रीव्यासपादानाम्) P. 175a (anon) कृपणस्यास्तु दारिद्र्यं कार्पण्यावृतिकारकम् ।
विभवस्तस्य तद्दोषघोषणापटुडिण्डिमः ॥ २१ ॥

व्यासस्य ॥

1325 S. 5.41.2 जीवतापि शवेनेव कृपणेन न दीयते ।
मांसं वर्धयतानेन काकस्योपकृतिः कृता ॥ २२ ॥

कविराजस्य ॥

---

**1319** — [a]) P सत्यं (सद्यो). **1320** — [a]) P परमं निराशं. — [b]) S1 °नीलदेहाः । — [c]) S1 नम्रानिगूढ. SP बहुभोक्तु. ○ SG. 41b. **1321** — [b]) P अत्यस्वनाय. — [d]) KSP न यदि. **1322** — [a]) K वर्द्दुल. — [b]) K °निच्छन् ।. — [e]) K श्रीमुभांगस्य. **1323** — [b]) S1. 2 तथा हि. — [c]) P काशिन्नादत्ते. — [d]) P °खिलं जगत् ॥. **1324** — [a]) K क्षयिणन्यास्तु. — [b]) K °ण्यावृत्ति-; P °ण्यवृत्ति. — [c]) K तच्छोष. — [d]) P घोषेनापहनौजसः ॥. **1325** — [b]) K त्र न (°न न). — [e]) K कविराज ॥.

श्रीफलं यन्न तद्दीर्घमिति तावद् व्यवस्थितम् । (1326) P. 175a (anon)
तत्रैकान्तधृतिर्यस्य मन्यते मुग्ध एव सः ॥ २३ ॥
रिसूकस्य ॥

दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य । N. 39b/. 4 1327 S. 5.41.3 (गोभटस्य) P. 175a (anon)
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ २४ ॥
K. गोभट्टस्य ॥

पथिक हे विजही[हि] वृथार्थितां न खलु वेत्सि नवस्त्वमिहागतः । (1328)
इदम↑हि[भ्र]मितं पचमन्दिरं बलिभुजोऽपि न यान्ति यदन्तिकम् ॥२५॥ ↑ K. 92a

रवेरस्तमये येन निद्रा नेत्रेषु निर्मिता । 1329
तेन किं न कृतो मृत्युर्मर्त्यानां विभवक्षये ॥ २६ ॥

येनैवाम्बरखण्डेन दिवा संचरते रविः । 1330 P. 175a
तेनैव निशि शीतांशुरहो दौर्गत्यमेतयोः ॥ २७ ॥

मलीमसेन देहेन प्रतिगेहमुपस्थिताः । 1331 P. 175a
आत्मनैवात्मकथका वयं वायसवृत्तयः ॥ २८ ॥

भूयादतो बहुव्रीहिशासनाशा मुधैव मे । 1332
पूर्वापरापरामर्शाद्विमूढस्येव मे मतिः ॥ २९ ॥

॥ इति दीनव्रज्या ॥ ३९ ॥

## ॥ ततोऽर्थान्तरन्यासव्रज्या ॥ ४० ॥

कालिन्द्या दलितेन्द्रनीलशकलश्यामाम्भसोऽन्तर्जले 1333 P. 203a
मग्नस्याञ्जनपुञ्जसंचयनिभस्याहेः कुतोऽन्वेषणा ↑ । ↑ N. 32a
ताराभाः फणचक्रवालमणयो न स्युर्यदि द्योतिनो
यैरेवोन्नतिमाप्नुवन्ति गुणिनस्तैरेव यान्त्यापदम् ॥ १ ॥

**1326** — [a]) P तनु तद्दीर्घ॰ — [c]) P धृतिर्यस्तु॰ — [d]) P मूर्ष (मुग्ध). **1327** — [a]) N गाढतरबद्ध; S1. 2 गाढतरनिबद्ध॰. — [b]) K om. च. — [c]) N om. ○ Śp. 382 (गोभट्टस्य); Smk. 9.13 (सूचिगोभटस्य); Shv. 70a 758 (शुचीगोभट्टस्य); Srb. 32.52 (पञ्चतन्त्रे); Ssm. 1505; Kuv. p. 66; SK. 2.141; KHA. 274; BIS. 2925 (1227); Ujjvaladatta on Uṇādi. 2.90; Rasg. p. 355; Ssv. 1183; Vyk. ad 2.102. **1330** ○ Bh. 313; Srb. p. 65.5; Ssv. 1296; BIS 5544 (2510). Generally. — [b]) संवीतो निशि चंद्रमाः — [c]) तेनैव च दिवा भानुर्. **1333** — [a]) P सांतर्जले. — [c]) K तावाभाः. P °वालफणयो. ○ Smk. 121.11.

1334 S. 5.71.2 P. 2036 भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव जगतः शान्तौ क्षये चाकुलम् ॥ २ ॥

(1335) यस्याः कृते नृपतयस्तृणवत्त्यजन्ति प्राणान्प्रियानपि प[रस्प]रबद्धवैराः ।
तेषामसृक् पिबति सैव मही हतानां श्रीः प्रायशो विकृतिमेति बहूपभुक्ता ॥ ३ ॥

1336 रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणरहितः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ ४ ॥
वागीश्वरस्य ॥

1337 पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्
काकुत्स्थेन कथं न हेमहरिणस्यासंभवो लक्षितः ।
अक्षाणां च युधिष्ठिरेण महता ज्ञातो न दोषः कथं
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ५ ॥

1338 अकार्ये तथ्यो वा भवति वितथः काममथवा ↑ K. 92b
तथाप्युच्चैर्धाम्नां हरति महिमानं जनरवः ।
तुलोत्तीर्णस्यापि प्रकटनिहताशेषतमसो
रवेस्तादृक्तेजो न हि भवति कन्यां गत इति ॥ ६ ॥

1339 कृतो यदह्नस्तनिमा हिमागमे लघीयसी यच्च निदाघशर्वरी ।
अनेन दृष्टान्तयुगेन गम्यते सदर्थसंकोचसमुद्यतो विधिः ॥ ७ ॥

---

**1334** — [a]) S2.3 °तनोर्म्ला°; P °तनो म्ला°. — [d]) S सुस्थास्. N देवमेव. S1 क्षान्तौ क्षये; P वृद्धौ क्षये. ○ Bh. 26; Sbh. 3143; Srb. p. 94.109; Shv. A6 4a. 668, B. 3a 64 (both भर्तृहरेः); Ssv. 284; Smv. 8.15; Jsv. 264.8. **1335** — [cd]) K सवनहीहतानान्श्राप्रायसो. **1336** ○ Śp. 503; Sbh. 2277 (अगटस्य); Srb. p. 52.251; Bpb. 169. (the queen); Srh. 82.28 (शृङ्गारप्रकाशे); Ssm. 1375; BIS. 5712; Bps. 118; Ssv. 393; SG. 40a; Jsv. 172.1. **1337** ○ Srh. 35.56 (सुवर्णविस्तारस्य); Srb. p. 179.1024; BIS. 4193 (1824), Pañc. ed. Koseg. & Bomb. 2.4; Jsv. 109.8. **1338** — [a]) K काममथयरा. **1339** — [c]) K गम्यति.

पीताम्बराय तनयां प्रददौ पयोधिस्तत्कालकूटगरलं च दिगम्बराय । 1340
तत्रानयोर्वदत कस्य गुणातिरेकः प्रायः परिच्छदकृतादर एव लोकः ॥ ८ ॥

किं जन्मना जगति कस्यचिदीक्षितेन शक्त्यैव याति निजया पुरुषः प्रतिष्ठाम् । 1341
शक्ता हि कूपमपि शोषयितुं न कुम्भाः कुम्भोद्भवेन पुनरम्बुधिरेव पीतः ॥ ९ ॥

पुंसः स्वरूपविनिरूपणमेव कार्यं तज्जन्मभूमिगुणदोषकथा वृथैव । N. *lm.* 32*a* 1342
कः कालकूटमभिनन्दति सागरोत्थं को वारविन्दमभिनिन्दति पङ्कजातम् ॥१०॥

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मूर्धनि 1343
च्छायामातपवैरिणीमनुसरन् बिल्वस्य मूलं गतः ।
तत्राप्याशु कदाचिदेव पतता बिल्वेन भग्नं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनम् ॥ ११ ॥

अलंकारः शङ्काकरनरकपालः परिकरः 1344
प्रशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति यत्रामरगुरोर्
विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ १२ ॥

न संबन्धोपाधिं दधत इह दाक्षिण्यनिधयः (1345)
प्रहृष्टप्रेमाणां स हि सहज एषामुदयते ।
क एते संबन्धान्मलयमरुतश्चूततरवो
यदेतानालभ्य प्रतिपरुरुदानं जनयति ॥ १३ ॥

लोकोत्तरं चरितमर्पयति प्रतिष्ठां पुंसः कुलं न हि निमित्तमुदात्ततायाः । 1346
वातापितापनमुनेः कलशात्प्रसूतिर्लीलायितं पुनरमुष्यसमुद्रपानम् ↑ ॥१४॥ ↑ K. 93*a*

---

**1340** — [c]) K अत्रानयोर्. **1341** — [d]) K पतिः (पीतः). ○ Shv. C. 100*b*. 24; Srb. p. 50.202 (var.); St. 1.47; SK. 6.303; Jsv. 291.3. **1342** — [d]) K अभिनंदति. **1343** — [a]) K खल्लीतो. ○ Bh. 39; Śp. 437 (भर्तृहरेः); Sbh. 3141 (दिविरदेवादित्यस्य); Srb. p. 94.114; Srh. 36.7 (पञ्चतन्त्रे); Shv. A 65*a*. 681 (भर्तृहरेः), B. 3*b*. 77 (भर्तृहरेः); SG. 34*a*; Smv. 8.5; BIS. 2048 (802). **1344** ○ Smk. 112.12; Kvv. p. 13; KHA. 478; Kpk. 369; As. ad 63; Amd. 588. 911; Jsv. 263.4; Srb. p. 93.94. Generally. — [ab]) °कपालं परिजनो विशीर्णांगो. **1345** — [d]) K यदेनालभ्ये प्रतिपरूरदनं जरयति. **1346** — [cd]) K प्रसूति ललापितं. ○ Bāl. 2.51; Sbh. 2281 (बालरामायणे), 3446; Jsv. 291.2. Srb. p. 78.7; As. ad. 35.

1347 स्थलीनां दग्धानामुपरि मृगतृष्णानुसरणात्
तृषार्तः शारङ्गो विरमति न खिन्नेऽपि वपुषि ।
अजानानस्तत्त्वं न स मृगयतेऽन्यां च सरसीम्
अभूमौ प्रत्याशा न हि फलति विघ्नं च कुरुते ॥ १५ ॥

(1348) किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनकरस्यास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन् कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढिः प्रतिपन्नवस्तुषु सतामेकं बताहो व्रतम् ॥ १६ ॥

1349 स्वच्छाशयो भवति कोऽपि जनः प्रकृत्या संगः सतामभिजनश्च न हेतुरत्र ।
दुग्धाब्धिलब्धजननो हरकन्धरास्थः स्वां कालतां त्यजति जातु न कालकूटः ॥ १७ ॥

1350 वासश्चर्म विभूषणं शवशिरो भिक्षाटनेनाशनं
गौरेकः स च लाङ्गलेऽप्यकुशलस्तन्मात्रसारं धनम् ।
शर्वस्येत्यवगम्य याति विमुखी रत्नालयं जाह्नवी ↑ N. 32b
कष्टं दुर्गतिकस्य जीवितमहो दारैरपि त्यज्यते ॥ १८ ॥

1351 कैवर्तकर्कशकरग्रहणच्युतोऽपि जाले पुनर्निपतितः शफरो वराकः । N. lm. 32b
दैवात्ततोऽपि गलितो गिलितो बकेन वामे विधौ वद कथं व्यसनस्य शान्तिः॥१९॥

1352 खनति न खुरैः क्षोणीपृष्ठं न नर्दति सादरं
प्रकृतिपुरुषं दृष्ट्वाग्रे न कुप्यति गामपि ।
वहति तु धुरं धुर्यो धैर्यादनुद्धतकन्धरो
जगति कृतिनः कार्यौदार्यात्परानतिशेरते ॥ २० ॥

(1353) शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिभृतं
महीध्रादुत्तुङ्गादवनितलमस्माच्च जलधिम् ।

---

**1347** ○ Śp. 942; Sbh. 650; Srb. p. 233.110. **1348** ○ Bh. 232; Mud. 2.18; Srb. p. 53.269. **1350** ○ SK. 6.524; Srb. p. 68.76. **1351** ○ Bh. 466; Srb. p. 92.75; SG. 34*a*; Shv. A. 64*a*. 669, B 3*a*. 65; Any. p. 47.72. **1352** ○ Śp. 970; Any. p. 45.58. **1353** ○ Bh. 334. — [d]) विवेकभ्रष्टानां; Alaṃkāraratnākara 496; Alaṃkāravimarśinī 27.191; Jsv. 208.3; Srb. p. 41.59; BIS. 6456 (2982).

अधोऽधो गङ्गावद्वयमुपगता दूरमथ वा
पदभ्रं[शे]तानां भवति विनिपातः शतमुखः ॥ २१ ॥

कापि कस्य च कुतोऽपि कारणाच्चित्तवृत्तिरिह किं गुणागुणैः । 1354 P. 67b
उन्नतं यदवधीर्य भूधरं नीचमब्धिमभियाति जाह्नवी ॥ २२ ॥

सरसि बहुशस्ताराच्छायां दशन् परिवञ्चितः (1355)
कुमुद↑विटपान्वेषी हंसो निशासु विचक्षणः । ↑ K. 93b
न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं
कुहकचकितो लोकः सत्येऽप्यपायमवेक्षते ॥ २३ ॥

अस्थानाभिनिवेशी प्रायो जड एव भवति नो विद्वान् । 1356
बालादन्यः कोऽम्भसि जिघृक्षतीन्दोः स्फुरद्बिम्बम् ॥ २४ ॥

निर्गुणमप्यनुरक्तं प्रायो न समाश्रितं जहति सन्तः । 1357
सहवृद्धिक्षयभाजं वहति शशाङ्कः कलङ्कमपि ॥ २५ ॥

अविकारिणमपि सज्जनमनिशमनार्यः प्रबाधतेऽत्यर्थम् । 1358
कमलिन्या किमपकृतं हिमस्य यस्तां सदा दहति ॥ २६ ॥

भग्नं यद्धनुरीश्वरस्य शिशुना यज्जामदग्न्यो हतस् 1359 S. 5.71.5 (श्रीहनूमतः)
त्यक्ता येन गुरोर्गिरा वसुमती बद्धो यदम्भोनिधिः ।
एकैकं दशकन्धरक्षयकृतो रामस्य किं वर्ण्यते
दैवं वर्णय येन सोऽपि सहसा नीतः कथाशेषताम् ॥ २७ ॥

शशिनमुदितं लेखामात्रं नमन्ति न चेतरं 1360
गगनसरितं धत्ते मूर्ध्ना हरो न नगात्मजाम् ।
त्रिभुवनपतिर्लक्ष्मीं त्यक्त्वा हरिः प्रियगोपिकः
परिचितगुणद्वेषी लोको नवं नवमिच्छति ॥ २८ ॥

---

**1354** — [a]) KP कस्यचित्. — [d]) P °मुपयाति. **1355** — [a]) K सवसि. K तावच्छाया. — [b]) K विभक्षणः ।. ○ Sbh. 709; Śp. 801. **1356** ○ Sbh. 394 (रविगुप्तस्य); Srb. p. 58.170. **1357** ○ Sbh. 242 (रविगुप्तस्य); BIS. 3752; Ssv. 460; Srb. p. 48.141. **1358** ○ Sbh. 409 (रविगुप्तस्य); Srb. p. 58.183. **1359** — [a]) S यद्भग्नं. KS जितस्. — [b]) S यच्च(येन). — [c]) S वर्ण्यतां. — [d]) S सोऽपि येन. K °शेषताः. ○ Han. 14.93; Smv. 8.22; Ssv. 292. **1360** — [b]) K धन्ते. K नगात्मजाः ।

1361 उपशमफलाद्विद्याबीजात्फलं धनमिच्छतां
भवति विफलः प्रारम्भो यत्तदत्र किमद्भुतम् ।
नियतविषयाः सर्वे भावा न यान्ति हि विक्रियां
जनयितुमलं शालेर्बीजं न जातु जवाङ्कुरम् ॥ २९ ॥

1362 S. 4.63.1 (भर्तृहरेः) तृषार्तैः शारङ्गैः प्रति जलधरं भूरि विरुतं
घनैर्मुक्ता धाराः सपदि पयसस्तान्प्रति मुहुः ।
खगानां के मेघाः क इह विहगा वा जलमुचाम्
अयाच्यो नार्तानामनुपकरणीयो न महताम् ॥ ३० ॥
अमरसिंहस्य ॥

(1363) पयस्तेजो वायुर्गगनमवनिर्विश्वमपि वा
स्वयं विष्णुस्तस्य त्रिदशजयिनः किं न सुकरम् ।
छलान्नीतोऽधस्ताद्बलिरणुकरूपेण तदपि
स्वभावाच्चक्री यः प्रगुणमपि चक्रेण सृजति ॥ ३१ ॥
मुष्टिकरगुहस्य ॥

(1364) किं नोज्ज्वलः किमु कलाः सकला न धत्ते ↑ ↑ K. 94a
दत्ते न किं नयनयोर्मुदमुन्मयूखः ।
राहोस्तु चक्रपति[तो]ऽस्तमितोऽयमिन्दुः
सत्यं सतामहृदयेषु गुणास्तृणानि ॥ ३२ ॥
अतुलस्य ॥

(1365) लूनास्तिलास्तदनु शोषमुपागतास्ते शोषाद्धि शुद्धिमथ तापमुपेतवन्तः ।
तापात्कठोरतरयन्त्रनिपीडनानि स्नेहो निमित्तमिति दुःखपरंपरायाः ॥ ३३ ॥

(1366) दुग्ध मुग्धमसि यस्त्वया धृतः स्नेह एष विपदेककारणम् ।
यत्कृते त्वमपवासितं पुनश्छिन्नमुन्मथितमग्निसात्कृतम् ॥ ३४ ॥

(1367) मूर्धेन्दुः परमेश्वरेण विधृतो वक्रो जडात्मा क्षयी
कर्णान्ते च परा[प]कारचतुरो न्यस्तो द्विजिह्वाधिपः ।

---

**1361** ○ Pad. p. 91.59 (बिह्लणशतकात्); BIS. 1294 (493); Śān. 3.22. **1362** — [d]) S3 °नुपहरणीयो. ○ Śp. 1205; Shv. C. 1a. 6; Bh. 516 (from S); Srb. p. 52.44; SK. 6.521; Any. p. 152.88. **1363** — [c]) K °द्बलिनणुक°.

नन्दी द्वारि बहिःकृतो गुणनिधिः कष्टं किमत्रोच्यतां
पात्रापात्रविचारणास्वनिपुणः प्रायो भवेदीश्वरः ॥ ३५ ॥

काकुत्स्थस्य दशाननो न कृतवान् दारापहारं यदि (1368)
क्वाम्भोधिः क्व च सेतुबन्धघटना क्वौत्तीर्यं लङ्काजयः ।
पार्थस्यापि पराभवं यदि रिपुर्नादात्क्व तादृक्तपो
नीयन्ते रिपुभिः समुन्नतिपदं प्रायः परं मानिनः ॥ ३६ ॥

शम्बूकाः किल निर्गता जलनिधेस्तीरेषु दावाग्निना (1369)
दह्यन्ते मणयो वणिक्करतलैरायान्ति राज्ञां शिरः ।
स्थानप्रच्युतिरल्पकस्य विपदे सन्तस्तु देशान्तरं
यान्तो यान्ति [सदा स]मर्पितगुणाः श्लाघ्याः परामुन्नतिम् ॥३७॥

य एको लोकानां परमसुहृदानन्दजनकः 1370 S. 5.71.4
कलाशाली श्रीमान्त्रिभुवनविधौ मङ्गलघटः ।
सुधासूतिः सोऽयं त्रिपुरहरचूडामणिरहो
प्रयात्यस्तं हन्त प्रकृतिविषमा दैवगतयः ॥ ३८ ॥

अपेताः शत्रुभ्यो वयमिति विषादोऽयमफलः (1371)
प्रतीकारस्त्वेषामनिशमनुसंधातुमुचितः ।
जरासंधाद्भग्नः सह हलभृता [दा]नवरिपुर्
जघानैनं पश्चान्न किमनिलसूनुः प्रियसखः ॥ ३९ ॥

चन्द्रः क्षयी प्रकृतिवक्रतनुर्जडात्मा दोषाकरः स्फुरति मि↑त्रविपत्तिकाले । 1372
मूर्ध्ना तथापि विधृतः परमेश्वरेण नैवाश्रितेषु महतां गुणदोषचिन्ता ॥४०॥↑ K. 94b

शुक्लीकरोति मलिनानि दिगन्तराणि चन्द्रो न शुक्लयति चात्मगतं कलङ्कम् । 1373
नित्यं यथार्थघटनाहितमानसानां स्वार्थोद्यमो भवति नो महतां कदाचित् ॥ ४१ ॥

गृह्णाति युक्तमितरच्च जहाति धीमानेष स्वभावजनितो महतां विवेकः । 1374
अन्योन्यमिश्रितमपि व्यतिरिच्य शुद्धं दुग्धं पिबत्युदकमुज्झति राजहंसः ॥ ४२ ॥

---

**1368** ○ Sbh. 2286; Srb. p. 78.13. **1370** — [b]) S3 मंगलधरः।.
**1372** ○ Srb. p. 50.194; BIS. 2244 (898), Vikramacaritra 93; St. 1.39.

1375 प्रायो भवत्यनुचितस्थितिदेशभाजः श्रेयः स्वजीवपरिपालनमात्रमेव ।
अन्तःप्रतप्तमरुसैकतदह्यमानमूलस्य चम्पकतरोः क्व विकाशचिन्ता ॥ ४३ ॥

विद्यायाः ॥

1376 ग्रहपरिकवलिततनुरपि रविरिह बोधयति पद्मषण्डानि ।
भवति ↑ विपद्यपि महतामङ्गीकृतवस्तुनिर्वाहः ॥ ४४ ॥ ↑ N. 33a

(1377) प्रणत्या बहुलाभोऽपि न सुखाय मनीषिणः ।
चातक[ः स्वल्प]मप्यम्बु गृह्णात्यनतकन्धरः ॥ ४५ ॥

(1378) कस्योपयोगमात्रेण धनेन रमते मनः ।
पदप्रमाणमाधारमारूढः को न कम्पते ॥ ४६ ॥

(1379) S. 4.61.3 उपैति क्षाराब्धिं सहति बहुवातव्यतिकरं
पुरो नानाभङ्गाननुभवति पश्यैष जलदः ।
कथंचिल्लब्धानि प्रवितरति तोयानि जगते
गुणं वा दोषं वा गणयति न दानव्यसनिता ॥ ४७ ॥

वल्लणस्यैते ॥

(1380) P. 49b (anon) सुधाधाम्नः कान्तिं ग्लपयति विलुम्पत्युडुगणं
किरत्युष्णं तेजः कुमुदवनलक्ष्मीः शमयति ।
रविर्जानात्येव प्रतिदिवसमस्ताद्रिपतनं
तथापि प्रत्यग्राभ्युदयतरलः किं न कुरुते ॥ ४८ ॥

**कविराजस्य ॥**

॥ इत्यर्थान्तरन्यासव्रज्या ॥ ४० ॥

## ॥ नतश्चाटुव्रज्या ॥ ४१ ॥

1381 S. 3.36.1 (वसुकल्पस्य) देव त्वद्विजयप्रयाणसमये काम्बोजवाहावली-
विङ्खोल्लेखविसर्पिणि क्षितिरजःपूरे वियच्चुम्बति ।
भानोर्वाजिभिरङ्गरूषणरसास्वादः समासादितो
लब्धः किंच नभस्तलामरधुनीपङ्केरुहैरन्वयः ↑ ॥ १ ॥ ↑ K. 95a

---

**1378** — [a]) K कन्यापयोग-. **1379** — [a]) $S_{2,3}$ वहति. K वडवान-. — [d]) S न गणयति. **1380** — [a]) P °धाम्ना. **1381** — [a]) S यात्रानेहसि यस्य दिग्विजयिनः कांबोज-. — [b]) S रिंखोल्लेख°. — [c]) S. °रंगकर्षणरसानंदः.

त्वद्यत्राणां प्रयाणेष्वनवरतवलत्कर्णतालप्रकीर्णैर् 1382
आकीर्णे व्योम्नि सर्पत्समदगजघटाकुम्भसिन्दूरपूरैः ।
बिभ्राणाः पारिभद्रद्रुमकुसुमरुचो रश्मयः पत्युरह्नां
मध्याह्नेऽप्यस्तसंध्याभ्रमचकितदृशश्चक्रिरे चक्रवाकान् ॥ २ ॥

स्फीतो धाम्ना समरविजयी श्रीकटाक्षप्रदीर्घः 1383
स्निग्धश्यामः कुवलयरुचिर्युद्धमल्ल त्वदीयः ।
वर्षेऽमुष्मिन् प्रतिनृपयशःपूरगौरे परीक्षा-
क्षीरन्यस्तं तुलयति महानीलरत्नं कृपाणः ॥ ३ ॥

दिग्दन्तिनः स्वकरपुष्करलेखनीभिर्गण्डस्थलान्मदमसीं मुहुराददानाः । 1384
श्रीचन्द्रदेव तव तोयधितीरताडीपत्रोदरेषु विजयस्तुतिमालिखन्ति ॥ ४ ॥
अभिनन्दस्य ॥

सत्सु रक्तो द्विषां कालः पीतः स्त्रीणां विलोचनैः । 1385
शुभ्रकीर्त्यासि तत्सत्यं चतुर्वर्णाश्रयो भवान् ॥ ५ ॥
अचलस्य ॥

न जनयसि कंसहर्षं वहसि शरीरं यशोदया जुष्टम् । 1386
त्यजसि न सत्योन्मुखतामिति सत्यं वासुदेवोऽसि ॥ ६ ॥
भद्रस्य ॥

न लोपो वर्णानां न खलु परतः प्रत्ययविधिर् 1387
विकारो नास्त्येव क्वचिदपि न भग्नाः प्रकृतयः । S. 3.2.3 (शब्दार्णवस्य)
गुणो वा वृद्धिर्वा सततमुपकाराय जगतां
मुनेर्दाक्षीपुत्रादपि तव समर्थः पदविधिः ॥ ७ ॥
पाणिनेः ॥

सत्यं त्वद्गुणकीर्तनेन सुखयत्याखण्डलं नारदः 1388
किंतु श्रोत्रकटु क्वणन्ति मधुपास्तत्पारिजातस्रजाम् ।
वार्यन्ते यदि चाप्सरःपरिषदा ते चामराडम्बरैर्
उद्वेलद्भुजवल्लिकङ्कणझणत्कारस्तदा दुःसहः ॥ ८ ॥
मधुकूटस्य ॥

---

**1384** — [b]) K कुंभ- (गंड-). **1387** — [d]) K यदवधिः ॥. **1388** — [c]) K पार्श्वन्ते. ○ Smk. 97.15.

1389 S. 3.2.2 यस्य द्वीपं धरित्री स च जलधिरभूद्यस्य गण्डूषतोयं
तस्याश्चर्यैकमूर्तेरपि नभसि वपुर्यत्र दुर्लक्ष्यमासीत् । ↑K. 95b
तत्पीतं त्वद्यशोभिस्त्रिभुवनमभजंस्तानि विश्रामहेतोस्
तत्रान्तः कैटभारेः स च तव हृदये वन्दनीयस्त्वमेकः ॥ ९ ॥
तथागतदासस्य ॥

1390 S. 3.17.2 कर्पासास्थिप्रचयनिचिता निर्धनश्रोत्रियाणां
येषां वात्याप्रविततकुटीप्राङ्गणान्ता बभूवुः ।
तत्सौधानां परिसरभुवि त्वत्प्रसादादिदानीं
क्रीडायुद्धच्छिदुरयुवतीहारमुक्ताः पतन्ति ॥ १० ॥
शुभाङ्गस्य ॥

1391 S. 3.10.1 लक्ष्मीवशीकरणचूर्णसहोदराणि त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।
यानि प्रणाममिलितानि नृणां ललाटे लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥११॥
अभिनन्दस्य ॥

1392 S. 3.14.2 (कस्यचित्) त्वं चेन्नाथ कलानिधिः शशधरस्तत्तोयनाथा वयं
मर्यादानिधिरम्भसां पतिरथ त्वं चेद्वयं वारिदाः ।
सर्वाशापरिपूरको जलधरस्त्वं चेद्वयं भूरुहः
सन्मार्ग↑स्थितिसुन्दरस्त्वमिह चेच्छाखी वयं चाध्वगाः ॥ १२ ॥↑N. 33b

1393 S. 3.41.5 (दक्षस्य) पदहीनान् बिलवसतीन् भुजगानिव जातभोगसंकोचान् ।
व्यथयति मन्त्राक्षरमिव नाम तवारीन्वनेचरैर्गीतम् ॥ १३ ॥
दक्षस्यैतौ ॥

1394 S. 3.17.1 (भासोकस्य) येषां वेश्मसु कम्बुकर्परचलत्कुड्यध्वनिर्दुःश्रवः
प्रागासीन्नरनाथ संप्रति पुनस्तेषां तवानुग्रहात् ।
षड्जादिक्रमरङ्गदङ्गुलिचलत्पाणिस्खलत्कङ्कण-
श्रेणीनिस्वनमांसलः कलगिरां वीणारवः श्रूयते ॥ १४ ॥

---

**1389** — [a]) K यम्यद्वीपं. — [b]) S3 दुर्लक्ष्य°. — [c]) KS1 स्वद्यशो°. — [d]) S3 हृदये देव वंद्यस्. S त्वमेव ॥. — [e]) K om. **1390** — [a]) S कार्पासास्थि-. — [c]) K त्वत्प्रमादाद् ; S1 त्वत्प्रसादान्. — [e]) S2.3 शुभाङ्कस्य. **1391** N indicates 1429 as before this. ○ Shv. A. 23*a*. 3 ; Skb. 5.467 ; ŚB. 2.402 ; SK. 1.44. **1392** — [d]) S °स्थितिविश्रुतस्त्वमिति. **1393** — [d]) K नाम तवाभिवानीत्वांनचरैर्गीतम्. **1394** — [a]) S3 वेश्मनि.

नाथ त्वामनुयाचे प्रसीद विजहीहि सङ्गरारम्भम् । 1395
उन्नतिभाजः संप्रति सन्ति विपक्षाः परं गिरयः ॥ १५ ॥

देव स्वस्तुतिरस्तु नाम हृदि नः सर्वे वसन्त्यागमास् 1396 S. 3.29.1
तीर्थं न क्वचिदीदृगत्रभवती त्वत्खड्गधारा यथा ।
यामेकः स्वशरीरशुद्धिरसिको मूर्ध्नि प्रतीच्छन्त्रिपुर्
द्वैविध्यादनु पञ्चतां तदनु च त्रैदश्यमाप क्षणात् ॥ १६ ॥
रथाङ्गस्य ॥

मत्पर्यन्तवसुंधराविजयिने मुक्तादि रत्नं मया 1397 S. 3.19.2 (कस्यापि)
सर्वं ↑ ढौकितमेव तुभ्यमधुना जातोऽस्मि निष्किञ्चनः । ↑K. 96a
इत्युल्लासितवीचिबाहुरुदयन्मार्तण्डबिम्बच्छलात्
प्रातस्तप्तकुठारमेष वहते देव त्वदग्रेऽम्बुधिः ॥ १७ ॥
K. वसुकल्पस्य ॥

संदिष्टं मरुभूमिभूरुहचयैर्भूपाल भूयाद्भवान् 1398 S. 3.44.2
निर्जेता नवखण्डमण्डलभुवो ये त्वत्प्रसादाद्वयम् ।
प्रत्यासन्नविपन्नवारडवधूनेत्रप्रणालीगलद्-
बाष्पाम्भःप्लवपङ्कपिच्छलतलाः श्रीमुञ्ज मोदामहे ॥ १८ ॥

तन्वीमुज्झितभूषणां कलगिरं सीत्कारमातन्वतीं 1399
वेपन्तीं व्रणिताधरां विवसनां रोमोद्गमं बिभ्रतीम् ।
हेमन्ते हिमशीतमारुतभयादाश्लिष्य दोर्भ्यां तनुं
स्वां मूर्तिं दयितामिवातिरसिकां त्वद्विद्विषः शेरते ॥ १९ ॥

भूसंपर्करजोनिपातमलिनाः स्वस्माद्गृहात्प्रच्युताः 1400
सामान्यैरपि जन्तुभिः करतलैर्निःशङ्कमालिङ्गिताः ।

---

**1395** — [a]) K त्वामनुनाथे. **1396** — [a]) S सर्वे त्र सन्त्या( S3 न्त्वा )गमा( S2 म)स्. — [b]) S भवति. — [c]) S मूर्ध्ना. S2 प्रतिच्छन्. S अरिर् (रिपुर्). ○ Smk. 97.68 (धर्माशोकस्य). **1397** — [b]) S1.2 तुभ्यं; S3 °त्तभ्यं. — [b]) S3 ढौकितुमेव. S सोऽहमधुना. K जातोऽस्ति. — [c]) S3 इत्युल्लालितबाहुवीचि°. — [d]) S3 प्राप्तस्तप्त-. S1.2 स्वदग्रे. — [e]) N om. **1398** — [a]) S °चयैर्भूयाद्भवान्भूपतिर्. — [b]) S यत्त्वत्. — [c]) S °विपन्नहूणतरुणी-. — [d]) S प्लवपूरपिच्छिल-. **1399** — [b]) K प्रणिताधरां. ○ Śp. 1272; Sbh. 2548; Srb. p. 132.30. **1400** — [d]) K भ्रान्त्यस्. ○ Śp. 1274; Srb. p. 132.31.

निर्लग्नाः क्वचिदेकतामुपगता बद्धाः क्वचिन्मोचिता
अक्षाणामिव शारयः प्रतिगृहं भ्रान्तास्तवारिस्त्रियः ॥ २० ॥

1401 S. 3.45.3 ( छित्तपस्य ) वर्षासंभृतपीतिसारमवशं स्तब्धाङ्घ्रिहस्तद्वयं
भेकं मूर्ध्नि निगृह्य कज्जलरजःश्यामं भुजङ्गं स्थितम् ।
मुग्धा व्याधवधूस्तवारिनगरे शून्ये चिरात्संप्रति
स्वर्णोपस्कृतिमुष्टिसायकधिया साकूतमादित्सति ॥ २१ ॥

(1402) पर्यङ्कः शिथिलीकृतो न भवता सिंहासना[न्नो]त्थितं
न क्रोधानलधूमराजिरिव च भ्रूवल्लिरुल्लासिता ।
राज्ञां त्वच्चरणारविन्दमथ च श्रीचन्द्र पुष्यन्त्यमूः
चञ्चच्चारुमरीचिसंचयमुचां चूडामणीनां रुचः ॥ २२ ॥
सुविनीतस्य ॥

1403 S. 3.46.1 ( योगेश्वरस्य ) द्वारं खड्गिभिरावृतं बहिरपि प्रक्लिन्नगण्डैर्गजैर्
अन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरन्तनप्रणयिनीशून्येऽपि राज्यस्थितिः ॥ २३ ॥
विजयपालस्य ॥

1404 अत्युक्तौ यदि न प्रकुप्यसि मृषावादं न चेन्मन्यसे ↑ K. 96b
तद्ब्रूमोऽद्भुतकीर्तनेषु रसना केषां न कण्डूयते ।
देव त्वद्विजयप्रतापदहनज्वालावलीशोषिताः
सर्वे वारिधयस्ततो रिपुवधूबाष्पाम्बुभिः पूरिताः ॥ २४ ॥

1405 ताडीताडङ्कमात्राभरणपरिणतीन्युल्लसत्सिन्दुवार-
स्रग्दामानि द्विषां वो घनजघनजरद्भूरिभूर्जांशुकानि ।
विन्ध्यस्कन्धेषु धातुद्रवरचितकुचप्रान्तपत्राङ्कुराणि
क्रीडन्ति क्रोडलग्नैः कपिशिशुभिरविश्रान्तमन्तःपुराणि ॥ २५ ॥

**1401** — a) K°मानमवशं ; S °मानमनवं. — c) S2.3 चिरात्सांप्रतं. — d) K स्वहीयष्कृति ; S स्वर्णोपस्कृत-. S1.2 °शायक-. S साकूतमाकर्षति ॥. **1402** — a) K सिंहाममान्थितं. — c) K पुम्वन्त्स्वभू-. **1403** — a) S प्रस्विन्न-. — d) K मैव भिरंतन-. — e) K विजयकवेः ॥. ○ Smk. 97.78; Sbh. 2569; Pad. p. 25.54. — d) राजन्कर्ण; Pmt. 105; Ssm. 182; Kuv. p. 161; Smv. 8.2; SG. 51b; Jsv. 106.15; ŚB. 2.168. **1404** ○ Han. 14.83; Śp. 1246; Ak. p. 346; SG. 46a; BIS. 177(69); Srh. p. 133.13. **1405** N indicates 1431, 1432 after this.

त्वन्नासीरविसारिवारणभरभ्रश्यन्महीयन्त्रणाद् 1406
अन्तःखिन्नभुजङ्गभोगविगलल्लालाभिरासीन्नदी । ↑ N. 34a
किं चास्यां जलकेलिलालसवलन्नागाङ्गनानां फण-
श्रेणीभिर्मणिकेशराभिरभवत्संभूतिरम्भोरुहाम् ॥ २६ ॥
**गङ्गाधरस्य** ॥

संग्रामाङ्गणसंगतेन भवता चापे समारोपिते 1407 S. 3.38.2 (कर्कराजस्य)
देवाकर्णय येन येन महसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरै रिपुशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरनघा कीर्त्या च लोकत्रयम् ॥ २७ ॥
N. **संग्रामाङ्गणस्य** ॥

शरैर्व्यर्थं नाथ त्रिभुवनजयारम्भचतुरैस् 1408
तव ज्यानिर्घोषं नृपतिरिह को नाम सहते ।
यमुच्चैराकर्ण्य त्रिदशपतिरप्याहवभिया
ह्रिया पार्श्वं पश्यन् निभृतनिभृतं मुञ्चति धनुः ॥ २८ ॥
**नाहिल्लस्य** ॥

ऋक्षस्य क्रोडसंधिप्रहितमुखतया मण्डलीभूतमूर्तेर् 1409
आरात्सुप्तस्य वीर त्वदरिवरपुरद्वारि नीहारकाले ।
प्रातर्निद्राविनोदक्रमजनितमुखोन्मीलितं चक्षुरेकं
व्याधाः पालालभस्मस्थितदहनकणाकारमालोकयन्ति ॥ २९ ॥

ते कौपीनधनास्त एव हि परं धात्रीफलं भुञ्जते 1410 S. 3.7.4
तेषां द्वारि नदन्ति वाजिनिवहास्तैरेव लब्धा क्षितिः ।
तैरेतत्समलङ्कृतं निजकुलं किं वा बहु ब्रूमहे
ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा ॥ ३० ॥
**जयादित्यस्य** ॥

---

**1406** — [c]) K गंगाधरः ॥. **1407** — [b]) S सहसा. — [c]) S अरि- (रिपु-). — [e]) K वल्लन ॥. ○ Sbh. 2513; Śp. 1225; Pmt. 101; Skb. 1.115, 4.206; ŚB. 2.221; Kpd. p. 217, 245; Kpk. 230, 459; As. ad 55; SK. 4.17; Rasg. p. 329; Aś. p. 36; Amd. 883. **1408** — [a]) K °र्व्यर्थनुन्नाथ. — [b]) K महते ।. **1409** — [a]) K क्रोधसंधि-. K °भूतभूर्तेर्. **1410** — [b]) K रद्धा (लब्धा). — [d]) S तुष्टेन रुष्टेन. ○ Śp. 1224. Srb. p. 108.194.

1411 दत्तेन्द्राभयविभ्रमाद्भुतभुजासंभारगम्भीरया ↑ K. 97a
त्वद्वृत्त्या शिथिलीकृतस्त्रिभुवनत्राणाय नारायणः ।
अन्तस्तोषतुषारसौरभमयश्वासानिलापूरण-
प्राणोत्तुङ्गभुजङ्गतल्पमधुना भद्रेण निद्रायते ॥ ३१ ॥

1412 S. 3.46.4 वत्से माधवि तात चम्पक शिशो माकन्द कौन्ति प्रिये
हा मातर्मदयन्ति हा कुरवक भ्रातः स्वसर्मालति ।
इत्येवं रिपुमन्दिरेषु भवतः शृण्वन्ति नक्तंचरा
गोलाङ्गूलविमर्दसंभ्रमवशादुद्यानदेवीगिरः ॥ ३२ ॥

शुभाङ्कस्य ॥

1413 वज्रिन् वज्रमिदं जहीहि भगवन्नीश त्रिशूलेन किं
विष्णो त्वं च विमुञ्च चक्रममराः सर्वे त्यजन्त्वायुधम् ।
अद्यायं परचक्रभीमनृपतेर्वोढुं त्रिलोकीधुरं
प्रौढारातिघटाविघट्टनपटुर्दोर्दण्ड एवोद्यतः ॥ ३३ ॥

1414 बाणास्ते परचक्रविक्रमकलावैलक्ष्यदीक्षागुरोर्
वीक्षन्ते मिहिरांशुमांसलरुचः क्षिप्ताः प्रतिद्वेषिणः ।
हस्ताहल्लितहारवल्लितरला युद्धाङ्गणालोकन-
क्रीडालोलदिगङ्गनासमुदयोन्मुक्ताः कटाक्षा इव ॥ ३४ ॥

मञ्जुश्रीमित्रस्य ॥

1415 मन्दोद्वृत्तैः शिरोभिर्मणिभरगुरुभिः प्रौढरोमाञ्चदण्ड-
स्फायन्निर्मोकसंधिप्रसरदविगलत्संमदस्वेदपूराः ।
जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं
वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ ३५ ॥

मुरारेः ॥

**1411** — [a]) K दत्तेन्द्राभव-. ○ Anr. 1.27. **1412** — [a]) K वस्से. S कौन्दि प्रिये. — [b]) K कुलुवक; S1,2 कुरुवक; S3 कुरवक. — [e]) N doubtful. K सुभाङ्कस्य; S शुभाङ्कस्य. **1413** — [a]) K वज्रिमिदं. **1414** — [a]) K °वैलक्ष°. — [b]) K मांसररुचः. — [c]) on °हल्लित, N note *lm.* हस्तेनाकलित. — [e]) K °मित्रः ॥. **1415** ○ Anr. 1.56. — [a]) मंदोद्धृतैः; Srb. p. 112.283. मंदोद्धृतैः.

जीयासुः कलिकालकर्णकजगद्दारिद्र्यदारूदर- 1416 S. 3.10.2
व्याघूर्णद्घुणचूर्णलङ्घिमजुषस्त्वत्पादयोः पांसवः ।
लक्ष्मीसद्मसरोजरेणुसुहृदः सेवावनम्रीभवद्-
भूमीपालकिरीटरत्नकिरणज्योत्स्नानदीवालिकाः ॥ ३६ ॥
वल्लणस्य ॥

पृथुरसि गुणैः कीर्त्या रामो नलो भरतो भवान् 1417 S. 3.14.1 (वीर्यमित्रस्य)
महति समरे शत्रुघ्नस्त्वं सदैव युधिष्ठिरः ।
इति सुचरितैर्बिभ्रद्रूपं चिरंतनभूभुजां
कथमसि न मांधाता देव त्रिलोकवि↑जय्यपि ॥ ३७ ॥ ↑K. 97b

प्रभुरसि वयं मालाकारव्रतव्यवसायिनो 1418 S. 3.54.3 (वीर्यमित्रस्य)
वचनकुसुमं ते↑नास्माभिस्तवादरढौकितम् । ↑N. 34b
यदि तदगुणं कण्ठे मा धास्तथोरसि मा कृथा
नवमिति कियत्कर्णे धेहि क्षणं फलतु श्रमः ॥ ३८ ॥

भयमेकमनेकेभ्यः शत्रुभ्यो युगपत्सदा । 1419
ददाति तच्च तेनास्ति राजन् चित्रमिदं महत् ॥ ३९ ॥

सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे बुधैः । 1420
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥ ४० ॥

अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः । 1421
मार्गणौघः समायाति गुणो याति दिगन्तरम् ॥ ४१ ॥

सालकाननयोगेऽपि सालकाननवर्जिता । 1422
हारावरुद्धकण्ठापि विहारारिवधूस्तव ॥ ४२ ॥
अमी वीर्यमित्रस्य ॥

---

**1416** S order *cdab*. — [a]) S °कर्णनृपते. — [b]) S °द्घुणवृन्दलङ्घनमुषस्. S पांशवः. — [d]) S °वालुकाः ॥. — [e]) K वल्लन ॥. **1417** — [b]) K सयैव. — [c]) S °भूभृतां. — [d]) S °विधाय्यपि. ○ Sbh. 2502; Amd. 66. **1418** N probably inserts 1438 and 1440 after this, and perhaps 1443, 1445. **1420** ○ Śp. 1221; Sbh. 2452; Bpb. 313 (कविशेखर); Kuv. p. 157; Pk. 50; SK. 4.26; Smv. 6.2; SG. 43*b*; Amd. 279; BIS. 6923 (5197). **1421** ○ Sbh. 2455 (अमृतदत्तस्य); Bpb. 311. **1422** — [e]) K वीर्यमित्रस्यामी ॥. The Vīryamitra stanzas seem to begin with 1417; but different grouping in N. ○ Śp. 1275; Srb. p. 131.1.

1423 कर्षद्भिः सिचयाञ्चलानतिरसात् कुर्वद्भिरालिङ्गनं
गृह्णानैः कचमालिखद्भिरधरं विद्रावयद्भिः कुचौ ।
प्रत्यक्षेऽपि कलिङ्गमण्डलपतेरन्तःपुराणामहो
धिक्कष्टं विटपैर्विटैरिव वने किं नाम नाचेष्टितम् ॥ ४३ ॥

वसुकल्पस्य ॥

1424* S. 3.44.4 (कल्पदत्तस्य) गम्भीरनीरसरसीरपि पङ्कशेषाः कुर्वन्ति ये दिनकरस्य करास्त एव ।
त्वद्वीरवैरिवनितानयनाम्बुलेशशोषे कथं प्रतिहता इति मे वितर्कः ॥ ४४ ॥

1425* S. 3.27.3 (वसुकल्पस्य) त्वत्सैन्यगलपितस्य पन्नगपतेरच्छिन्नधाराक्रमं
विस्फारायतशालिनि प्रतिफणं फेनाम्भसि भ्रश्यति ।
देव क्ष्मावलयप्रभो फणिकुलैः प्रव्यक्तमेकोत्तर-
स्थूलस्तम्भसहस्रधारितमिव क्ष्माचक्रमालोक्यते ॥ ४५ ॥

1426* S. 3.27.4 शेषं क्लेशयितुं दिशः स्थगयितुं पेष्टुं धरित्रीभृतः
सिन्धून्धूलिभरेण कर्दमयितुं तैरेव रोद्धुं नभः ।
नासीरे च मुहुर्मुहुश्चल चलेत्यालापकोलाहलान्
कर्तुं नाथ वरूथिनीयमवनीं जेतुं पुनस्त्वद्भुजौ ॥ ४६ ॥

वसुकल्पस्य ॥

1427 देव त्वत्सैन्यभारादवनिमवनतां धर्तुमुत्तब्धदेहः
स्फूत्कारक्ष्वेडमीलत्फणशतनिपतत्पीनलालाप्रवाहः ।
दृष्टः प्रारोहशाली वट इव फलितो रक्तमूर्धन्यरत्नः
कूर्मेणोद्धृत्य कण्ठं निजविपुलवपुश्चत्वरे सर्पराजः ॥ ४७ ॥

1428 S. 3.32.5 अम्भः कर्दमतामुपैति सहसा पङ्कद्रवः पांशुतां
पांशुर्वारणकर्णतालपवनैर्दिक्प्रान्तनीहारताम् ।
निम्नत्वं गिरयः समं विषमतां शून्यं जनस्थानकं
निर्याते त्वयि राज्यपाल भवति त्यक्तस्वभावं जगत् ॥ ४८ ॥

महोदधेः ॥

---

**1423** — [a]) K सित्रयांचनोन्नति-. ○ Śp. 1277 (श्रीधनददेवानाम्); Srb. p. 132.32. **1424** This and the next two stanzas are omitted in K, presumably by haplography with the citation वसुकल्पस्य. The S citations here may have been [वसु]कल्पदत्तस्य, cf. SP at 30[e]. — [c]) S त्वद्वैरिवीर-. **1425** — [c]) S3 फणिफणैः. S3 प्रत्यग्रमे°. **1428** — [c]) S जनस्थानतां.

असिन्दूरेण सीमन्तो मा भून्नो योषितामिति । 1429
अतः परिहरन्त्याजावसिं दूरेण तेऽरयः ॥ ४९ ॥ N. *lm*. 33*a*

देव त्वं किल कुन्तलग्रहरुचिः काञ्चीमपासारयन् 1430 S. 3.15.3
क्षिप्रं क्षिप्तकरस्ततः प्रहणनं प्रारब्धमङ्गेष्वपि । ↑ K. 98*a*
इत्याकूतजुषस्तव स्तवकृता वैतालिकेनोदिते
लज्जन्ते प्रमदाः परस्परमभिप्रेक्ष्यारयो बिभ्यति ॥ ५० ॥

भीमे प्रस्थानभाजि स्फुरदसिजलदापह्नुतद्वेषिवह्नौ N. *lm*. 33*b* 1431
गृह्णीताह्नाय सर्वे भुवि भुवनभुजश्चामरं वा दिशो वा ।
नैवं चेद्वस्तदानीं प्रधनधृतधनुर्मुक्तरावर्णविद्धं
गृध्रा मूर्धानमूर्ध्वं नभसि रभसिनो लाघवेनोद्धरन्ति ॥ ५१ ॥
वसुकल्पस्य ॥

भवानीहितकृन्नित्यं त्वं हिमानीगिरिस्थितः । N. *lm*. 33*b* 1432
अतः शंकर एवासि सदा स्कन्दः परं न ते ॥ ५२ ॥

आबाल्याधिगमान्मयैव गमितः कोटिं परामुन्नतेर् 1433 S. 3.4.1 (श्रीहनूमतः)
अस्मत्संकथयैव पार्थिवसुतः संप्रत्ययं लज्जते ।
इत्थं खिन्न इवात्मजेन यशसा दत्तावलम्बोऽम्बुधेः
प्राप्तस्तीरतपोवनानि भवतो वृद्धो गुणानां गणः ॥ ५३ ॥

स्तनयुगमश्रुस्नातं समीपतरवर्तिहृदयशोकाग्नेः । 1434
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ५४ ॥

संकल्पेऽङ्कुरितं द्विपत्रितमथ प्रस्थानवेलागमे N. *lm*. 34*a* 1435 S. 3.11.3 (छित्तपस्य)
मार्गे पल्लवितं पुरं प्रविशतः शाखाशतैरुद्गतम् ।
प्रातर्भाविनि दर्शने मुकुलितं दृष्टे तु देव त्वयि
प्रोत्फुल्लं फलितं च संप्रति मनोराज्यद्रुमेणाद्य मे ॥ ५५ ॥

---

**1429** ○ Smk. 97.61; SG. 47*a*. **1430** — [b]) S क्षिप्तः क्षिप्तकरग्रहः. S1. 2 प्रहरणं. — [d]) K परंपर-. **1431** — [d]) K मूर्द्धात-. **1432** — [d]) both NK परन्नते ॥. **1433** — [a]) S3 °न्मयेव. — [b]) S °कथनेन. S संप्रत्यसौ. — [c]) S इवात्ययेन. K दन्ता°; S दत्तो°. — [d]) S यात° (प्राप्त°). ○ Smk. 97.14 (श्रीहनूमतः); Prab. 98. **1434** ○ Smk. 97.26 (भट्टबाणस्य); Sbh. 2482 (भट्टबाणस्य); Auc. ad 20 (भट्टबाणस्य); KHV. 394; Bps. 109; Vyk. ad 2.13. **1435** — [c]) S3 भ्रातर्भाविनि. S3 तदेव. — [d]) S1 मनोबाह्य°.

1436 भूतिविभूषितदेहाः कान्तारागेण लब्धमहिमानः ।
त्रिकलिङ्गन्यस्तकरा भवदरयस्त्वत्समा जाताः ॥ ५६ ॥

(1437) S. 3.18.3 (डिम्बोकस्य) जाने विक्रमवर्धन त्वयि धनं विश्राणयत्यर्थिनां
भावी शोण इवोपलैरुपचितो रत्नैरगाधोऽम्बुधिः ।
तत्पश्यामि च रोहणो मणिभरैराध्मायमानोदरः
पाकोत्पीडितदाडिमीफलदशां कैश्चिद्दिनैर्यास्यति ॥ ५७ ॥

1438 S. 3.13.3 (श्रीहनूमतः) एकस्त्रिधा हृदि सदा वससि स्म चित्रं N. um. 34b
यो विद्विषां च विदुषां च मृगीदृशां च ।
तापं च संमदरसं च रतिं च तन्वन्
शौर्योष्मणा च विनयेन च लीलया च ॥ ५८ ॥

1439 देव त्वामहमर्थये ↑ चिरमसौ वर्षागमो निर्गतस् ↑ K. 98b
तीर्थं तीर्थमितस्ततो विचरितुं चेतोऽधुना धावति ।
तद्विश्रामय वीर वीर्यनिबिडज्याबन्धनात्कार्मुकं
मा भूद्वैरिवधूविलोचनजलैर्मार्गक्रमो दुर्गमः ॥ ५९ ॥

1440 द्विरूपा समरे राजन्नेकैवासिलतावधूः । N. um. 34b
दारिकारिकरीन्द्राणां सुभटानां च कुट्टनी ॥ ६० ॥

1441 आमृश्य स्त↑नमण्डलं प्रतिमुहुः संचुम्ब्य गण्डस्थलीं ↑ N. 35a
ग्रीवां प्रत्यवलम्ब्य संभ्रमबलैराहन्यमानः करैः ।
सुप्तस्याद्रिनदीनिकुञ्जगहने मत्तः पयोदानिलैः
कर्णान्ते मशकः किमप्यरिवधूसार्थस्य ते जल्पति ॥ ६१ ॥

1442 लम्बमाननयनाम्बुबिन्दवः कन्दरासु गहनासु भूभृताम् ।
आकपोलतललोलकुन्तलाः संचरन्ति तव वैरियोषितः ॥ ६२ ॥

---

**1436** — [b]) K क्रांतारोगेग. **1437** — [b]) S1.2 उपचितैः. — [c]) S उत्पश्यामि. S3 रोहणैर्. S1.2 °र्वास्याय°. — [d]) S1 °फलदृशां. **1438** — [a]) S वससीति चित्रं. — [c]) S3 संमदभरं. S3 पुष्णन्. ○ KHV. 572; Kpk. 477; Amd. 895. **1439** — [a]) K त्वामहमन्वये. — [b]) N विचरतुं. **1440** N indicates 1443, 1445 as to be inserted before this. **1441** — [c]) K सुप्तस्यापि. — [d]) K °वधूमात्वग्पते.

मा ते भवतु शत्रूणां या श्रुतिः श्रूयते क्विपः । N. *lm.* 34*b* 1443
सार्धं बन्धुभिरङ्गस्य या परस्मैपदे सिचि ॥ ६३ ॥

तत्कल्पद्रुमपुष्पसंस्तरिरजस्तत्कामधेनोः पयस् (1444)
तं च त्र्यम्बकनेत्रदग्धवपुषः पुष्पायुधस्यानलम् ।
पद्मायाः श्वसितानि[लानि] च शरत्कालस्य तच्च स्फुटं
व्योमादाय विनिर्मितोऽसि विधिना काम्बोज तुभ्यं नमः ॥६४॥
**वसुकल्पस्य** ॥

द्विषो भवन्ति वीरेन्द्र मुखे न तव संमुखाः । N. *lm.* 34*b* 1445
भवद्भुजबलप्रौढिपरित्याजितहेतयः ॥ ६५ ॥

क्षिप्तः क्षीरगृहे न दुग्धजलधिः कोषे न हेमाचलो 1446 S. 3.40.1 (कस्यचित्)
दिक्पाला अपि पालिपालनविधावानीय नारोपिताः ।
नो वा दिक्करिणः क्वणन्मधुलिहः पर्यायपर्याणन-
क्रीडायां विनियोजिता वद कृतं किं किं त्वया दिग्जये ॥ ६६ ॥
**दक्षस्य** ॥

वाहव्यूहखुराग्रटङ्कविहतिक्षुण्णक्षमाजन्मभिर् 1447 S. 3.36.3 (महोदधेः)
धूलीभिः पिहिते विहायसि भवत्प्रस्थानकालोत्सवे ।
दिङ्मोहाकुलसूरसूतविपथभ्राम्यत्तुरङ्गावली
दीर्घायुःकृतवासरः प्रतिदिशं व्यस्तो रविस्ताम्यति ॥ ६७ ॥

दातैष विश्वविदितः किमयं ददाति सर्वाहितानि जगते ननु वार्तमेतत् ↑ । ↑ K. 99*a* (1448)
अस्योदयात्प्रभृति वाञ्छति दानपात्रं चिन्तामणिर्यदि ददाति ददातु तावत् ॥६८॥
**अङ्कोकस्य** ॥

पूर्णोऽग्रे कलशो विलासवनिताः स्मेराननाः कन्यका (1449) S. 3.16.2 (परमेश्वरस्य)
दानक्लिन्नकपोलपद्धतिरिभो गौरद्युतिर्गोवृषः ।
क्षीरक्ष्मारुहि वायसो मधुरवाग्वामा शिवेति ध्रुवं
त्वां प्रत्युच्चलतां नरेन्द्रतिलक प्रादुर्भवन्त्यर्थिनाम् ॥ ६९ ॥

---

**1443** — [a]) K भर्वतु. **1444** — [a]) K °पुष्पमस्तुविरज°. **1446** — [c]) $S_3$ द्विक्करिणः. **1447** — [a]) K वाहव्याह-. — [c]) $S_{2.3}$ °मोहादनुसूर-. — [d]) S प्रतिवासरं ($S_2$ °रः). S रविर्भ्राम्यति. **1449** — [a]) K पूर्णोग्रे; $S_1$ पूर्णो यः. $S_2$ पूर्णोग्रः. S कलसो. S °वनिता स्मेरानना. — [b]) K गौरक्षाति°. — [c]) S क्षीरिक्ष्मा-.

1450 S. 3.7.3 (कस्यचित्) यतो यतो नृप नखपृष्ठपाटलं विलोचनं चलति तव प्रसीदतः ।
ततस्ततो नलिनवनाधिवासिनी तदीप्सया किल कमलानुधावति ॥ ७० ॥
परमेश्वरस्य ॥

1451 रुदितं वनेचरैरपि विन्ध्याद्रिनिवासिभिस्तवारिशिशौ ।
वनमानुषीषु हस्तं फलहस्तासु प्रसारयति ॥ ७१ ॥

1452 आबद्धभीमभृकुटीस्थपुटं ललाटं बिभ्रत्पराङ्मुखरिपोर्विधुताधरोष्ठः ।
आत्मैव सङ्गरमुखे निजमण्डलाग्रच्छायाछलादभिमुखस्तव देव जातः ॥ ७२ ॥

1453 निजगृहमयूरनामभिराहूतानागतेषु वनशिखिषु ।
बालतनयेन रुदता त्वदरिवधू रोदिता दीर्घम् ॥ ७३ ॥
योगेश्वरस्य ॥

(1454) ये तृष्णार्तैरधिकमनिशं भुज्यमानाः प्रसन्ना
अन्तर्भूता झटिति गुणिनो यत्र पूर्णा भवन्ति ।
नम्रीभूतैः फलमभिनवं प्राप्यते यद्यवश्यं
तत्किं कूपाः सुकृतघटितास्त्वादृशा वा पुमांसः ॥ ७४ ॥
अमरदत्त[स्य] ॥

1455 S. 3.5.1 (कस्यचित्) भ्रान्तं येन चतुर्भिरेव चरणैः सत्याभिधाने युगे
त्रेतायां त्रिभिरङ्घ्रिभिः कथमपि द्वाभ्यां ततो द्वापरे ।
न स्यास्त्वं यदि देव पङ्गुलगुडः काले कलावुत्कले
सोऽयं पङ्गुरवस्थितैकचरणो धर्मः कथं भ्राम्यति ॥ ७५ ॥
चित्तूकस्य ॥

1456 त्वं धर्मभूस्त्वमिह सङ्गरमूर्ध्नि भीमः कीर्त्यार्जुनोऽसि नकुलेन तवोपमास्ति ।
तुल्यस्त्वया यदि परं सहदेव एव दुःशासनस्तव पुनर्ननु कोऽपि शत्रुः ॥ ७६ ॥
हलायुधस्य ॥

1457 S. 3.22.1 (श्रीहनूमतः) कूर्मः पादोऽत्र यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
तैलोत्पूरः ↑ समुद्राः कनकगिरिरियं वृत्तवर्तिप्ररोहः । ↑ K 99b

**1450** — [a]) S1.2 नृप नखयुग्म-; S3 नृपवर पद्म-. **1456** — [a]) K शङ्करमूर्ति भीमः. ○ SG. 53b. — [d]) रिपुर्न हि भोजदेव ॥. **1457** — [a]) S पादोऽस्य. — [b]) S तैलोत्पूराः. S2 दीप-; S3 दीप्त- (वृत्त-). — [c]) S1 जोतिश्चंडांशु-; S3 अंचिश्चंद्राशु-; S8 अर्चिश्चंडांशु-. S1.2 दह्यमानाः. — [d]) S रघुपते. — [e]) K पण्डितखियाकस्य. ○ Han. 14.77; Smk. 97.47 (चित्तपस्य); Śp. 1248 (हनूमतः); Pv. 74 (हनुमतः) Ssm. 83 (हनूमतः).

अर्चिस्तिग्मांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना
शत्रुश्रेणी पतङ्गा ज्वलति नरपते त्वत्प्रतापप्रदीपः ॥ ७७ ॥
खिपाकस्य ॥

अन्तःखेदमिवोद्वहन् यदनिशं रत्नाकरो घूर्णते 1458
यच्च ध्यानमिवास्थितो न कनकक्षोणीधरः स्पन्दते ।
जाने दानविलास दानरभसं शौर्यं च ते शुश्रुवान्
एको मन्थविघट्टनास्तदपरष्टङ्काहतीः शङ्कते ॥ ७८ ॥
वाक्कूटस्य ॥

मया तावद्दृष्टो न खलु कलिकन्दर्पनृपतेर् 1459
गुणैस्तुल्यः कोऽपि क्वचिदपि किमश्रावि भवता ।
इति प्रश्नश्रद्धाकुलितमिव कर्णान्तिकमगात्
मृगाक्षीणां चक्षुश्चटुलतरतारान्ततरलम् ॥ ७९ ॥
वसुकल्पस्य ॥

न दीनस्त्वं पुण्यप्रभवरमणीनां विलसितैर् 1460
विराजच्छुद्धान्तस्त्वमहिमकरप्रौढमहिमा ।
क्वचिन्न क्रोधस्ते स्वपदजितदेवस्त्वमुदधेर्
अभिन्नोऽपि स्वामिन्न किमसि समुद्रः स्वविषये ॥ ८० ॥

॥ इति चाटुव्रज्या समाप्ता ॥ ४१ ॥

## ॥ ततो निर्वेदव्रज्या ॥ ४२ ॥

धन्यानां गिरिकन्दरोदरभुवि ज्योतिः परं ध्यायताम् 1461 S. 5.58.3 (सत्यबोधस्य)
आनन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्कस्थिताः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिमण्डपसदामायुः परं क्षीयते ॥ १ ॥

---

**1458** — [b]) K यद्यध्यानमिव. **1459** — [d]) N °ररलम् ॥. **1460** K °रमणी नो. — [b]) K पौटमहिमा ।. — [c]) N सुपद-. Vrajyā **41**: K समाप्तं ॥. **1461** — [b]) S अंके स्थिताः. — [d]) S °जुषां (°सदां.). S1 मंदिरजुषां चेतः परं सीदति ॥. ○ Bh. 196; Śān. 1.5; Smk. 126.9; (ed. भर्तृहरेः); Srb. p. 374.220; Pv. 814 (जगज्जीवनव्रज्यायाः); Pmt. 290 (भर्तृहरेः); BIS. 3077 (1307); Rast. p. 32; Śp. 4155.

1462 आस्वाद्य स्वयमेव वच्मि महतीर्मर्मच्छिदो वेदना
मा ↑ भूत्कस्यचिदप्ययं परिभवो याच्ञेति संसारिणः । ↑N. 35b
पश्य भ्रातरियं हि गौरवजराधिक्कारकेलिस्थली
मानम्लानिमसी गुणव्यतिकरप्रागल्भ्यगर्भच्युतिः ॥ २ ॥

1463 पश्य गोभट किं कुर्मः कर्मणां गतिरीदृशी ।
दुर्षेर्धातोरिवास्माकं दोषनिष्पत्तये गुणः ॥ ३ ॥

1464 अनादृत्यौचित्यं ह्रियमविगणय्यातिमहतीं
यदेतस्याप्यर्थे धनल↑वदुराशातरलिताः । ↑K. 100a
अलीकाहंकारज्वरकुटिलितभ्रूणि धनिनां
मुखानि प्रेक्ष्यन्ते धिगिदमतिदुष्पूरमुदरम् ॥ ४ ॥

1465 जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतु
शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ५ ॥

1466 निष्कन्दाः किमु कन्दरोदरभुवः क्षीणास्तरूणां त्वचः
किं शुष्काः सरितः स्फुरद्गिरिगुरुग्रावस्खलद्वीचयः ।
प्रत्युत्थानमितस्ततः प्रतिदिनं कुर्वद्भिरुद्ग्रीतिभिर्
यद्द्वारार्पितदृष्टिभिः क्षितिभुजां विद्वद्भिरप्यास्यते ॥ ६ ॥

1467 S. 5.43.3 (धर्मकीर्तेः) अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदीशानामग्रे द्रविणकणमोहान्धमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ७ ॥

---

**1462** — a) K महतीमर्मं°. — d) N °म्लानिमशी-; K °म्लानमसी-. ○ Śān. 1.16; BIS. 1074 (3739). **1463** N has this after 1469. **1464** — b) K यदेतंस्याप्यन्धे N धनबल-. **1465** — a) K तस्यापि गच्छत्वधः. — b) K शैलं शील-, — c) K वक्रमाशु. ○ Bh. 25; Skm. 125.9 (भर्तृहरेः); Srb. p. 64.15; Sbh. 3073 (var., माघस्य); St. 41.11; Pad. p. 111.40 (भर्तृहरेः); Shv. A. 66b; 696 (भर्तृहरेः). B. 5a. 91 (भर्तृहरेः); Ss. 39.12; SK. 2.174; Ssm. 1515; Smv. 4.6. **1466** — b) K शरितः. — c) K °रुह्रीतिभिर्. ○ Śān. 4.3; BIS. 3718 (1619). **1467** — c) S द्रविगमद°. ○ Bh. 168; Sān. 1.19; Srb. p. 77.45.

यदेते साधूनामुपरि विमुखाः सन्ति धनिनो 1468 S. 5.40.2 (भर्तृहरेः)
न चैषावज्ञैषामपि तु निजवित्तव्ययभयम् ।
अतः खेदो नास्मिन्नपरमनुकम्पैव भवति
स्वमांसत्रस्तेभ्यः क इव हरिणेभ्यः परिभवः ॥ ८ ॥

नो बद्धं शरदिन्दुधामधवलं पाणौ मुहुः कङ्कणं 1469
व्रीडामन्थरकोमलं नववधूवक्त्रं च नास्वादितम् ।
नीतं नैव यशः सुरेन्द्रभवनं शस्त्रेण शास्त्रेण वा
कालो जीर्णमठेषु धृष्टपिशुनैश्छात्रैः सह प्रेरितः ॥ ९ ॥

वयमकुशलाः कर्णोपान्ते निवेशयितुं मुखं 1470 S. 5.43.5 (भर्तृहरेः)
कृतकचरितैर्भर्तुश्चेतो न वञ्चयितुं क्षमाः ।
प्रियमपि वचो मिथ्या वक्तुं जडैर्न च शिक्षितं
क इव हि गुणो योऽस्मान् कुर्यान्नरेश्वरवल्लभान् ॥ १० ॥

खलोल्लापाः सोढाः कथमपि परा[रा]धनपरैर् (1471)
निगृह्यान्तर्दुःखं हसितमपि शून्येन मनसा ।
कृतो वित्तस्तम्भप्रतिहतधियामञ्जलिरपि
त्वमाशे मो↑घाशे किमपरमतो नर्तयसि माम् ॥ ११ ॥ ↑K. 100b

जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया 1472 S. 5.53.5 (शूलपाणेः)
वचो वैदेहीति प्रतिदिशमुदश्रु प्रलपितम् ।

---

**1468** — [a]) S मुखरा एव धनिनो· — [b]) S न सावज्ञैवै(S3 °रे°)षामपि· — [c]) S न वा क्लेशोमुष्मिन्नपर°· — [d]) S क इह· ○ Śān. 3.23; Bh. 670. (from S); Srb. p. 72.55; BIS. 5257 (2380). **1469** — [d]) K °पिशुनैश्छत्रैः· **1470** — [a]) S वयमनिपुणाः· — [b]) S कृतकमधुरं भर्तुर्भावं न भावयितुं· — [c]) S जनैर्न च शिक्षिताः· — [d]) S क इह स गुणो येन स्याम क्षितीश्वरवल्लभाः ॥· ○ Smk. 123.7; Bh. 731 (from S); Srh. 124.17; Shv. A. 73*a*. 803, B. 12*b*. 109. **1471** ○ Bh. 150. — [a]) तदाराधन-· — [b]) °न्तर्बाष्पं; Sbh. 3261 (भर्तृहरेः); Srb. p. 77.43; Srh. 75.25 (भर्तृहरेः); Shv. A. 76*b*. 860 (भर्तृहरेः); Sl. 40*a*; BIS. 2047 (801). **1472** — [b]) S प्रतिपद-· — [c]) K भर्तृहरेः· ○ Han. 10.24; Smk. 127.5 (भट्टवाचस्पतेः); Sbh. 3264; Shv. A. 71*a*. 771 (वाचस्पतिभट्टस्य); B. 9*b*. 65 (वाचस्पतिभट्टस्य); Kkk. ad 5.1 (भट्टवाचस्पतेः); Pad. p. 113.52; Pv. 756 (जगज्जीवनव्रज्यायाः); Ssm. 1535; KHA. 173; SK. 2.203; Kpk. 125; Kpd. p. 139; Ak. p. 297; Smv. 13.3; Amd. 295; Sd. ad 4.14.

क्रुता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ १२ ॥
N. अभिनन्दस्य ॥

1473 S. 5.70.1 सृजति तावदशेषगुणालयं पुरुषरत्नमलङ्करणं भुवः ।
तदनु तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ १३ ॥

(1474) सत्पुरुषपक्षपातिनि भगवति भवितव्यते नमस्तुभ्यम् ।
या त्वं [स्वय]मकृतज्ञं जडमकुलीनं न संस्पृशसि ॥ १४ ॥

1475 P. 39a दाता बलिः प्रार्थयिता च विष्णुर्दानं मही वाजिमखस्य कालः ।
नमोऽस्तु तस्यै भवितव्यतायै यस्याः फलं बन्धनमेव जातम् ॥ १५ ॥

(1476) प्रिया दुहितरो धातुर्विपदः प्रतिभान्ति नः ।
गुणवत्यः कुलीनेभ्यो दीयन्ते कथमन्यथा ॥ १६ ॥

1477 भद्रे वाणि विधेहि तावदमलां वर्णानुपूर्वीं मुखे
चेतः स्वास्थ्यमुपेहि गच्छ गुरुते यत्र स्थिता मानिनः ।
लज्जे तिष्ठ पराङ्मुखी क्षणमितस्तृष्णे पुरः स्थीयतां
पापो यावदहं ब्रवीमि धनिने देहीति दीनं वचः ॥ १७ ॥ ↑ N. 36a

(1478) प्रियां हित्वा बालामभिनवविलासव्यसनिनीम्
अधीते भिक्षाभुग्भुवमधिशयानश्चिरतरम् ।
अपि ज्ञात्वा शास्त्रं कटकमटतो जीर्यति वपुस्
ततो रे पाण्डित्यं यदिह न सुखं नोऽपि च तपः ॥ १८ ॥

1479 विद्यालते तपस्विनि विकसितसितकुसुमवाक्यसंपन्ने ।
विरम वरं भ्रमरहिते न फलसि भुक्तिं च मुक्तिं च ॥ १९ ॥

**1473** — [c]) S तदपि दुर्गतसंगि. S1 ते (चेद्). — [d]) S1 कुहति; S2 अहति (अहह). S1.2 राष्ट्र- (कष्ट-). ○ Bh. 342; Smk. 131.39 (फल्गुहस्तिन्याः); Śp. 4000; Srb. p. 92.67; Sbh. 3126 (फल्गुहस्तिन्याः); Srb. 36.4 (फल्गुहस्तिन्याः); SK. 6. 269; Ssv. 270; Smv. 15.11; BIS. 7163 (3289). **1474** K recopies this after running the first trial into end of preceding stanza, by duplication. **1475** — [b]) P काले. — [c]) P °तायैर्. ○ Śp. 448; Sbh. 3106 (क्षेमेन्द्रस्य); SK. 6.509; SG. 39b; Srb. p. 91.48. **1477** ○ Sbh. 3194; Srb. p. 67.69. **1479** — [a]) K विद्यानत- — [b]) K विमितमित-.

उन्मादगद्गदगिरो मदविह्वलाक्ष्या भ्रश्यन्निजप्रकृतयः कृतमस्मरन्तः । (1480)
ऐश्वर्यसीधुरसपानविघूर्णमानाः के नाम न प्रतिपदं पुरुषाः स्खलन्ति॥२०॥

स्वल्पद्रविणकणा वयममी च गुणिनो दरिद्रति सहस्रम् । 1481
दानव्यसनलवो हृदि धिग्धातः किं विडम्बयसि ॥ २१ ॥ ↑K. 101a

विद्यावानपि जन्मवानपि तथा युक्तोऽपि चान्यैर्गुणैर् 1482 S. 5.45,5
यन्नाप्नोति मनः समीहितफलं दैवस्य सा वाच्यता ।
एतावत्तु हृदि व्यथां वितनुते यत्प्राक्तनैः कर्मभिर्
लक्ष्मीं प्राप्य जडोऽप्यसाधुरपि च स्वां योग्यतां मन्यते ॥२२॥

ईश्वरगृहमिदमत्र हि विषं च वृषभश्च भस्म चाद्रियते । 1483
यस्तु न विषं न वृषभो न भस्म तस्यात्र का गणना ॥ २३ ॥

कामघ्राद्विषसदृशो भूत्यवलिप्ताद्भुजङ्गसङ्गरुचेः । 1484
को भृङ्गीव न शुष्यति वाञ्छ न फलमीश्वरादगुणात् ॥ २४ ॥

अपि वज्रेण संघर्षमपि पद्भ्यां पराभवम् । 1485 S. 4.16.2 (वाचस्पतेः)
सहन्ते गुणलोभेन त एव मणयो यदि ॥ २५ ॥

लभन्ते कथमुत्थानमस्थानं गुणिनो गताः । 1486
दृष्टः किं क्वापि केनापि कर्दमात्कन्दुकोद्गमः ॥ २६ ॥

हृत्पट्टके यद्यदहं लिखामि तत्तद्विधिर्लुम्पति सावधानः । 1487
भूयोविलोपान्मसृणे त्विदानीं रेखापि नोदेति मनोरथस्य ॥ २७ ॥

कुर्यान्न किं धनवतः स्वजनस्य वार्ता किं तत्क्रिया नयनयोर्न धृतिं विदध्यात् । (1488)
मामेष याचितुमुपागत इत्यसत्यसंभावनाविकलमस्य न चेन्मनः स्यात् ॥ २८ ॥

अस्मादृशां नूनमपुण्यभाजां न स्वोपयोगी न परोपयोगी । 1489
सन्नप्यसद्रूपतयैव वेद्यो दारिद्र्यमुद्रो गुणरत्नकोषः ॥ २९ ॥

---

**1480** — [b]) K भ्रश्यन्निज-. **1481** — [b]) N गुणितो. **1482** — [a]) S तैस्तैर्गुणैर्. **1485** — [a]) S1 अपि रुद्रेण. **1488** — [b]) K विदध्यां।. **1489** — [a]) K असाद्दशां लून°.

(1490) तावत्कथं कथय यासि गृहं परस्य तत्रापि चाटुशतमारभसे कथं च ।
त्वं वर्णयस्यथ कथं कुलपुत्र मानी हा मुग्ध दग्धजठरेण विडम्बितोऽसि ॥३०॥

(1491) सारसवत्ता विहता न बका विलसन्ति चरति नो कङ्कः ।
सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये ॥ ३१ ॥
सुबन्धोः ॥

(1492) उचितकर्म तनोति न संपदामितरदप्यसदेव विवेकिनाम् ।
इति निरस्त↑समस्तसुखान्वयः कथमतो न विषीदतु पण्डितः ॥ ३२ ॥ ↑K. 101b

1493 S. 4.45.2 P. 195b छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां
पर्यस्ताग्निशिखाकलापजटिलान्निःसृत्य दूरं वनात् ।
व्याधानां शरगोचरादतिजवेनोत्प्लुत्य गच्छन्मृगः
कूपान्तःपतितः करोति विगुणे किं वा विधौ पौरुषम् ॥ ३३ ॥

(1494) S. 5.43.4 (शिह्लणस्य) कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः ॥ ३४ ॥

(1495) वसुमति वसुमति बन्धौ धनलवलोभेन ये निषीदन्ति ।
तांश्च तृणानिव दधती कलयसि वद गौरवं कस्य ॥ ३५ ॥

(1496) कपालेभ्यो बद्धः कथमखिलविश्वप्रभुरसाव्
अनार्यैरस्माभिः परमियमपूर्वैव रचना ।
यदिन्दोः पीयूषद्रवमयमयूखोत्करकिरः
कलङ्को रत्नं तु प्रतिफणमनर्घं विषभृताम् ॥ ३६ ॥
वित्तोकस्य ॥

---

**1490** — c) K मार्ग. **1491** — b) K क क: ... ○ Vās. 10; Śp. 4001 (सुबन्धोः); Srb. p. 122.179. **1492** — c) K °सुखान्वयः. — d) K विमीदतु. **1493** — a) SP भित्वा (भंक्त्वा). — b) SP पर्यंताग्नि°. S °कलापजालज(S3 °कु°)टिलान्. S1, 2 निर्गम्य; S3P निर्गत्य. — c) P °जवेनाद्गत्य. — d) S1 विपिने; P विगुणै. ○ Śp. 940; Sbh. 655 (मुक्तापीडस्य); Ssm. 1242; Kvv. p. 13; St. 17.7; Bps. 250; Ssv. 291. **1494** ○ Śān. 1.15; Smk. 26.1; Śp. 261; Shv. A. 71b. 786, B. 10b. 82; Pad. p. 91.57 (बिह्लणशतकात्); Ssm. 1038 (बिह्लणस्य); Skb. 4.114; ŚB. 2.341; BIS. 1636 (637). **1496** — a) K first letter blotted; वधा: (बद्धः).

सर्वः प्राणविनाशसंशयकरीं प्राप्यापदं दुस्तराम् (1497)
प्रत्यासन्नभयो न वेत्ति विभवं स्वं जीवितं काङ्क्षति ।
उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं
प्राणानां च धनस्य चायमधियामन्योन्यहेतोः पणः ॥ ३७ ॥

नो मेघायितमर्थवारिविरहक्लिष्टेऽर्थशस्ये मया 1498 S. 5.54.4
नोद्वृत्तप्रतिपक्षपर्वतकुले निर्घातवातायितम् ।
नो वा वामविलोचनामलमुखाम्भोजेषु भृङ्गायितं
मातुः केवलमेव यौवनवनच्छेदे कुठारायितम् ॥ ३८ ॥
भर्तृहरेः ॥

ये कारुण्यपरिग्रहादपणितस्वार्थाः परार्थान्प्रति (1499) S. 5.37.3 (श्रीहर्षस्य)
प्राणैरप्युपकुर्वते व्यसनिनस्ते साधवो दूरतः ।
विद्वेषानुगमादनर्जितकृपो रूक्षो जनो वर्तते
चक्षुः संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते ॥ ३९ ॥
मातृगुप्तस्य ॥

नरेन्द्रैः श्रीचन्द्रप्रभृतिभिरतीतं सहृदयैर् (1500)
अतिक्रान्तं तैस्तैः कविभिरभिनन्दादिभिरपि ।
इदानीं वाक् तूष्णीं भव किमु मुधैव प्रलपसि ↑K. 102a
क्व पूजासंभारः क्व च तव गुणोल्लासरभसः ॥ ४० ॥
वाक्कूटस्य ॥

सुधासूतिः क्षीणो गणपतिरसावेकदशनः (1501)
पदभ्रष्टा देवी सरिदपि सुराणां भगवती ।
द्विजिह्वादन्येषां क्व ननु गुणिनामीश्वरजुषां
त्वया दृष्टो भोगः किमिह विफलं क्लिश्यसि मनः ॥ ४१ ॥

गच्छ त्रपे विरम धैर्य धियः किमत्र मिथ्या विडम्बयसि किं पुरुषाभिमान । (1502)
प्रध्वस्तसर्वगुणमर्जितदोषसैन्यं दैन्यं यदादिशति तद्वयमाचरामः ॥ ४२ ॥

---

**1497** — [a]) K °करी. **1498** — [a]) K क्रिष्टोर्थ-; S क्लिष्टार्थि-. ○ (*d* from Bh. 154); Bh. 585 (from S.). **1499** — [a]) S °दगणितस्वार्थाः (S1 °र्थः) परार्थ. K om. परार्था°. — [c]) K अनार्जित-; S अनूर्जित-. S1 रूक्ष्यो. — [d]) S1 वंद्यते ॥. — [e]) S3 om. ○ Jsv. 259 (var.). **1502** ○ Sbh. 3068 (धर्मदत्तस्य).

1503 निरानन्दा दारा व्यसनविधुरो बान्धवजनो N. 36b l. 2
जनीभूतं मित्रं धनविरहदीनः परिजनः ।
असंतुष्टं चेतः कुलिशकठिनं जीवितमिदं
विधिर्वामारम्भस्तदपि च मनो वाञ्छति सुखम् ॥ ४३ ॥

(1504) दुर्वासो मलिनाङ्गयष्टिरबलो दृष्टो जनः स्वे गृहे
नीचात्कर्णकटु श्रुतं धनमदादारूढगर्वं वचः ।
अन्यो मन्दिरमागतः परिचयादप्राप्तकामो गतः
खिन्नाः स्मः स्वपरोपकारकरणक्लीबां वहन्तस्तनुम् ॥ ४४ ॥

1505 क्व पङ्कः क्वाम्भोजं क्वणदलिकुलालापमधुरं N. 40a l. 3
शिरो रौद्रं क्वाहेः स्फुरदुरुमयूखः क्व च मणिः ।
कलिः क्वायं पापः क्व च गुणनिधेर्जन्म भवतो
विधिः सत्यं सत्यं सदृशविनियोगेष्वकुशलः ॥ ४५ ॥

1506 नमस्यः प्रज्ञावान् परिकलितलोकत्रयगतिः
सुखी मूर्खः सोऽपि स्वगतमहिमाद्वैतहृदयः ।
अयं मा भूत्कश्चित्प्रतनुमतिकिर्मीरितमनः-
समाधानोन्मीलत्सदसदितिसंदेहविधुरः ॥ ४६ ॥
वल्लणस्य ॥

(1507) अस्माभिश्चतुरम्बुराशिरशनावच्छेदिनीं मेदिनीं
भ्राम्यद्भिर्न स कोऽपि निस्तुषगुणो दृष्टो विशिष्टो जनः ।
यस्याग्रे चिरसंचितानि हृदये दुःखानि सौख्यानि वा
संजल्प्य क्षणमेकमर्धमथवा निःश्वस्य विश्राम्यते ॥ ४७ ॥

1508 इतो दावज्वालः स्थलभुव इतो जालजटिला ↑ K 102b
S. 4.46.4 इतो व्याधो धावत्ययमनुपदं वक्रितधनुः ।

---

**1503** N shifts this to penultimate position in the Vrajyā. — [d]) K मुखम् ॥. ○ Srh. 175.26; Jsv. 296.4. **1504** — [c]) K अथा with a correction mark, for अन्यो. **1505** This replaces 49.24 = 1661 in N. **1506** — [b]) K स्वेऽपि. — [e]) K वल्लण ॥. **1507** — [a]) K °रसना°. **1508** — [a]) S °ज्वाला. — [b]) S चक्रित-. — [d]) S॰ क्लैववशगः.

इतोऽप्यग्रे तिष्ठत्ययमजगरो विस्तृतमुखः
क्व यायात्किं कुर्यान्मृगशिशुरयं दैववशगः ॥ ४८ ॥

केनेयं श्रीर्व्यसनरुचिना शोण विश्राणिता ते (1509) S. 4.20.1
जाने जानुद्वयसजल एवाभिरामस्त्वमासीः ।
वेगभ्रश्यत्तटरुहवनो दुस्तरावर्तवीचिः
कस्येदानीं कलुषसलिलः कूलभेदी प्रियोऽसि ॥ ४९ ॥
**शतानन्दस्य ॥**

सिन्धोरर्णः स्थगितगगनाभोगपातालकुक्षः (1510)
पोतोपाया इह हि बहवो लङ्घनाय क्षमन्ते ।
आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं
को नाम स्यादतटकुहरालोकनैर्यस्य कल्पः ॥ ५० ॥
**केशटस्य ॥**

दैवे समर्प्य चिरसंचितमोहभारं स्वस्थाः सुखं वसत किं परयाचनाभिः । 1511
मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥ ५१ ॥

अर्थो न संभृतः कश्चिन्न विद्या काचिदर्जिता । (1512)
न तपः संचितं किंचिद्गतं च सकलं वयः ॥ ५२ ॥

आजन्मानुगतेऽप्यस्मिन्नाले विमुखमम्बुजम् । 1513
प्रायेण गुणपूर्णेषु रीतिर्लक्ष्मीवतामियम् ॥ ५३ ॥
**सरोकस्य ॥**

दृष्टा साथ कृपीटयोनिमहसा लेलिह्यमानाकृतिः 1514
पुष्पोन्मेषवती च किंशुकलता नीतावनीं वायुना ।
रम्भे नोपरि पद्मयोर्बिसलते नाग्रस्फुरत्पल्लवे
सौवर्णौ न घटौ न नूतनघनासन्नः शशी पार्वणः ॥ ५४ ॥
K. **शशीकर[स्य] ॥**

---

**1509** — c) K °भ्रस्यत्. — d) S3 कूपभेदी. S1 श्रियोसि. **1511** ○ Śān. 3.20. — a) °दुःखभारं. — b) सुस्थाः BIS. 2982 (1256). **1512** BIS. 621 (3604) काव्यादर्श 2.161 Ujjvaladatta on Uṇādi. 4.88. **1513** — c) K प्राये न. — e) K ? सेरोकस्य ॥. **1514** N gives this on cover folio (in list of contents) in a later hand. — a) K कृपीत-. — c) N °विंषलते°. — e) N om.; followed by निर्वेदस्तादृशायां संस्क्रियमाणायां.

1515 S. 5.44.4 (अमरसिंहस्य) तोयं निर्मथितं घृता↑य मधुने निष्पीडितः प्रस्तरः ↑N. 36b
स्नानार्थं मृगतृष्णिकोर्मितरला भूमिः समालोकिता ।
दुग्धा सेयमचेतनेन जरती दुग्धस्यता गर्दभी
कष्टं यत्खलु दीर्घया धनतृषा नीचो जनः सेवितः ॥ ५५ ॥
जोयीकस्य ॥

1516 S. 1.70.2 P. 46a (शूलपाणेः) रत्नाकरस्तव पिता स्थितिरम्बुजेषु भ्राता सुधारसमयः पतिराद्यदेवः ।
केनापरेण कमले वद शिक्षितासि शारङ्गशृ↑ङ्गकुटिलानि विचेष्टितानि॥५६॥↑K.103a

1517 अर्थाभावे मृदुता काठिन्यं भवति चार्थबाहुल्ये ।
नैकत्रार्थमृदुत्वे प्रायः श्लोके च लोके च ॥ ५७ ॥

॥ इति निर्वेदव्रज्या ॥ ४२ ॥

## ॥ ततो वार्धक्यव्रज्या ॥ ४३ ॥

1518 अनङ्ग पलितं मूर्ध्नि पश्यैतद्विजयध्वजम् ।
इदानीं जितमस्माभिस्तवाकिञ्चित्कराः शराः ॥ १ ॥
धर्मकीर्तेः ॥

1519 अनुचितमिदमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥ २ ॥
विद्याकालिदासयोः ॥

1520 प्रायश्चित्तं न गृह्णीतः कान्तायाः पतितौ स्तनौ ।
अत एव तयोः स्पर्शे लोकोऽयं शिथिलादरः ॥ ३ ॥

1521 धिग्वृद्धतां विषलतामिव धिक्तथापि वामभ्रुवामुपरि सस्पृहतामतन्वीम् ।
कोऽत्रापराध्यति विधिश्च शठः कुठारयोग्यः कठोरहृदयः कुसुमायुधश्च ॥ ४ ॥

---

**1515** — b) S पानार्थं. S3 समालोडिता. — c) S1 दुग्धाशयात्सूकरी ; S2.3 दुग्धाशया गर्दभी. — e) K जोयी ॥. **1516** — b) S भ्राता तुषारकिरणः. SP पतिरादि°. — c) K घत ; SP वत (वद). — d) S सारङ्ग°. P °लानित्र चेष्टि°. ○ Any. p. 13.107 ; Jsv. 185.4. **1517** — b) K यार्थ-. — c) K नैकत्राथ. **1519** — b) K मात्मथो. — d) K om रतं. ○ Bh. 128 ; Śp. 564 (शीलाभट्टारिकाभोजराजयोः) ; Kpk. 223 ; Kpd. p. 212 ; Srb. p. 205.7 ; Amd. 341 ; Shv. B 8a. 21 (? भोजस्य) ; Slp. 5.14 (भर्तृहरेः) ; BIS. 1103 (422). **1520** — a) K गृहीतंः. — c) K स्पर्शि. ○ SK. 5.81 ; Sbh. 2292 ; Srb. p. 264.252. **1521** — cd) K कुठारयोग्यः.

स्वस्ति सुखेभ्यः संप्रति सलिलाञ्जलिरेष मन्मथकथायाः । 1522 S. 5.52.1 (शतानन्दस्य)
ता अपि मामतिवयसं तरलदृशः शरलमीक्षन्ते ॥ ५ ॥

क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः । 1523
निर्वास्यतः प्रदीपस्य शिखेव जरतां मतिः ॥ ६ ॥

पलितेष्वपि दृष्टेषु पुंसः का नाम कामिता । 1524
भैषज्यमिव मन्यन्ते यदन्यमनसः स्त्रियः ॥ ७ ॥

एकगर्भोषिताः स्निग्धा मूर्ध्ना सत्कृत्य धारिताः । 1525 S. 5.51.1 (श्रीव्यास-पादानां)
केशा अपि विरज्यन्ते जरया किमुताङ्गनाः ॥ ८ ॥

गात्रैर्गिरा च विकलश्चटुमीश्वराणां कुर्वन्नयं प्रहसनस्य नटः कृतोऽस्मि । 1526 S. 5.42.2 (मुरारेः)
नो वेद्मि मां पलितवर्णकभाजमेतं नाट्येन केन नटयिष्यति दीर्घमायुः ॥ ९ ॥

अविविक्तावतिस्तब्धौ स्तनावाढ्याविवादृतौ । 1527
विविक्तावानतावेव दरिद्राविव गर्हितौ ॥ १० ॥

निर्दयस्य ॥

॥ इति वार्धक्यव्रज्या ॥ ४३ ॥

## ॥ ततः श्मशानव्रज्या ॥ ४४ ॥

चञ्चत्पक्षाभिघातग्लपितहुतभुजः प्रौढधाम्नश्चितायाः ↑ ↑ K. 103b 1528 S. 5.73.5
क्रोडादाकृष्टमूर्तेरहमहमिकया चण्डचञ्चुग्रहेण ।
सद्यस्तप्तं शवस्य ज्वलदिव पिशितं भूरि जग्ध्वार्धदग्धं
पश्यान्तःप्लुष्यमाणः प्रविशति सलिलं सत्वरं गृध्रसंघः ॥ १ ॥

N. पाणिनेः ॥

---

**1522** — a) K संतति॰ — b) S1 ॰कथायै॰ — c) S1 तद्यदि॰ — d) S1.3 सरल॰. NK ॰मीक्ष्यन्ते ॥. ○ Sbh. 3395; ŚB. 4.450. **1523** — a) K क्षणी प्रबोध॰. **1524** — a) N दृष्टेषु॰ — c) K भैसक्ष॰. ○ BIS. 3999 (1742); Hit. ed. Schl. 1.104, ed. Johns. 117, ed. Rodr. p. 82. **1525** — d) S जरसा॰. **1526** — a) S1.2 कुर्वन्नहं॰ — b) S कृतोऽस्मि॰ — c) S न त्वां पुनः॰ S भाजमेतन्॰ ○ Anr. 3.1; Bh. 484. **1527** — c) K निर्दमस्य ॥. Vrajyā **44** : The N order in this Vrajyā is 1540, 1528, 1536, 1530–34. **1528** — a) S ॰घातज्वलितहुतवह॰. S1 ॰धर्म-(॰धाम्न॰). — b) S व्याकृष्ट॰. K दंडचञ्चु॰. — d) K शलिलं. S गृध्रवृद्धः ॥. — e) K om. because of next. ○ Smk. 94.6.

1515 S. 5.44.4 (अमरसिंहस्य) तोयं निर्मथितं घृताय मधुने निष्पीडितः प्रस्तरः ↑ N. 36b
स्नानार्थं मृगतृष्णिकोर्मितरला भूमिः समालोकिता ।
दुग्धा सेयमचेतनेन जरती दुग्धस्यता गर्दभी
कष्टं यत्खलु दीर्घया धनतृषा नीचो जनः सेवितः ॥ ५५ ॥
जोयीकस्य ॥

1516 S. 1.70.2 P. 46a (शूलपाणेः) रत्नाकरस्तव पिता स्थितिरम्बुजेषु भ्राता सुधारसमयः पतिराद्यदेवः ।
केनापरेण कमले वद शिक्षितासि शारङ्गशृङ्गकुटिलानि विचेष्टितानि॥५६॥ ↑K.103a

1517 अर्थाभावे मृदुता काठिन्यं भवति चार्थबाहुल्ये ।
नैकत्रार्थमृदुत्वे प्रायः श्लोके च लोके च ॥ ५७ ॥

॥ इति निर्वेदव्रज्या ॥ ४२ ॥

## ॥ ततो वार्धक्यव्रज्या ॥ ४३ ॥

1518 अनङ्ग पलितं मूर्ध्नि पश्यैतद्विजयध्वजम् ।
इदानीं जितमस्माभिस्तवाकिञ्चित्कराः शराः ॥ १ ॥
धर्मकीर्तेः ॥

1519 अनुचितमिदमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥ २ ॥
विद्याकालिदासयोः ॥

1520 प्रायश्चित्तं न गृह्णीतः कान्तायाः पतितौ स्तनौ ।
अत एव तयोः स्पर्शे लोकोऽयं शिथिलादरः ॥ ३ ॥

1521 धिग्वृद्धतां विषलतामिव धिक्तथापि वामभ्रुवामुपरि सस्पृहतामतन्वीम् ।
कोऽत्रापराध्यति विधिश्च शठः कुठारयोग्यः कठोरहृदयः कुसुमायुधश्च ॥ ४ ॥

---

**1515** — b) S पानार्थं. S3 समालोडिता. — c) S1 दुग्धाशयाल्पकरी ; S2.3 दुग्धाशया गर्दभी. — e) K जोयी ॥. **1516** — b) S भ्राता तुषारकिरणः. SP पतिरादि°. — c) K घत ; SP वत (वद). — d) S सारङ्ग°. P °लानिव चेष्टि°. ○ Any. p. 13.107 ; Jsv. 185.4. **1517** — b) K यार्थ-. — c) K नैकत्राथ. **1519** — b) K मात्मथो. — d) K om रतं. ○ Bh. 128 ; Śp. 564 (शीलाभट्टारिकाभोजराजयोः); Kpk. 223 ; Kpd. p. 212 ; Srb. p. 205.7 ; Amd. 341 ; Shv. B Sa. 21 (? भोजस्य); Slp. 5.14 (भर्तृहरेः); BIS. 1103 (422). **1520** — a) K गृहीतंः. — c) K स्पर्शि. ○ SK. 5.81 ; Sbh. 2292 ; Srb. p. 264.252. **1521** — cd) K कुठारयोग्यः.

स्वस्ति सुखेभ्यः संप्रति सलिलाञ्जलिरेष मन्मथकथायाः । 1522
ता अपि मामतिवयसं तरलदृशः शरलमीक्षन्ते ॥ ५ ॥ S. 5.52.1 (शतानन्दस्य)

क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः । 1523
निर्वास्यतः प्रदीपस्य शिखेव जरतां मतिः ॥ ६ ॥

पलितेष्वपि दृष्टेषु पुंसः का नाम कामिता । 1524
भैषज्यमिव मन्यन्ते यदन्यमनसः स्त्रियः ॥ ७ ॥

एकगर्भोषिताः स्निग्धा मूर्ध्ना सत्कृत्य धारिताः । 1525
केशा अपि विरज्यन्ते जरया किमुताङ्गनाः ॥ ८ ॥ S. 5.51.1 (श्रीव्यासपादानां)

गात्रैर्गिरा च विकलश्चटुमीश्वराणां कुर्वन्नयं प्रहसनस्य नटः कृतोऽस्मि । 1526
नो वेद्मि मां पलितवर्णकभाजमेतं नाट्येन केन नटयिष्यति दीर्घमायुः ॥ ९ ॥ S. 5.42.2 (मुरारेः)

अविविक्तावतिस्तब्धौ स्तनावाढ्याविवादृतौ । 1527
विविक्तावानतावेव दरिद्राविव गर्हितौ ॥ १० ॥
निर्दयस्य ॥

॥ इति वार्धक्यव्रज्या ॥ ४३ ॥

## ॥ ततः श्मशानव्रज्या ॥ ४४ ॥

चञ्चत्पक्षाभिघातग्लपितहुतभुजः प्रौढधाम्नश्चितायाः ↑ ↑ K. 103b 1528
क्रोडादाकृष्टमूर्तेरहमहमिकया चण्डचञ्चुग्रहेण । S. 5.73.5
सद्यस्तप्तं शवस्य ज्वलदिव पिशितं भूरि जग्ध्वार्धदग्धं
पश्यान्तःप्लुष्यमाणः प्रविशति सलिलं सत्वरं गृध्रसंघः ॥ १ ॥
N. पाणिनेः ॥

---

**1522** — a) K संतति· — b) S1 °कथायै· — c) S1 तद्यदि· — d) S1.3 सरल°. NK °मीक्ष्यन्ते ॥· ○ Sbh. 3395; ŚB. 4.450. **1523** — a) K क्षणी प्रबोध°. **1524** — a) N दृष्टेपु· — c) K भेसक्ष-· ○ BIS. 3999 (1742); Hit. ed. Schl. 1.104, ed. Johns. 117, ed. Rodr. p. 82. **1525** — d) S जरसा· **1526** — a) S1.2 कुर्वन्नहं· — b) S कृतोऽस्मि· — c) S न त्वां पुनः· S भाजमेतन्· ○ Anr. 3.1; Bh. 484. **1527** — e) K निर्दमस्य ॥· Vrajyā **44** : The N order in this Vrajyā is 1540, 1528, 1536, 1530–34. **1528** — a) S °घातज्वलितहुतवह°. S1 °धर्म-(°धाम्न°). — b) S व्याकृष्ट°. K दंडचञ्चु-· — d) K शलिलं· S गृध्रवृद्धः ॥· — e) K om. because of next. ○ Smk. 94.6.

(1529) S. 5.73.4 उद्बद्धेभ्यः सुदूरं घनरजनितमःपूरितेषु द्रुमेषु
प्रोद्ग्रीवं पश्य पादद्वितयधृतभुवः श्रेणयः फेरवाणाम् ।
उल्कालोकैः स्फुरद्भिर्निजवदनगुहोत्सर्पिभिर्वीक्षितेभ्यश्
च्योतत्सान्द्रं वसाम्भः क्वथितशववपुर्मण्डलेभ्यः पिबन्ति ॥ २ ॥
पाणिनेः ॥

1530 उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसान्य्
अङ्गस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्यग्रपूतीनि जग्ध्वा ।
आत्तस्नाय्वन्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्काद्
अङ्कस्थादस्थिसंस्थस्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ ३ ॥

1531 कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभिर्
दंष्ट्राकोटिविसंकटैरित इतो धावद्भिराकीर्यते ।
विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो
लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः ॥ ४ ॥

1532 अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिबन्त्य्
अस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ ५ ॥

1533 एतत्पूतनचक्रमक्रमकृतश्वासार्धमुक्तैर्वृकान्
उत्पुष्णत्परितो नृमांसविघसैराददरं क्रन्दतः ।
खर्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥ ६ ॥

---

**1529** — [a]) S1 उद्बुद्धेभ्यः. S घनजनित-. — [b]) S पादद्वयनमित-. — [c]) S °वदनदरी-. — [d]) K वशांभः. S2 रसांभः; K कथित-; S1 कुथित-. **1530** — [a]) K पृथूच्छोभ-, — [b]) K °पिंडान्यवयव-. ○ Māl: 5.16; Smk. 94.1 (भवभूतेः); Śp. 4075 (भवभूतेः); Daś. ad 4.73 (मालतीमाधवे); Pmt. 178, Ssm. 999 (भवभूतेः); Kvv. p. 31; KHA. 115; Kpk. 43; Kpd. p. 83; Aś. p. 74 (ad 20.24); Amd. 128; Sd. ad 3.241, 7.16; Nami ad Kāv. 7.33; Srb. p. 366.7. **1531** ○ Māl. 5.13. **1532** — [b]) K महसा. — [d]) K °चांगुणाः॥. ○ Māl. 5.18; Smk. 94.4 (भवभूतेः); Śp. 4076; KHV. 189; Skb. 1.151; 5.501; ŚB. 2.228; Ak. p. 416. **1533** — [c]) NK °विद्वक्त°. ○ Māl. 5.14; Nami ad Kāv. 7.30.

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारसंवल्गित- 1534
क्रन्दत्फेरवचण्डहात्कृतिभृतिप्राग्भारभीमैस्तटैः ।
अन्तःशीर्णकरङ्ककर्परतरत्संरोधिकूलंकष- ↑ K. 104a
स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित् ॥ ७ ॥
भवभूतेरमी ॥

अत्रास्थः पिशितं शवस्य कठिनैरुत्कृत्य कृत्स्नं नखै[र्] (1535)
नग्नस्नायुकरालघोरकुहरैर्मस्तिष्कदिग्धाङ्गुलिः ।
संदश्यौष्ठपुटेन भुग्नवदनः प्रेतश्चिताग्निद्रुतं
सूत्कारैर्नलकास्थिकोटरगतं मज्जानमाकर्षति ॥ ८ ॥
जयादित्यस्य ॥

चञ्चच्चञ्चूद्धृतार्धच्युतपिशितलवग्राससंवृद्धगर्धै[र्] 1536
गृध्रैरारब्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे ।
वक्त्रोद्वान्ताः पतन्त्यश्छिमितिशिखिशिखाश्रेणयोऽस्मिन् शिवानाम् ↑ N. 37a
अस्रस्रोतस्यजस्रस्रुतबहलवसा वासविस्रे स्वनन्ति ॥ ९ ॥
श्रीहर्षदेवस्य ॥

विदूरादभ्यस्तैर्वियति बहुशो मण्डलशतैर् (1537)
उदञ्चत्पुच्छाग्रस्तिमितविततैः पक्षतिपुटैः ।
पतन्त्येते गृध्राः शवपिशितलोलाननगुहा-
गलल्लालाक्लेदस्नपितनिजचञ्चूभयपुटाः ॥ १० ॥

पिबत्येकोऽन्यस्माद्घनरुधिरमाच्छिद्य चषकं (1538)
ललज्जिह्वो वक्त्राद्गलितमपरो लेढि पिबतः ।
ततः स्त्यानाः कश्चिद्भुवि निपतिताः शोणितकणाः
क्षणादुच्चग्रीवो रसयति लसद्दीर्घरसनः ॥ ११ ॥

---

**1534** — [d]) K श्रोतो-. — [e]) K भवभूते ॥. ○ Māl. 5.19. **1536** — [d]) K अग्रश्रोत° K °श्रुत°. K °वसो. K °विश्रे. — [e]) K om. °देव°. ○ Nāgānanda 4.18. **1537** — [b]) K °त्पुंच्छाग्रे. — [d]) K °ल्लोलाक्रेद-. ○ Caṇ. 4.7 (p. 66). — [d]) °क्लेदस्थगित-. **1538** — [a]) K वशावं (चषकं). — [c]) K शोशित-. — [d]) K क्षणादर्च्च-. ○ Caṇ. 4.17 (p. 72).

(1539) चिताग्नेराकृष्टं नलकशिख[र]प्रोतमसकृत्
स्फुरद्भिर्निर्वाप्य प्रबलपवनैः स्फूत्कृतशतैः ।
शिरो नारं प्रेतः कवलयति तृष्णावशवलत्-
करालास्यः प्लुष्यद्वदनकुहरस्तूद्गिरति च ॥ १२ ॥

[अमी] श्रीक्षेमीश्वरस्य ॥

1540 अन्यादानाकुलान्तःकरणवशविपद्बाधितप्रेतरङ्कं N. 36b l. 10
ग्रासभ्रश्यत्करालश्लथपिशितशवाग्रग्रहे मुक्तनादम् ।
सर्वैः क्रामद्भिरुल्काननकवलरसव्यात्तवक्त्रप्रभाभिर्
व्यक्तैस्तैः संवलद्भिः क्षणमपरमिव व्योम्नि वृत्तं श्मशानम्॥१३॥

वल्लणस्य ॥

(1541) नेत्राकुञ्चनसारण[क्रम]कृतप्रव्यक्तनक्तंदिनो
दिक्चक्रान्तविसर्पिसल्लरिसटाभारावरुद्धाम्बरः ।
हस्तन्यस्तकपा↑लकन्दरदरीमुक्ताभ्रधाराः पिबन्न् ↑ K. 104b
उन्मुक्तध्वनिभिन्नकर्णकुहरः क्रव्यादयं नृत्यति ॥ १४ ॥

॥ इति श्मशानव्रज्या ॥ ४४ ॥

## ॥ ततो वीरव्रज्या ॥ ४५ ॥

1542 श्रुत्वा दाशरथी सुवेलकटके सानन्दमर्धे धनुष्-
टङ्कारैः परिपूरयन्ति ककुभः प्रोञ्छन्ति कौक्षेयकान् ।
अभ्यस्यन्ति तथैव चित्रफलके लङ्कापतेस्तत्पुनर्
वैदेहीकुचपत्रवल्लिवलनावैदग्ध्यमर्धे कराः ॥ १ ॥

1543 संतुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डल-
क्रीडाकृत्तपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम् ॥
याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्वं वृण्वित्यभितो मुखानि स दशग्रीवः कथं कथ्यते ॥ २ ॥

---

**1539** ○ Caṇ. 4.19 (p. 73). **1540** — [a]) K om. °प्रेत-. — [c]) K °रुल्लालन-. — [d]) N श्मशानः ॥. **1542** — [ab]) K धनूफूत्कारैः. ○ Anr. 6.17; Han. 9.1; Amd. 232. **1543** ○ Anr. 3.41. — [a]) °दोर्मण्डली-. — [d]) कथं वर्ण्यताम्; Smk. 92.9 (श्रीमुरारेः); Śp. 3992 (मुरारेः); Srb. p. 361.38.

एको भवान्मम समं दश वा नमन्ति ज्याघोषपूरितवियन्ति शरासनानि । 1544
तल्लोकपालसहितः सह लक्ष्मणेन चापं गृहाण सदृशं क्षणमस्तु युद्धम् ॥ ३ ॥

रे वृद्धगृध्र किमकाण्डमिह प्रवीर दावानले शलभतां लभसे प्रमत्त । 1545
कल्पावसानपवनोल्लसितस्य सिन्धोरम्भो रुणद्धि किमु सैकतसेतुबन्धः ॥ ४ ॥
एतौ संघश्रियः ॥

आस्कन्धावधि कण्ठकाण्डविपिने द्राक्चन्द्रहासासिना 1546
छेत्तुं प्रक्रमिते मयैव तरसा त्र्यक्षच्छिरासंततौ ।
अस्मेरं गलिताश्रुगद्गदपदं भिन्नभ्रुवा यद्यभूद्
वक्त्रेष्वेकमपि स्वयं स भगवांस्तन्मे प्रमाणं शिवः ॥ ५ ॥

देवो यद्यपि ते गुरुः स भगवानर्धेन्दुचूडामणिः 1547
क्षोणीमण्डलमेकविंशतिमिदं वारान् जितं यद्यपि ।
द्रष्टव्योऽस्यमुमेव भार्गवबटो कण्ठे कुठारं वहन्
पौलस्त्यस्य पुरः प्रणामरचितप्रत्यग्रसेवाञ्जलिः ॥ ६ ॥

रुद्रादेस्तुलनं स्वकण्ठविपिनच्छेदो हरेर्वासनं (1548) S. 5.21.3 (कस्यचित्)
कारावेश्मनि पुष्पकस्य च जयो यस्येदृशः केलयः ।
सोऽहं दुर्जयबाहुदण्डसचिवो लङ्केश्वरस्तस्य मे
का श्लाघा घुणजर्जरेण धनुषा कृष्टेन भग्नेन वा ॥ ७ ॥

वीरप्रसूर्जयति भार्गवरे↑णुकैव यत्त्वां ↑ त्रिलोकतिलकं सुतमभ्यसूत । ↑K. 105a ↑N. 37b 1549
शक्रेभकुम्भतटखण्डनचण्डधामा येनैष मे न गणितो युधि चन्द्रहासः ॥ ८ ॥

रामे रुद्रशरासनं तुलयति स्मित्वा स्थितं पार्थिवैः 1550 S. 5.19.1
सिञ्जासज्जनतत्परेऽवहसितं दत्वा मिथस्तालिकाः ।
आरोप्य प्रचलाङ्गुलीकिशलये म्लानं गुणास्फालने
स्फाराकर्षणभग्नपर्वणि पुनः सिंहासने मूर्च्छितम् ॥ ९ ॥

---

**1545** — [c]) K om. एतौ. K °श्रीयः ॥. **1546** ○ Bāl. 2.31; Han. 8.52. **1547** — [c]) K °स्य स्वमेव. K कन्धे (कण्ठे). — [d]) K °रचितं. ○ Bāl. 2.21. **1548** — [a]) S3 °च्छेदी. — [b]) S3 पुष्करस्य च जयो. K यस्य दृशाः; S2 यस्येदृशाः. — [c]) S1 दुर्दम-; S3 दुर्गम- (दुर्जय-). — [d]) K का श्राघा. S3 गुण- (घुण-). ○ Bāl. 1.51; Vkj. 1.21 (*ab* only). **1549** ○ Bāl. 2.29. **1550** — [b]) S3 °सज्जन°. K °तत्परेणऽव-; S °तत्परे च. S2, 3 °स्तालिकाम्. — [c]) K om. °स्फालने. ○ Bāl. 3.75; Han. (Mdhs.) 1.31.

1551 पृथ्वि स्थिरा भव भुजंगम धारयैनां त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्रितये दिधीर्षां रामः करोतु हरकार्मुकमाततज्यम् ॥ १० ॥
राजशेखरस्यामी ॥

1552 लाङ्गूलेन गभस्तिमान् वलयितः प्रोतः शशी मौलिना
जीमूता विधुताः शटाभिरुडवो दंष्ट्राभिरासादिताः ।
उत्तीर्णोऽम्बुनिधिर्दृशैव विपदैस्तेनाट्टहासोर्मिभिर्
लङ्केशस्य च लङ्घितो दिशि दिशि क्रूरः प्रतापानलः ॥ ११ ॥
अभिनन्दस्य ॥

1553 यो यः कृत्तो दशमुखभुजस्तस्य तस्यैव वीर्यं
लब्ध्वा दृप्यन्त्यधिकमधिकं बाहवः शिष्यमाणाः ।
यद्यच्छिन्नं दशमुखशिरस्तस्य तस्यैव कान्तौ
संक्रामन्त्यामतिशयवती शेषवक्त्रेषु लक्ष्मीः ॥ १२ ॥
मुरारेः ॥

1554 भग्नं देव समस्तवानरभटैर्नष्टं च यूथाधिपैः
किं धैर्येण पुरो विलोकय दशग्रीवोऽयमारादभूत् ।
इत्थं जल्पति संभ्रमोल्बणमुखे सुग्रीवराजे मुहुस्
तेनाकेकरमीक्षितं दश शनैर्बाणानृजूकुर्वता ॥ १३ ॥

(1555) भ्रमणजवसमीरैः शेरते शालषण्डा मम नखकुलिशाग्रैर्ग्रावगर्भाः स्फुटन्ति ।
अजगरमपि चाहं मुष्टिनिष्पिष्टवक्त्रं निजभुजतरुमूलस्यालवालं करोमि ॥ १४ ॥

(1556) कृष्टा येन शिरोरुहेषु रुदती पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान् ↑ K. 1056
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौर[वा]ः ॥ १५ ॥

---

**1551** — [d]) K हुव-(हर-). ○ Bāl. 1.48; Sbh. 2282 (बालरामायणे); Han. 1.21; Sd. ad 10.62; Vyk. ad 2.13, 2.28; As. ad 35; KHV. 344. **1552** — [b]) K °रुदवो. — [e]) K अभितन्द ॥. ○ RA. 15.64; Auc. ad 20 (गौडकुम्भकारस्य); Han. (Mdhs.) 5.32. **1553** — [e]) K मुरारेः ॥. ○ Anr. 6.76, *cdab*. — [c]) यद्यत्कृत्तं. **1556** — [a]) K °राजालजा. — [d]) K कौरः ॥. ○ Veṇ. 3.47; Skh. 5,516; ŚB. 2.478, 3.60, 3.217; Nāṭ. ad 35 (Veṇ. 3), 39.

कपोले जानक्याः करिकलभदन्तद्युतिमुषि 1557
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यन् श्रुत्वा रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥ १६ ॥

हरिरलसविलोचनः सगर्वं बलमवलोक्य पुनर्जगाम निद्राम् । 1558
अधिगतपतिविक्रमास्तभीतिर्न तु दयितापि विलोकयांचकार ॥ १७ ॥
मेठस्य ॥

भूयः काञ्चनकेनिपातनिकरप्रोत्क्षिप्तदूरोद्गतैर् (1559)
यत्संख्येषु चकार शीकरकणैरेव द्विषां दुर्दिनम् ।
किं चाकाण्डकृतोद्यमस्त्रिपथगासंचारिनौकागणो
गीर्वाणेन्द्रफणीन्द्रयोरपि ददौ शङ्कां विशङ्कोऽपि यः ॥ १८ ॥
नरसिंहस्य ॥

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं (1560)
शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
विज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥ १९ ॥

पुत्रस्त्वं त्रिपुरद्रुहः पुनरहं शिष्यः किमेतावता (1561)
तुल्यः सोऽपि कृतस्तवायमधिकः कोदण्डदीक्षाविधिः ।
तत्राधारनिबन्धनो यदि भवेदाधेयधर्मोदयस्
तद्भोः स्कन्द गृहाण कार्मुकमिदं निर्णीयतामन्तरम् ॥ २० ॥

---

**1557** — [c]) K om. °चर°. — [d]) K परिदृढः ॥. ○ Han. 1.19; Smk. 92.3; (महानाटकात्); Śp. 3990 (महानाटकस्य); Srb. p. 360.31; Kav. p. 97; Daś. ad 2.12; Srh. 182.2 (महानाटके); KHA. 681; KHV. 237; Skb. 5.369; ŚB. 3.18, 3.223, 3.250, 4.820; Sd. ad 7.31. Generally — [c]) शृण्वन् (श्रुत्वा). **1558** — [b]) K वनम् (बलम्). ○ Śp. 904; Srb. p. 230.25. **1559** — [c]) K °संचारिणौ कागणौ. — [e]) K नरसिंहः ॥. **1560** — [b]) K कृतः. — [c]) K तार्क्षः. — [d]) K क्लिष्टो. ○ Han. 4.9; Daś. ad 4.20; KHA. 123; Skb. 3.120; ŚB. 2.313, 2.455, 3.39, 4.572; Amd. 684.

1562 द्राङ्निष्पेषविशीर्णवज्रशकलप्रत्युप्तरूढव्रण-
ग्रन्थ्युद्भासिनि भङ्गमोघमघवन्मातङ्गदन्तोद्यमे ।
भर्तुर्नन्दनदेवताविरचितस्रग्दाम्नि भूमेः सुता
वीरश्रीरिव तस्य वक्षसि जगद्वीरस्य विश्राम्यतु ॥ २१ ॥
चेः ॥

॥ इति वीरव्रज्या ॥ ४५ ॥

## ॥ ततः प्रशस्तिव्रज्या ॥ ४६ ॥

1563 यद्वर्ग्याभिर्जगाहे पृथुशकुलकुलास्फालनत्रासहास-
व्यस्तोरुस्तम्भिकाभिर्दिशि दिशि सरितां दिग्जयप्रक्रमेषु ।
अम्भो गम्भीरनाभीकुहरकवलनोन्मुक्त↑पर्यस्तलोलत्- ↑K. 106a
कल्लोलाबद्धमुग्धध्वनिचकितकणत्कुक्कुभं कामिनीभिः ॥ १ ॥

1564 मज्जत्यामज्जमज्जन्मणिमसृणफणाचक्रवाले फणीन्द्रे
यत्सेनोद्दामहेलाभरचलितमहाशैलकीलां बभार ।
कृच्छ्रात्पातालमूलाविलबहुलनिरालम्बजम्बालनिष्ठः
पृष्ठाष्ठीलप्रतिष्ठामवनिमवनमत्कर्परः कूर्मराजः ॥ २ ॥

1565 S. 3.35.1 (बाणस्य) यस्योद्योगे बलानां सकृदपि चलतामुज्जिहानै रजोभिर्
जम्बालिन्यम्बरस्य स्रवदमरसरित्तोयपूरेण मार्गे ।
निर्मज्जच्चक्रशल्याकुलतरणिकरोत्ताडिताश्वीयदत्त-
द्वित्रावस्कन्दमन्दः कथमपि चलति स्यन्दनो भानवीयः ॥ ३ ॥
भवभूतेरमी ॥

(1566) देवे दिशां विजयकौतुकसुप्रयाते निर्यन्त्रणप्रसरसैन्यभरेण यत्र ।
प्रत्यूप्यमानमणिकीलकगाढबन्धप्राणः * * फणपतिर्वसुधां दधाति ॥ ४ ॥
मुरारेः ॥

---

**1562** — [d]) K om. तस्य व°. ○ Mahāvīracaritam 1.34. **1563** ○ Kav. p. 68; KHV. 424. **1564** ○ KHV. 445. **1565** — [a]) S बलानां दिशि दिशि वलतां. — [b]) K श्रवद्. S अमरधुनीवारि-. — [c]) S संसीदच्चक्र°. S °करोत्पीडिता°. — [d]) K °स्कंदमंथ. **1566** — [a]) K °मुण्णीयात्र. — [d]) K ददाति.

गुञ्जत्कुञ्जकुटीरकुञ्जरघटा↑विस्तीर्णकर्णज्वराः ↑ N. 384 1567 S. 3.34.3 (जयदेवस्य)
प्राक्प्रत्यग्धरणीध्रकन्दरदरीपारीन्द्रनिद्राद्रुहः ।
लङ्काङ्कत्रिककुत्प्रतिध्वनिघनाः पर्यन्तयात्राजये
यस्य प्रेमुरमन्ददुन्दुभिरवैराशारुधो घोषणाः ॥ ५ ॥

त्वं सर्वदा नृपतिचन्द्र जयश्रियोऽर्थी स्वप्नेऽपि न प्रणयिनी भवतोऽहमासम् । (1568)
इत्थं श्रिया कुपितयेव रिपून्व्रजन्त्या संजघ्निरे समरकेलिसुखानि यस्य ॥ ६ ॥

ते पीयूषमयूखशेखरशिरःसंदानमन्दाकिनी- 1569
कल्लोलप्रतिमल्लकीर्तिलहरीलावण्यलिप्ताम्बराः ।
सर्वक्षत्रभुजोष्मशातनकलादुःशीलदोःशालिनो
वंशे तस्य बभूवुरद्भुतगुणा धाराधरित्रीभुजः ॥ ७ ॥

यन्निस्त्रिंशहतोद्गतैरिरिशिरश्चक्रैर्बभूव क्षणं 1570 S. 3.38.5 (मुरारेः)
लोके चान्द्रमसे विधुन्तुदघटावस्कन्दकोलाहलः ।
किं चामीभिरपि स्फुरन्मणितया चण्डांशुकोटिभ्रमं
बिभ्राणैरुदपादि राहुभुवने भूयान्सुभिक्षोत्सवः ॥ ८ ॥↑ K. 1065

तेनेदं सुरमन्दिरं घटयता टङ्कावलीनिर्दलत्- 1571
पाषाणप्रकरः कृतोऽयमखिलः क्षीणो गिरीणां गणः ।
अर्थिभ्यो वसु वर्षता पुनरसौ संरूढरत्नाङ्कुर-
श्रेणिस्मेरशिरःसहस्रशिखरः संवर्धितो रोहणः ॥ ९ ॥

सुराणां पातासौ स पुनरतिपुण्यैकहृदयो 1572
ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः ।
करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां
स सर्वस्वं दाता तृणमिव सुरेशं विजयते ॥ १० ॥

---

**1567** — [a]) K om. °कुटीर°. S गुञ्जत्क्रौंचनिकुंज-. — [b]) S3 °धरणीन्द्र-. S °कंदर-जरत्. — [d]) S °मंदमंदररवै(S1. 2 वरै)र्. ○ ŚB. 3.213. **1568** — [c]) K इत्थं भिया. **1569** — [a]) K पीयूषमयूष°. — [b]) K °लहली°. **1570** — [c]) S स्फुरन्मुखतया शीतांशु-. — [d]) K °रुदयाद्रि°. K °राजभुवने; S1 राहुभवने; S2 बाहुभवने. ○ SG. 50*a*. **1571** — [c]) K सर्वेभ्यो वसु. — [d]) K श्रेणीस्मेर-. **1572** ○ Vāsavadattā 16 (p. 123); Sbh. 2631 (सुबन्धोः) Srb. p. 106.158. Ak. p. 305 (वासवदत्तायाम्).

1573 जीवाकृष्टिं स चक्रे मृधभुवि धनुषः शत्रुरासीद्गतासुर्
लक्षाप्तिर्मार्गणानामभवदरिबले तद्यशस्तेन लब्धम् ।
मुक्ता तेन क्षमेति त्वरितमरिगणैरुत्तमाङ्गैः प्रतीष्टा
पञ्चत्वं द्वेषिसैन्ये स्थितमवनिपतिर्नापि संख्यान्तरं सः ॥ ११ ॥

1574 येषां कल्पमहीरुहां मरकतव्याजेन तैरर्थिभिर्
व्यक्रीयन्त शलाटवोऽपि मणयस्ते पद्मरागादयः ।
तेषु प्रौढफलोपमर्दविनमच्छाखामुखारोहिभिस्
त्यागाद्वैतमहर्निशं सुकृतिनो यस्यामरैर्गीयते ॥ १२ ॥

1575 यो मौर्वीकिणकैतवेन सकलक्ष्मापाललक्ष्मीबलात्-
कारोपग्रहवाच्यतामलिनितौ बिभ्रद्भुजौ भूपतिः ।
लोकान् वाचयति स्म विक्रममयीमाख्यायिकामात्मनः
क्वापि क्वाप्यनुगच्छदर्जुनकथासंभारलम्भावतीम् ॥ १३ ॥
मुरारेरेतौ ॥

1576 क्रुध्यद्गन्धकरीन्द्रदन्तमुषलप्रेङ्खोलदीप्तानल-
ज्वालापातितकुम्भमौक्तिकफलव्युत्पन्नलाजाञ्जलौ ।
हस्तेनासिमयूखदर्भलतिकाबद्धेन युद्धोत्सवे
राज्ञा येन सलीलमुत्कलपतेर्लक्ष्मीः पुनर्भूः कृता ॥ १४ ॥
N. वसुकल्पस्य ॥

॥ इति प्रशस्तिव्रज्या ॥ ४६ ॥

## ॥ ततः पर्वतव्रज्या ॥ ४७ ॥

1577 गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः ।
एतस्मिन्प्रचलाकि↑नां प्रचलतामुद्वेजिताः कूजितैर् ↑ K. 107a
उद्वेल्लन्ति पुराणरोहणतरुस्कन्धेषु कु↑म्भीनसाः ॥ १ ॥ ↑ N. 38b

---

**1573** — [a]) N. *lm.* gloss मृधभुवि = संग्रामे. K गतासूर्. — [b]) K °भवहरि°. ○ Vās. 17; Srb. p. 131.124. **1574** — [c]) K °च्छायामुखा°. — [d]) K °र्लीयते ॥. **1575** — [a]) N *lm.* on किणकैतवेन = गुणघृष्टिचिह्नच्छलेन. — [e]) K नुरारेः ॥. **1576** — [e]) K om. **47** K पर्वत्रज्या. **1577** — [c]) K एत्कस्मिन्. ○ Ut. 2.29; Smk. 103.19 (भवभूतेः).

एते चन्द्रशिलासमुच्चयमयाश्चन्द्रातपप्रस्फुरत् 1578
सर्वाङ्गीणपयःप्रवृत्तसरितो झात्कुर्वते पर्वताः ।
येषामुन्मदजागरूकशिखिनि प्रस्थे नमेरुस्थिताः
श्यामामेव गभीरगद्गदगिरः स्कन्दन्ति कोयष्टयः ॥ २ ॥

आधत्ते दनुसूनुसूदनभुजाकेयूरवज्राङ्कुर- 1579
व्यूहोल्लेखपदावलीवलिमयैं रत्नैर्मुदं मन्दरः ।
आधारीकृतकूर्मपृष्ठकषणक्षीणोरुमूलोऽधुना
जानीमः परतः पयोधिमथनादुच्चैस्तरोऽयं गिरिः ॥ ३ ॥

तत्तादृक्फणिराजरज्जुकषणं संरूढपक्षच्छिदा- (1580)
घातारुन्तुदमप्यहो कथमयं मन्थाचलः सोढवान् ।
एतेनैव दुरात्मना जलनिधेरुत्थाप्य पापामिमां
लक्ष्मीमीश्वरदुर्गतव्यवहृतिव्यस्तं जगन्निर्मितम् ॥ ४ ॥

सोऽयं कैलासशैलः स्फटिकमणिभुवामंशुजालैर्ज्वलद्भिश् (1581)
च्छाया पीतापि यत्र प्रतिकृतिभिरुपस्थाप्यते पादपानाम् ।
यस्योपान्तोपसर्पत्तपनकरधृतस्यापि पद्मस्य मुद्राम्
उद्दामानो दिशन्ति त्रिपुरहरशिरश्च[न्द्र]लेखामयूखाः ॥ ५ ॥

गिरिः कैलासोऽयं दशवदनकेयूरविलसन्- (1582)
मणिश्रेणीपत्राङ्कुरमकरमुद्राङ्कितशिलः ।
अमुष्मिन्नारुह्य स्फटिकमयसर्वाङ्गसुभगे
निरीक्षन्ते यक्षाः फणिपतिपुरस्यापि चरितम् ॥ ६ ॥

दशमुखभुजदण्डमण्डलीनां दृढपरिपीडनपीतमेखलोऽयम् । 1583
जलगृहकवितर्दिकासुखानि स्फटिकगिरिर्गिरिशस्य निर्मिमीते ॥ ७ ॥

---

**1578** — [d]) K श्यामानामेव. **1579** — [b]) K °व्यूहाल्लप. — [d]) N परितः. ○ Anr. 7.40. **1580** ○ Anr. 7.41. **1581** — [b]) K त्रायाः. — [d]) K विशंति. ○ Anr. 7.45; Smk. 103.10 (श्रीमुरारेः). **1582** — [c]) K अतस्तस्मिन्नारुह्य-. ○ Anr. 7.46; Smk. 103.11 (श्रीमुरारेः). **1583** — [b]) K om. °पीडन°. ○ Anr. 747.

1584 कैलासाद्रितटीषु धूर्जटिजटालङ्कारचन्द्राङ्कुर-
ज्योत्स्नाकन्दलिताभिरिन्दुदृषदामद्भिर्नदीमातृकाः ।
गौरीहस्तगुणप्रवृद्धवपुषः पुष्यन्ति धात्रेयक-
भ्रातृस्नेहसहोढषण्मुखशिशुक्रीडासुखाः शाखिनः ॥ ८ ॥

1585 नक्तं रत्नमयूखपाटवमिलत्काकोलकोलाहल- ↑ K. 107b
त्रस्यत्कौशिकभुक्तकन्दरतमाः सोऽयं गिरिः स्मर्यते ।
यत्राकृष्टकुचांशुके मयि रुषा वस्त्राय पत्राणि
चिन्वत्यो वनदेवतास्तरुलतामुच्चैर्व्यधुः कौतुकात् ॥ ९ ॥

(1586) एतेऽक्ष्णोर्जनयन्ति कामविरुजं सीतावियोगे घना
वाताः शीकरिणोऽपि लक्ष्मण दृढं संतापयन्त्येव माम् ।
इत्थं वृद्धपरंपरापरिणतैर्यस्मिन्वचोभिर्मुनीन्
अद्याप्युन्मनयन्ति काननशुकाः सोऽयं गिरिर्माल्यवान् ॥ १० ॥

1587 S. 5.8.5 करिकवलितमृष्टैः शाखिशाखाग्रपत्रैररुणसरणयोऽमी भीषयन्तेऽग्रकुञ्जैः ।
चलितशबरसेनादत्तगोशृङ्गचण्डध्वनिचकितवराहव्याकुला विन्ध्यपादाः ॥ ११ ॥
**कमलायुधस्य ॥**

(1588) S. 5.8.4 (योगेश्वरस्य) इमास्ता विन्ध्याद्रेः शुकहरितवंशीवनघना
भुवः क्रीडालोलद्विरददशनाभुग्नतरवः ।
लताकुञ्जे यासामुपनदि रतक्लान्तशबरी-
कपोलस्वेदाम्भःकणचयनुदो वान्ति मरुतः ॥ १२ ॥
**दक्षस्य ॥**

(1589) स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो झात्कृतैर्निर्झराणाम् ।

---

**1584** ○ Anr. 7.48. — c) पुष्यन्ति. **1585** — d) NK °तरुतला°. ○ Anr. 7.98. — a) °पाटल°. **1587** — a) S °कवलनशिष्टैः. S शाक-. S1 °शाखात-. — b) S सर्वतो भीषयंते I. — c) K श्री कमलायुधस्य. ○ Smk. 103.17 (कमलाकरस्य); Skb. 2.30; ŚB. 2.270. **1588** — b) S °रदनारुग्ण-. — c) K रतक्रांत-. S °तरुणी-. — d) S °परिचयनुदो. — e) K दक्षः. ○ Skb. 3.9; ŚB. 2.299, 3.180; Amd. 941. **1589** ○ Ut. 2.14. — b) झांकृतैः. — d) परिचितभुवो दण्डकारण्यभागाः ॥

एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः
संदृश्यन्ते परिचयभुवो दण्डकाविन्ध्यपादाः ॥ १३ ॥
भवभूतेः ॥

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः (1590)
स्वेच्छासुप्तगभीरघोरदुरगाश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विवरेष्वल्पाम्भसो यास्वयम्
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ १४ ॥

दधति कुहरभाजामत्र भल्लूकयूनामनुरसितगुरूणि स्त्यानमम्बूकृतानि । 1591
शिशिरकटुकषायः स्त्यायते शल्लकीनामिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥१५॥
भवभूते[रेतौ] ॥

इह समदशकुन्ताक्रान्तवानीरमुक्तप्रसवसुरभिशीत↑स्वच्छतोया भवन्ति । ↑K.108a (1592)
फलभरपरिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ १६ ॥

एताः स्थानपरिग्रहेण शिवयोरत्यन्तकान्तश्रियः (1593) S. 5.8.2
प्रालेयाचलमेखलावनभुवः पुष्णन्ति नेत्रोत्सवम् ।
व्यावल्गद्बलवैरिवारणवरप्रत्यग्रदन्ताहति-
श्वभ्रप्रस्रवदभ्रसिन्धुसवनप्रस्निग्धदेवद्रुमाः ॥ १७ ॥

॥ इति पर्वतव्रज्या ॥ ४७ ॥

## ॥ ततः शान्तिव्रज्या ॥ ४८ ॥

यदेतत्स्वच्छन्दं विहरणमकार्पण्यमशनं 1594
सहार्यैः संवासः श्रुतमुपशमैकश्रमफलम् ।
मनो मन्दस्पन्दं विहरति चिरायाभिविमृशन्
न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ १ ॥

---

**1590** — [d]) K °सूर्यगै°. ○ Ut. 2.16. **1591** — [c]) N भवभूतेः; K तस्यैव. ○ Māl. 9.6; Ut. 2.21; Mah. 5.41. **1592** ○ Ut. 2.20. — [b]) वहंति ।; Mah. 5.40; Smk. 105.27 (भवभूतेः). **1593** — [c]) S व्यावलगद्. — [d]) K स्वभ्र-. K °सिंधुवसन°. **1594** — [b]) K सहायैः. K °काश्रम-. ○ Bh. 308; Srb. p. 368.46.

(1595) S. 5.65.4 हरिणचरणक्षुण्णोपान्ताः सशाद्वलनिर्झराः
कुसुमशबलैर्विष्वग्वातैस्तरङ्गितपादपाः ।
मुदितविहगश्रेणीचित्रध्वनिप्रतिनादिता
मनसि न मुदं कस्मादध्युः शिवा वनभूमयः ॥ २ ॥
गुणाकरभद्रस्य ॥

1596 पूरयित्वार्थिनामाशां प्रियं कृत्वा द्विषामपि ।
पारं गत्वा श्रुतौघस्य धन्या वनमुपासते ॥ ३ ॥

(1597) ते तीक्ष्णदुर्जननिकारशरै[र्न] भिन्ना धीरास्त एव शमसौख्यभुजस्त एव ।
सीमन्तिनीविषलतागहनं व्युदस्य येऽवस्थिताः शमफलेषु तपोवनेषु ॥ ४ ॥

1598 S. 5.64.1 वासो वल्कलमास्तरः किसलयान्योकस्तरूणां तलं
मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषां शान्तये ।
क्रीडा मुग्धमृगैर्वयांसि सुहृदो नक्तं प्रदीपः शशी
स्वाधीनेऽपि वने तथापि कृपणा याचन्त इत्यद्भुतम् ॥ ५ ॥

1599 S. 5.63.5 (वल्लणस्य) गतः कालो यत्र प्रियसखि मयि प्रेमकुटिलः
कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति ।
इदानीमस्माकं जठरकमठीपृष्ठकठिना
मनोवृत्तिस्तत्किं व्यसनिनि मुधैव क्षपयसि ॥ ६ ॥

(1600) मातर्जरे मरणमन्तिक↑मानयन्त्याप्यन्तस्त्वया वयममी परितोषिताः स्मः । ↑K. 108b
नानासुखव्यसनभङ्गुरपर्व[पूर्व] धिग्यौवनं यदपनीय तवावतारः ॥ ७ ॥

1601 एकं वा कुपितप्रियाप्रणयिनीं कृत्वा मनोनिर्वृतिं ↑ ↑N. 39a
तिष्ठामो निजचारुपीवरकुचक्रीडारसास्वादने ।

---

**1595** — [a]) K °क्षुण्णोपान्थाः. ○ Śān. 2.17; BIS. 7368 (5391). **1596** — [d]) K धना (धन्या). ○ Śān. 2.22; BIS. 4163 (1814). **1597** ○ Śān. 2.18; BIS. 2605 (1055); Srb. p. 368.35. **1598** — [b]) S3 गिरिणदी-. SK तृषाशांतये. — [d]) S धने (वने). ○ Śān. 2.20; BIS. 6052 (2784); cf. Śān. 4.6. **1599** — [a]) S यत्र प्रणयिनि. — [c]) S जरठकमठी-. ○ Śān. 4.13; Smk. 131.33 (आनंदस्य); BIS. 2063 (814); Bps. 45. **1600** — [d]) K नवोवतिरः ॥. **1601** — [c]) K °कुटीपभभिंक-. — [d]) K om. स्थाने. — [e]) K ज्ञानानन्त ॥.

अन्यद्वा सुरसिन्धुसैकततटीदर्भाष्टकस्रस्तर-
स्थाने ब्रह्मपदं समाहितधियो ध्यायन्त एवास्महे ॥ ८ ॥

ज्ञानानन्तस्य ॥

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटुं मृषा (1602) S. 5.42.3 (शिल्हणस्य)
नैषां गर्वगिरः शृणोषि न पुनः प्रत्याशया धावसि ।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ ९ ॥

क्वचिद्वीणागोष्ठी क्वचिदमृतकीर्णाः कविगिरः 1603
क्वचिद् व्याधिक्लेशः क्वचिदपि वियोगश्च सुहृदाम् ।
इति ध्यात्वा हृष्यन् क्षणमथ विघूर्णन् क्षणमहो
न जाने संसारः किममृतमयः किं विषमयः ॥ १० ॥

आत्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं (1604)
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि [ध]नान्येकान्ततो नि[ः]स्पृहाः ।
न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥ ११ ॥

अग्रे गीतं सरसकवयः पार्श्वयोर्दाक्षिणात्याः (1605) S. 5.58.5
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्येतत्स्यात् कुरु भवरसे लम्पटत्वं तदानीं
नो चेच्चेतः प्रविश परमब्रह्मणि प्रार्थनैषा ॥ १२ ॥

उत्पलराजस्य ॥

---

**1602** — [a]) S3 चाट्टन्. — [b]) S3 गर्ववचः. — [d]) S2 किं नु (कुत्र). S1 पयः (तपः). ○ Śān. 1.14; Bh. 678; Kuv. p. 97; Srb. p. 233.119; Ak. p. 328; SK. 2.217, 3.177; Pv. 713. **1603** ○ Bh. 470 (var.); BIS. 1989 (399); Sbh.2941; Srb. p. 89.5; Smv. 8.13. **1604** — [d]) K वाच्छामात्र-. ○ Bh. 283; Śān. 1.4; Srb. p. 375.224; Skm. 126.17; Shv. A. 77*b*. 872; Ssv. 1081; Pad. p. 90.53; Ssm. 1035 (बिह्लणस्य); BIS. 4491. (1191). **1605** — [a]) S पार्श्वतो. K °यो दक्षिणात्याः. — [b]) S पृष्ठे लीला°. — [c]) S °रसास्वादने लंपटत्वं. ○ Bh. 183. — [d]) सहसा निर्विकल्पे समाधौ ॥; Śp. 4176 (भर्तृहरेः); Srb. p. 375.245; Sbh. 346 ; Ssm. 1057 (भर्तृहरेः); SK. 7.18; Pad. p. 89.43 (भर्तृहरेः); Pk. 2; BIS. 77 (23).

1606 S. 5.65.3 (शालवाहस्य) आस्तां सकण्टकमिदं वसुधाधिपत्यं त्रैलोक्यराज्यमपि देव तृणाय मन्ये ।
निःशङ्कसुप्तहरिणीकुलसङ्कुलासु चेतः परं वलति शैलवनस्थलीषु ॥ १३ ॥

1607 S. 5.55.1 ददति तावदमी विषयाः सुखं स्फुरति तावदियं हृदि मूढता ।
मनसि तत्त्वविदां तु विवेचके क्व विषयाः क्व सुखं क्व परिग्रहः ॥१४॥ K.109a

1608 सत्यं मनोहरा रामाः सत्यं रम्या विभूतयः ।
किंतु मत्ताङ्गनापाङ्गभङ्गिलोलं हि जीवितम् ॥ १५ ॥

1609 S. 5.67.2 (वल्लणस्य) धिग्धिक् तान् क्रिमिनिर्विशेषवपुषः स्फूर्जन्महासिद्धयो
निष्कन्दीकृतशान्ति येऽपि च तपःकारागृहेष्वासते ।
तं विद्वांसमिह स्तुमः करपुटीभिक्षाल्पशाकेऽपि वा
मुग्धावक्त्रमृणालिनीमधुनि वा यस्याविशेषो रसः ॥ १६ ॥

1610 S. 5.56.1 (शिल्हणस्य) बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
प्रायो बन्धुभिरध्वनीव पथिकैः संगो वियोगावहः ।
हातव्योऽयमसंस्तवाय विसरः संसार इत्यादिकं
सर्वस्यैव हि वाचि चेतसि पुनः पुण्यात्मनः कस्यचित् ॥ १७ ॥
भर्तृहरेः ॥

1611 S. 5.63.3 यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ।

---

**1606** — [a]) S °स्तामकण्टक°; K °स्तां सकण्ठक°. — [d]) S परं लुठति. ○ Śān. 2.16; BIS. 1070 (406); Bh. 406 (from N, by mistake). **1607** — [b]) S हृदि वासना ।. — [c]) $S_3$ च (तु). — [d]) $S_{1.2}$ परिग्रहाः ॥. ○ Śān. 2.5; BIS. 2705 (1105); Srb. p. 368.37; Ssv. 1428; Bh. 522 (from N, by mistake). **1608** — [a]) K रामः. ○ Srb. p. 372.160; Sbh. 3266; Amd. 483; Srh. 197.30; Jsv. 266.13; Auc. ad 18; Dhv. ad 3.30; KHA. 188; Kpd. p. 269; Kpk. 333; BIS. 6733; Bh. 776 (from N, by mistake). **1609** — [a]) $S_3$ कृमि°. NK °पुषो भूर्यन्. — [b]) K निरकन्दी°; S निष्पन्दी°. S °शान्तयोऽपि. $S_3$ तपस्कारा°. — [c]) K °शात्केऽपि. — [d]) K सुग्धा-; S बाला-(मुग्धा-). S °वक्त्रसरोजिनी-. ○ Śān. 4.10; BIS. 3153 (4265); Bh. 548 (from N, by mistake); Srb. p. 371.112. **1610** — [a]) $S_{1.2}$ कामो. — [b]) $S_{2.3}$ °ध्वनीन-, S पथिकैर्योगो. — [c]) S हातव्योऽयमसार एव. KS विरसः. — [d]) $S_{2.3}$ कस्यापि पुण्यात्मनः ॥. — [e]) $S_3$ बिल्हणस्य. ○ Śān. 1.20; BIS. 4464 (1974); Pad. p. 90.52 (बिह्लणशतकात्); Ssm. 1018 (बिह्लणस्य); Bh. 620 (from N); Srb. p. 370.93; Nāṭ. ad 125. **1611** — [a]) K °तिञ्झिरसंक्षार°. — [c]) S इदानीमस्माकं. — [d]) $S_{2.3}$ तनुते ॥. ○ Bh. 6; Śān. 4.14; BIS. 5202 (2357) Skb. 5.115; ŚB. 3.336; Srb. p. 375.246; SK 7.23; Jsv. 304.12.

इदानीं त्वस्माकं पटुतरविवेकाञ्जनजुषां
  समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ १८ ॥

मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मा स्म भूर् 1612 S. 5.64.5 (लक्ष्मीधरस्य)
  भोगेभ्यः स्पृहयालवस्तव वशाः का निःस्पृहाणामसि ।
सद्यःस्यूतपलाशपत्रपुटिकापात्रीपवित्रीकृतैर्
  भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ १९ ॥

धर्मस्योत्सववैजयन्ति मुकुटस्रग्वेणि गौरीपतेस् (1613) S. 1.36.1 (लक्ष्मीधरस्य)
  त्वां रत्नाकरपत्नि जह्नुतनये भागीरथि प्रार्थये ।
त्वत्तोयान्तशिलानिषण्णवपुषस्त्वद्वीचिभिः प्रेङ्खतस्
  त्वन्नाम स्मरतस्त्वदर्पितदृशः प्राणाः प्रयास्यन्ति मे ॥ २० ॥
वाक्कूटस्य ॥

तडिन्मालालोलं प्रतिविरतिदत्तान्धतमसं (1614) S. 5.56.2 (शिल्हणस्य)
  भवत्सौख्यं हित्वा शमसुखमुपादेयमनघम् ।
इति व्यक्तोद्गारं चटुलवचसः शून्यमनसो
  वयं वीतव्रीडाः शुक इव पठामः परममी ॥ २१ ॥

विषयसरितस्तीर्णाः कामं रुजोऽप्यवधीरिता (1615)
  विषयविरहग्लानिः शान्ता गता मलिनाथ धीः ।
इति चिरसुखप्राप्तः किंचिन्निमीलि↑तलोचनो ↑ K. 109b
  व्रजति [नित]रां तुष्टिं पुष्टः श्मशानगतः शवः ॥ २२ ॥

कामं शीर्णपलाशसंहतिकृतां कन्थां वसानो वने 1616
  कुर्यामम्बुभिरप्ययाचितसुखैः प्राणावबन्धस्थितिम् ।
साङ्गग्लानि सवेपितं सचकितं सान्तर्निदाघज्वरं
  वक्तुं न त्वहमुत्सहेय कृपणं देहीत्यवद्यं वचः ॥ २३ ॥

---

**1612** — [a]) K किंचिद्°. — [c]) K सद्यःस्फूत-. $S_1$ °पुटका°. S °पात्रे. — [d]) S काश्यां (वृत्तिं). ○ Bh. 302; Śān. 4.11; Srb. p. 370.102; BIS. 4787 (2164); ŚB 3.80, 3.336. **1613** — [c]) $S_1$ त्वत्तो यंति. ○ Skb.. 4.183 **1614** — [a]) K दत्तार्थ-. — [b]) S भवे सौख्यं. K हित्यं. — [c]) S व्यक्तोदारं. — [d]) $S_{2,3}$ पुनरमी. — [e]) $S_3$ बिल्हणस्य. ○ Śān. 1.21; BIS. 2473 (993). **1615** — [a]) K क्षमं (कामं). **1616** — [c]) K om. °पितं. K त्रांतर्-. ○ Śān. 4.4 ; BIS. 1637(638); Srb. p. 74.47.

(1617) S. 5.62.5 (हरेः) अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयमिमान् ।
व्रजन्तः स्वातन्त्र्यात्परमपरितापाय मनसः
स्वयं त्यक्त्वा ह्येते शमसुखमनन्तं विदधति ॥ २४ ॥

(1618) भाग्यं नः क नु तादृगल्पतपसां येनाटवीमण्डनाः
स्यामः क्षोणिरुहो दहत्यविरतं यानेव दावानलः ।
येषां धूमसमूहबद्धवपुषः सिन्धोरमी बन्धवो
निर्व्याजं परिपालयन्ति जगतीरम्भोभिरम्भोमुचः ॥ २५ ॥

(1619) एतत्तद्वक्त्रमत्र क तदधरमधु कायतास्ते कटाक्षाः
कालापाः कोमलास्ते क स मदनधनुर्भङ्गुरो भ्रूविलासः ।
इत्थं खट्वाङ्गकोटौ प्रकटितदशनं मञ्जुगुञ्जत्समीरम्
रागान्धानामिवोच्चैरुपहसितमहो मोहजालं कपालम् ॥ २६ ॥

1620 S. 5.63.2 (ज्ञानशिवस्य) इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचौरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतो मोहोऽस्माकं स्मरसमरबाणव्यतिकर-
ज्वरज्वाला शान्ता तदपि न वराकी विरमति ॥ २७ ॥

1621 S. 5.38.5 (श्रीहनूमतः) शिशुत्वं तारुण्यं तदनु च दधानाः परिणतिं
गताः पांशुक्रीडां विषयपरिपाटीमुपशमम् ।
लसन्तोऽङ्के मातुः कुवलयदृशां पुण्यसरितां
पिबन्ति स्वच्छन्दं स्तनमधरमम्भः सुकृतिनः ↑ ॥ २८ ॥ ↑ N. 396

(1622) वहति निकटे कालस्रोतः समस्तभयावहं
दिवसरजनीकूलच्छेदैः पतद्भिरनारतम् ।
इह हि पततां नास्त्यालम्बो न वापि निवर्तनं
तदपि महतां कोऽयं मोहो यदेवमनाकुलाः ॥ २९ ॥

---

**1617** — [d]) S त्यक्ता. ○ Bh. 157; Śān. 3.3; Srb. p. 368.42; Sbh. 3386 (जयादित्यस्य); Ssv. 1429; Jsv. 239.2; BIS. 668 (243); ŚB. 3.81. **1618** — [d]) K पलिपाल°. **1619** ○ ŚB. 3.333. **1620** — [c]) S1 स्मरशबर-. ○ Bh. 218; Jsv. 304.13. **1621** — [b]) S °क्रीडा-. S °पाटीरुप°. — [c]) S लुठंतोऽङ्के. — [d]) K om. स्तन°. S1 °धरमंतः. **1622** — [a]) K कालश्रोतः.

भार्या मे [पु]त्रो मे द्रव्यं ↑ सकलं च बन्धुवर्गो मे । ↑ K. 110a (1623)
इति मे मे कुर्वन्तं पशुमिव बद्ध्वा नयति कालः ॥ ३० ॥

दिशो वासः पात्रं करकुहरमेणाः प्रणयिनः (1624)
समाधानं निद्रा शयनमवनी मूलमशनम् ।
कदैतत्संपूर्णं मम हृदयवृत्तेरभिमतं
भविष्यत्यत्युग्रं परमपरितोषोपचितये ॥ ३१ ॥

शरदम्बुधरच्छायागत्वर्यो यौवनश्रियः । (1625)
आपातरम्या विषयाः पर्यन्तपरितापिनः ॥ ३२ ॥

कुरङ्गाः कल्याणं प्रतिविटपमारोग्यमटवि (1626)
स्रवन्ति क्षेमं ते पुलिन कुशलं भद्रमुपलाः । S. 5.65.5 (लक्ष्मीधरस्य)
निशान्तादस्वन्तात्कथमपि विनिष्क्रान्तमधुना
मनोऽस्माकं दीर्घामभिलषति युष्मत्परिचितिम् ॥ ३३ ॥

मन्निन्दया यदि जनः परितोषमेति नन्वप्रयत्नजनितोऽयमनुग्रहो मे । (1627)
श्रेयार्थिनो हि पुरुषाः परतु[ष्टि]हेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति॥३४॥

क्रिमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं (1628)
निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम् । S. 5.68.5 (शूलस्य)
सुरपतिमपि श्वा पार्श्वस्थं सशङ्कितमीक्षते
गणयति न हि क्षुद्रो लोकः परिग्रहफल्गुताम् ॥ ३५ ॥

विवेकः किं सोऽपि स्वरसवलिता यत्र न कृपा (1629)
स किं मार्गो यस्मिन्न भवति परानुग्रहरसः । S. 5.68.4

---

**1623** ○ Js. 429. **1624** — [d]) K °तोषाय चितये. ○ Śān. 1.98; Srb. p. 383.241; BIS. 2810 (4185). **1625** ○ Kir. 11.12; Srb. p. 372.164. **1626** — [c]) S त्र निष्क्रान्त° (S3 न्तु°). — [d]) K युष्मात्. ○ Śān. 2.19; BIS. 1808 (698); Srb. p. 368.49. **1627** ○ Śān. 3.8; Smk. 129.4 (ज्ञानाङ्कुशस्य); Shv. A. 72b. 795 (ज्ञानांकुरस्य), B. 11a. 101 (ज्ञानांकुरस्य); BIS. 4715 (2123). **1628** — [a]) S2.3 कृमि°. — [c]) K °मीक्ष्यते. — [e]) S1 शूरस्य. ○ Bh. 30; Śān. 2.9; Srb. p. 177.997; BIS. 1894 (728). **1629** — [a]) KS1 स्वरसवनिता. — [b]) S1.2 किं योगो. — [c]) S3 धर्मो यस्मिन्न भवति. — [d]) S श्रुतं तत्किं साक्षादुप°. ○ Śān. 2.25. — [a]) °जनिता; BIS. 6190 (2845); Srb. p. 376.252.

स किं धर्मो यत्र स्फुरति न परद्रोहविरतिः
श्रुतं किं तद्वा स्यादुपशमपदं यन्न नयति ॥ ३६ ॥

(1630) S. 5.60.2 (कृष्णस्य)
गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
संप्राप्स्यन्ते जरठहरिणाः शृङ्गकण्डूविनोदम् ॥ ३७ ॥

(1631) S. 5.57.1
प्रेम्णा पुरा परिगृहीतमिदं कुटुम्बं चेलालितं तदनुपालितमद्य यावत् । ↑K 110a
संप्रत्यपि स्तिमितवस्त्रमिवाङ्गलग्नमेतज्जिहासुरपि हातुमनीश्वरोऽस्मि ॥ ३८ ॥

(1632) S. 5.53.1 (भर्तृहरेः)
क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्निशं न च पुनस्तत्त्वान्तरं शाश्वतं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥ ३९ ॥

(1633) S. 5.57.2 (शिल्हणस्य)
भिक्षाशनं भवनमायतनैकदेशः शय्या भुवः परिजनो निजदेहभारः ।
वासश्च कीर्णपटखण्डनिबद्धकन्था हा हा तथापि विषयान्न जहाति चेतः ॥४०॥

(1634) S. 5.56.3 (शिल्हणस्य)
रेतःशोणितयोरियं परिणतिर्यद्वर्ष्म तच्चाभवन्
मृत्योरामिषमास्पदं गुरुशुचां रोगस्य विश्रामभूः ।
जानन्नप्यवशी विवेकविरहान्मज्जन्नविद्याम्बुधौ
शृङ्गारीयति पुत्रकाम्यति बत क्षेत्रीयति स्त्रीयति ॥ ४१ ॥

---

**1630** — a) K °गिरिशिरो°. — b) K ब्रह्मणाराभ्यमन-. — c) K निर्विशङ्कौः. — d) S गात्रकण्डू°. ○ Bh. 239; Śān. 4.17; BIS. 2054 (808); Srb. p. 369.65; Amd. 130; Ssv. 891; KHA. 117. **1631** — ab) S प्रेम्णा पुरा प्रणिहितं मयि चक्षुर्गषदुल्लासितार्धकुचया मितमध्यया यत् ।. — c) S संप्रत्यति-. — d) S °श्वरोऽपि. **1632** — b) S3 सोढो. S3 °क्लेशो. — c) S पुनर्विष्णोः पदं शाश्वतं. — d) S1 वंचिताः ॥. ○ Bh. 236; Śp. 4153 (भर्तृहरेः); Śān. 1.9; Ssm. 1035 (? बिह्लण); Srb. p. 374.219; Sbh. 3178; BIS. 2015 (784); Jsv. 296.5. **1633** — b) S1 शय्या मही. — c) S1 वासः मु-. S जीर्णपट-. — e) S3 बिल्हणस्य. ○ Bh. 158 (var.); Śān. 1.23; Srb. p. 91.8; Srh. 196.21; Ssv. 1425; Js. 417; BIS. 4584 (2044). **1634** — a) S3 °स्तद्वर्ष्म. — b) S मृत्योरास्पदमाश्रयो. — c) S3 °प्यवशो. — e) S3 बिल्हणस्य. ○ Śān. 1.26; BIS. 5800 (2641).

यदा पूर्वं नासीदुपरि च यदा नैव भविता (1635)
तदा मध्यावस्थातनुपरिचयो भूतनिचयः ।
अतः संयोगेऽस्मिन् परवति वियोगे च सहजे
किमाधारः प्रेमा किमधिकरणाः सन्तु च शुचः ॥ ४२ ॥

भर्तृहरेः ॥

गोमायवः शकुनयश्च शुनां गणोऽयं लुम्पन्ति कीटकृमयः परितस्तथैव । (1636)
स्वां संपदं सकलसत्वकृतोपकारान्नो दृष्टवान् यदसि तच्छव वञ्चितोऽसि॥ ४३ ॥

केशटस्य ॥

धूर्तैरिन्द्रियनामभिः प्रणयितामापादयद्भिः स्वयं (1637)
संभोक्तुं विषया↑नयं किल पुमान् सौख्याशया वञ्चितः ।↑K. 111a
तैः शेषे कृतकृत्यतामुपगतैरौदास्यमालम्बितं
संप्रत्येष विधेर्नियोगवशगः कर्मान्तरैर्बध्यते ॥ ४४ ॥

दशरथस्य ॥

॥ इति शान्तिव्रज्या ॥ ४८ ॥

## ॥ ततः संकीर्णव्रज्या ॥ ४९ ॥

तुषारशैलाञ्जनशैलकल्पयोरभेदभागीश्वरविश्वरूपयोः । 1638
शरत्पयोदस्थसितार्धतारकापथप्रतिस्पर्धि वपुर्धिनोतु वः ॥ १ ॥

यद्बद्धोर्ध्वजटं यदस्थिमुकुटं यच्चन्द्रमन्दारयोर् 1639 S. 1.33.1 (राजशेखरस्य)
धत्ते धाम च दाम च स्मितलसत्कुन्देन्द्रनीलश्रियोः ।
यत्खट्वाङ्गरथाङ्गसंगविकटं श्रीकण्ठवैकुण्ठयोर्
वन्दे नन्दिमहोक्षताक्ष्यर्यपरिषन्नानाङ्कमेकं वपुः ॥ २ ॥

---

**1635** ○ Śān. 2.7. — [c]) परिणतिवियोगे; BIS. 5193 (2351); Srb. p. 376,250. **1636** — [d]) K तच्छद. ○ KHV. 402. **1637** — [b]) K वाञ्चितः ।. — [d]) K °वुंध्यते ॥. ○ Śān. 3.19. Vrajyā **49** : K संकर्ण°. **1638** — [c]) K °शितार्ध-. **1639** — [a]) S यद्बद्धार्ध-. S यदर्धमुकुटं. — [b]) K °श्रियत ।. — [c]) S तत (यत). — [d]) K °तार्क्ष°. S °नामांक°.

(1640) S. 2.140.5 (केशटस्य) मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशानां
वैरी न चेद्भवति वेपथुरन्तरायः ॥ ३ ॥

1641 S. 2.114.5 P. 123b (गोनन्दस्य) चेतः कातरतां विमुञ्च झटिति स्वास्थ्यं समालम्ब्यतां
प्राप्तासौ स्मरमार्गणव्रणपरित्राणौषधिः प्रेयसी ।
यस्याः श्वाससमीरसौरभपतद्भृङ्गावलीवारण-
क्रीडापाणिविधूतिकङ्कणझणत्कारो मुहुर्मूर्च्छति ॥ ४ ॥

1642 S. 2.41.5 कथाभिर्देशानां कथमपि च कालेन बहुना
समायाते कान्ते सखि रजनिरर्धं गतवती ।
ततो यावल्लीलाप्रणयकुपितास्मि प्रकुपिता
सपत्नीव प्राची दिगियमभवत्तावदरुणा ॥ ५ ॥

1643 विततकरेऽप्यनुरागिणि मित्रे कोषं सदैव मुद्रयतः ।
उचितानभिज्ञकैरव कैरवहसितं न ते चरितम् ॥ ६ ॥

1644 S. 5.50.3 पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोर्भवनम् ॥ ७ ॥ ↑ K. 111b

1645 गुरुरपि गलति विवेकः स्खलति च चित्तं विनश्यति प्रज्ञा ।
पतति पुरुषस्य धैर्यं विषयविषाघूर्णिते मनसि ॥ ८ ॥

1646 राजनि विद्वन्मध्ये वरसुरतसमागमे वरस्त्रीणाम् ।
साध्वसदूषितहृदयो वाक्पटुरपि कातरीभवति ॥ ९ ॥

---

**1640** ○ Smk. 86.14; Amd. 147; Daś. ed 2.24; PG. 302 (दामोदरस्य); KHV. 175; Skb. 1.105, 5.28, 5.477; ŚB. 2.219, 2.406, 3 49, 3.322, 3.381; Sab. 3.52 (21*a*); Sd. ad 3.105. **1641** — [a]) SP जहीहि सपदि. S स्थैर्यं समा-. — [b]) S आ(S1 सा)याता स्मर°; P दृष्टा सा स्मर°. — [c]) P °पतिर्भृङ्गा°. — [d]) S क्रीडाचंचल-पाणिकंकण-. P °विधूत-. ○ Smk. 70.8 (गोत्रानन्दस्य). **1642** S1 exchanges portions after caesura in *ab*. — [c]) S °कलहकुपितास्मि प्रियतमे. **1643** Before this N inserts 1327. — [a]) K मितत°. — [b]) K सदैवा-. **1644** — [b]) S1. 2 नाथ (देव). — [d]) S3 °भावयोः. S सदनम्. ○ Srh. 176.20; Kvv. p. 14; Prab. 68 (धनपालस्य); KHA. 323; Kpk. 307, 370; Kpd. p. 257, p. 295; SK. 6.236; Aś. p. 23 (ad 92); Ak.p. 244; Amd. 450; Sd. ad 7.20. **1646** ○ BIS. 5737 (2600), Hit. ed. Schl. 2.64; Srh. p. 170.749.

किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः । (1647)
अदातरि समृद्धेऽपि किं कुर्युरनुजीविनः ॥ १० ॥

अहमिह स्थितवत्यपि तावकी त्वमपि तत्र वसन्नपि मामकः । (1648)
हृदयसंगतमेव सुसंगतं न तनुसंगतमार्य सुसंगतम् ॥ ११ ॥

द्यामालोकयतां कलाः कलयतां छायाः समाचिन्वतां 1649 S. 5.24.1 (वसुधरस्य)
क्लेशः केवलमङ्गुलीर्दलयतां मौहूर्तिकानामयम् ।
धन्या सा रजनी तदेव सुदिनं पुण्यः स एव क्षणो
यत्राज्ञातचरश्चिरान्नयनयोः सीमानमेति प्रियः ॥ १२ ॥

तेषां त्वं निधिरागसामसहना मानोन्नता साप्यतो 1650 S. 5.24.2 (छित्तपस्य)
गन्तव्यं भवता न तद्गृहमिति त्वं वार्यसे यासि चेत् ।
गाढं मेखलया बलान्नियमितः कर्णोत्पलैस्ताडितः
क्षिप्तः पादतले तदेकशरणो मन्ये चिरं स्थास्यसि ॥ १३ ॥

जाने सासहना स चाहमपकृन्मय्यङ्गणस्थे पुनस् 1651 S. 5.24.3 (वसुंधरस्य)
तस्याः संभविता स साध्वसभरः कोऽपि प्रकोपापहः ।
यत्रोद्यत्पुलकैः प्रकम्पविकलैरङ्गैः क्व कर्णोत्पलं
कुत्रात्मा क्व च मेखलेति गलति प्रायः स मानग्रहः ॥ १४ ॥
तुरुष्कराजभोजदेवयोः ॥

जातानन्तरमेव यस्य मधुरां मूर्तिश्रियं पश्यतः 1652
सद्यःपुत्रमहोत्सवागतवधूवर्गस्य ↑ शृङ्गारिणः । ↑ K. 112a
उन्नीयान्ययुवास्यकालिमकरीं तारुण्यरम्यामिमां
धन्यं जन्म सहामुनैकसमयं न प्राप्य तप्तं हृदा ॥ १५ ॥
वल्लणस्य ॥

---

**1647** ○ Śp. 1372; Sbh. 472; Srh. 171.9; Pt. 9.116; Sb. 31b. 6; SK. 3.119; Any. p. 59.64, p. 133.202; Bps. 238; Srb. p. 71.12. **1648** ○ Srb. p. 284.13. **1649** — [c]) S धन्यः (पुण्यः). — [d]) K यत्र ज्ञात-. ○ KHV. 24; Kkk. ad 5.1. **1650** This and the next seem to be parts of dialogues. — [a]) K °रागमाससहता. — [b]) S1 हतस्पृहमिति. — [c]) S कर्णोत्पलेनाहतः. — [d]) S स्थास्यति. — [e]) S1 छित्तिपस्य. **1651** — [a]) S तथाहमसकृन्. S3 मण्यंगण-. — [b]) N °वितागसाध्वर°. S °रसः (°भरः). — [c]) S येनोद्यत्पुलक-. — [d]) S गलितः.

1653 सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
नागरकः किमु मिलितो नहि नहि सखि हैमनः पवनः ॥ १६ ॥

1654 S. 2.139.3 सव्रीडार्धनिरीक्षणं यदुभयोर्यद्दूतिकाप्रेषणं
वाद्य श्वो भविता समागम इति प्रीत्या प्रमोदश्च यः ।
प्राप्ते चैव समागमे सरभसं यच्चुम्बनालिङ्गनान्य्
एतत्कामफलं तदेव सुरतं शेषः पशूनामिव ॥ १७ ॥

(1655) S. 5.4.1 (सुबन्धोः) पश्योदञ्चदवाञ्चदञ्चितवपुः पश्चार्धपूर्वार्धभाक्
स्तब्धोत्तानितपृष्ठनिष्ठितमनाग्भुग्नाग्रलाङ्गूलभृत् ।
दंष्ट्राकोटिविसंकटास्यकुहरः कुर्वन्सटामुत्कटाम्
उत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केशरी ॥ १८ ॥

1656 S. 5.11.2 एते मेकलकन्यकाप्रणयिनः पाता↑लमूलस्पृशः ↑ N. 40a
संत्रासं जनयन्ति विन्ध्यभिदुरा वारां प्रवाहाः पुरः ।
लीलोन्मूलितनर्तितप्रतिहतव्यावर्तितप्रेरित-
त्यक्तस्वीकृतनिह्नुतप्रचलितप्रोद्धूततीरद्रुमाः ॥ १९ ॥

1657 S. 4.22.4 (भव्यस्य) वातैः शीकरबन्धुभिः श्रुतिसुखैर्हंसावलीनिस्वनैः
प्रोत्फुल्लैः कमलैः पयोभिरमलैर्नीत्वा जगन्निर्वृतिम् ।
पश्चात्क्षीणधनां बहिर्निजदशां दृष्ट्वा मृणालच्छलाद्
अर्थिभ्यः प्रददौ नवेन्दुविशदान्यस्थीनि पद्माकरः ॥ २० ॥

(1658) विद्यते स न हि कश्चिदुपायः सर्वलोकपरितोषकरो यः ।
सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ॥ २१ ॥

---

**1653** ○ Vmm. 3.26; Śp. 524 (धर्मदासस्य); Ssm. 824, 1395; Kuv. p. 30; BIS. 6472(2990); SK. 3.350; Aś. p. 34 (ad 13.1); Srb. p. 186.3. Generally — c) नागरिकः **1654** — b) S चाद्य. — c) K प्राप्तं. — d) S3 पशूनामपि (in errata). ○ Śp. 3780; Sbh. 2237; SK. 5.196. **1655** — a) S3 °रंचित°. — b) K °निष्ठुत-. S भुग्नार्ध-. K लांगूलमृत।. — c) S3 °विशंकटा°. S3 °शटामुत्कराम्. ○ Vās. 14 (p. 103). **1656** — c) S हेलोन्मूलितमर्दित-. — d) S °प्रकटित-. ○ Kvv. p. 35. **1657** — a) S शीकरवर्षिभिः. — b) K प्रोत्क्षुण्णैः; S उन्निद्रैः (प्रोत्फुल्लैः). S परां (जगन्-). — c) K °धनं. S बहन्निजतनुं धन्यो मृणाली-. ○ SG. 16a.

चापस्यैव परं कोटिविभवत्वं विराजते । 1659
यस्माल्लभन्ते ↑ लक्षाणि निर्गुणा अपि मार्गणाः ॥ २२ ॥ ↑ K. 1126

कृत्वापि कोषपानं भ्रमरयुवा पुरत एव कमलिन्याः । 1660
अभिलषति बकुलकलिकां मधुलिहि मलिने कुतः सत्यम् ॥ २३ ॥

ग्रामेऽस्मिन्पथिकाय नैव वसतिः पान्थाधुना दीयते (1661) S. 2.87.5
रात्रावत्र विवाहमण्डपतले पान्थः प्रसुप्तो युवा ।
तेनोद्गीय खलेन गर्जति घने स्मृत्वा प्रियां यत्कृतम्
तेनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥ २४ ॥

आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन । 1662
सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम् ॥ २५ ॥

उन्मुद्रीकृतविश्वविस्मयभरैस्तत्तन्महार्घैर्गुणैर् 1663
दुर्गाधे हृदयाम्बुधौ तव भवेन्नः सूक्तिगङ्गा यदि ।
विश्वश्चित्रमतङ्गिनीघनरसस्यन्दिन्यमन्दध्वनिर्
गङ्गासागरसंगमः पुनरिवापूर्वः समुन्मीलति ॥ २६ ॥

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुर- 1664 S. 2.76.1 (वल्लणस्य)
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि कुञ्जरकुलं जीवाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रांशुकैर्मा पिधाः ॥ २७ ॥

ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं 1665
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।

---

**1660** ○ Śp. 835; Sbh. 725; SK. 6.35; Any. p. 79.28; Jsv. 281.2. Generally. — [a]) कोश-. **1661** N substitutes 1505 for this. — [a]) S पांथ (नैव), नैव (पांथ). — [b]) S पश्यात्रैव विहार-. — [c]) S तत्कृतं. — [d]) S येनाद्यापि. ○ Śp. 3893; Sbh. 1771; Amś. 131; Vyk. ad 3.11; Vām. ad 1.2.13; ŚB. 4.426, 4.681. **1662** ○ Kir. 9.30; Any. p. 71.155; Srb. p. 296.3. **1664** — [a]) S1.2 °पाण्डर-. — [c]) K °पुत्री. S3 कुंभाभया-. — [d]) S °नाथति स्तनयुगं. ○ Kpk. 143; Vkj. 1.82, 2.23 (pratīka). **1665** — [b]) K °र्दृष्ट्वा तापं. — [c]) N सखीसु स्मेरासु; K सखीष्वस्मेरासु. — [d]) K विधुरं ॥. ○ Rat. 3.4; Daś. ad 4.11 (रत्नावल्यां); Pv. 287 (रत्नावल्याः); KHV. 596; ŚB. 4.449; Nāṭ ad 54 (रत्नावल्यां).

सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ॥ २८ ॥

(1666) गुणवदगुणवद्वा कुर्वता कर्मजातं परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ २९ ॥

1667 वर्षाः कर्दमहेतवः प्रतिदिनं ↑ तापस्य मूलं शरद् ↑ K. 113a
हेमन्ते जडता तथैव शिशिरेऽप्यायास्यते वायुना ।
चित्तोन्मादकरो वसन्तसमयो ग्रीष्मोऽपि चण्डातपः
कालः काल इति प्रहृष्यति जनः कालस्य का रम्यता ॥ ३० ॥

1668 दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ।
अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः ॥ ३१ ॥

(1669) आपातमात्ररसिके सरसीरुहस्य किं बीजमर्पयितुमिच्छसि वापिकायाम् ।
कालः कलिर्जगदिदं न कृ[त]ज्ञमज्ञे स्थित्वा हनिष्यति तवैव मुखस्य शोभाम्॥ ३२ ॥

(1670) अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः ।
दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः ॥ ३३ ॥

1671 अयं काणः शुक्रो विषमचरणः सूर्यतनयः
क्षताङ्गोऽयं राहुर्विकलमहिमा शीतकिरणः ।
अजानानस्तेषामपि नियतकर्मस्वकफलं
ग्रहग्रामग्रस्ता वयमिति जनोऽयं प्रलपति ॥ ३४ ॥

(1672) S. 4.16.1 (अचलस्य) कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रतिबध्यते ।
न स विरौति न चापि पलायते भवति योजयितुर्वचनीयता ॥ ३५ ॥

---

**1666** — [a]) K कर्म्मजातं. ○ Bh. 45; Śp. 1391; Srh. p. 93.82, p. 176.973; Sbh. 2394; Shv. A. 94*b*. 45; Ssv. 365; Bpb. 24; BIS. 2122 (843). **1669** — [b]) K बीजमर्जयितुम्. ○ Skb. 4.60, 5.481; ŚB. 2.399; 3.182; Kuv. p. 114; Srb. p. 313.55. Generally. — [d]) हरिष्यति. **1670** ○ Srb. p. 164.486; BIS. 473 (176), Hit. ed. Schl. 2.126, ed Johns. 131. **1672** — [a]) K °नोठितौ. — [b]) S2.3 प्रतिरूध्यते. — [c]) S1.2 वियौति. S चापि न शोभते. ○ Sbh. 898 (पञ्चतन्त्रे); Srh. 29.32; Any. p. 89.36; BIS. 1526 (595) Pañc. ed. Koseg. 1.85, ed. Orn. 67, ed. Bomb. 75. Hit. ed. Schl. & Johns. 2.71.

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा (1673)
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किममरैः किं च विधिना
नमः सत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ३६ ॥

यदा विगृह्णाति तदा हतं यशः करोति मैत्रीमथ दूषिता गुणाः । (1674)
स्थितः समीक्ष्योभयथा परीक्षकः करोत्यवज्ञोपहतं पृथग्जनम् ॥ ३७ ॥

तृष्णे देवि नमस्तुभ्यं कृतकृत्यासि सांप्रतम् । (1675)
अनन्तनाम यद्रूपं तत्त्वया वामनीकृतम् ॥ ३८ ॥

पुरा याताः केचित्तदनु चलिताः केचिदपरे ↑K. 113b (1676)
विषादः कोऽस्माकं नहि न वयमप्यत्र गमिनः ।
मनःखेदस्त्वेवं कथमकृतसंकेतविधयो
महामार्गेऽस्मिन्नो नयनपथमेष्यन्ति सुहृदः ॥ ३९ ॥

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां (1677)
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ ४० ॥

अध्वन्यस्य वधूर्वियोगविधुरा भर्तुः स्मरन्ती यदि (1678)
प्राणानुज्झति कस्य तन्महदहो संजायते किल्बिषम् ।
इत्येवं पथिकः करोति हृदये यावत्तरोर्मूर्धनि
प्रोद्घुष्टं परपुष्टया तव तवेत्युच्चैर्वचोऽनेकशः ॥ ४१ ॥

---

**1673** ○ Bh. 22. — [d]) नमस्तकर्मभ्यो; Śān. 1.1; Srb. p. 93.88; Śp. 436. (भर्तृहरेः); Sbh. 3079; Srh. 34.24 (काव्यप्रकाशे); Yaśastilakacampū (KM. 70) II p. 256; Shv. A. 62*a*. 643, B. 1*a*. 38; Ssv. 317; Jsv. 262.3; BIS. 3367 (1431). **1674** ○ Kir. 14.24; Sbh. 436 (भारवेः); Srb. p. 174.904; Sb. 29*a*. 78 (भारवेः). **1675** ○ Cf. Śp. 420, cf. Ssm. 1546, cf. SK. 2.206. **1677** ○ Bh. 95; Smk. 53.12 (बागस्य); Śp. 3300 (बाणभट्टस्य); Sbh. 2246; Srb. p. 260.112; Shv. B. 4*a*. 33; SK. 5.135; Ssv. 1369; Slp. 4.12. **1678** — [b]) K प्राणानुजति. ○ Smk. 59.37; Śp. 3823; Sbh. 1687; Srb. p. 335.143 (var.)

(1679) अद्राक्षीदपनिद्रकोरकभरव्यानम्रवल्लीस्खलद्-
धूलीदुर्दिनसूदिताम्बरमसावुद्यानमुर्वीपतिः
आस्थानीभवनं वसन्तनृपतेर्देवस्य चेतोभुवः
सत्रागारमनुत्तरं मधुलिहामेकं प्रपामण्डपम् ॥ ४२ ॥

1680 मदनज्वरमपनेतुं कुरु संप्रति सततमौषधद्वितयम् ।
बालाधरमधुपानं कुचपीडनमुष्टियोगं च ॥ ४३ ॥

(1681) उपचारविधिज्ञोऽपि निर्धनः किं करिष्यति ।
निरङ्कुश इवारूढो मत्तद्विरदमूर्धनि ॥ ४४ ॥

(1682) कस्या नाम किमत्र नास्ति विदितं यद्वीक्ष्यमाणोऽप्ययं
लोको मूक इवास्ति मां प्रति पुनः सर्वो जनस्तप्यते ।
शक्यं दर्शयितुं न पूगफलवत् कृत्वा द्विधेदं वपुर्
यत्सत्यं सखि वीक्षितः खलु मया नूनं चतुर्थ्याः शशी ॥ ४५ ॥

(1683) खुराघातैः शृङ्गैः प्रतिदिनमलं ↑ हन्ति पथिकान् ↑K. 1144
भृशं शस्योत्सादैः सकलनगराख्यातपटिमा ।
युगं नैव स्कन्धे वहति नितरां याति धरणीं
वरं शून्या शाला न च पुनरयं दुष्टवृषभः ॥ ४६ ॥

(1684) पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरवधार्यते ॥ ४७ ॥

1685 धिक् चन्दनं क्वैव सुधा वराकी किमिन्दुना हारितमब्जकन्दैः ।
न वेद्मि तद्वस्तु यदत्र लोके सुताङ्गधूलेरुपमानपात्रम् ॥ ४८ ॥

(1686) यौवनं चलमपायि शरीरं गत्वरं वसु विमृश्य विशिष्टः ।
नान्यजन्मगततिक्तविपाकं दृष्टसौख्यमपि कर्म विधत्ते ॥ ४९ ॥

---

**1679** — [b]) K °मुदिमाम्बर॰ **1682** — [c]) K कृत्वान्विधैदं॰ **1683** — [b]) K °पटिन ।॰ — [c]) K धरिणीं॰ **1684** ∩ Ut. 3.29; BIS. 4165. **1685** — [a]) K किक्कन्दनं॰ — [b]) K रिमिंदुना॰ — [d]) K रूपमानमात्रं॰ **1686** — [a]) K योवतं॰

अधोऽधः पश्यतः कस्य महिमा नोपजायते । 1687
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ ५० ॥

तिमिरमिदमिन्दुबिम्बात्पूतिर्गन्धोऽयमम्बुरुहकोषात् । 1688
निन्दितमभिजातमुखाद्यदलीकं वचनमुच्चरति ॥ ५१ ॥

यो नीवारतृणाग्रमुष्टिकवलैः संवर्धितः शैशवे (1689) S. 4.41.3
पीतं येन सरोजिनीदलपुटे होमावशिष्टं पयः । (मनोकस्य)
तद्दानासवपानमत्तमधुपव्यालोलगण्डं गजं
सोत्कण्ठं सभयं च पश्यति शनैर्दूरे स्थितस्तापसः ॥ ५२ ॥

पाणिप्रेङ्खणतो विशीर्णशिरसः स्वेदावरुग्णश्रियस् (1690) S. 2.106.2
ता इत्याकृतिलेशतो मनसि नः किंचित् प्रतीतिं गताः ।
वैचित्र्यात्पुनरुक्तलाञ्छनभृतः खण्डेन वाक्येन वा
व्याक्षेपं कथयन्ति पक्ष्मलदृशो लेखाक्षरश्रेणयः ॥ ५३ ॥

ताडीदलं यदकठोरमिदं यदत्र मुद्रा स्तनाङ्कघनचन्दनपङ्कमूर्तिः ↑ । ↑ N. 40b 1691 S. 2.106.1
यद्बन्धनं बिसलतातनुतन्तवश्च कस्याश्चिदेष गलितस्तदनङ्गलेखः ॥ ५४ ॥ (कस्यचित्)

मृणाल↑मेतद्वलयीकृतं तया तदीय एवैष वतंसपल्लवः । ↑ K. 114b (1692)
इदं च तस्याः कदलीदलांशुकं यदत्र संक्रान्त इव स्मरज्वरः ॥ ५५ ॥
राजशेखरस्यामी ॥

मधुर्मासो रम्यो विपिनमजनं त्वं च तरुणी 1693
स्फुरत्कामावेशे वयसि वयमप्याहितभराः ।
व्रजत्वम्बा मुग्धे क्षणमिह विलम्बस्व यदि वा
स्फुटस्तावज्जातः पिशुनवचसामेष विषयः ॥ ५६ ॥
वल्लणस्य ॥

---

**1687** ○ BIS. 231 (83) Hit. 2.2; Srb. p. 163.467. **1688** — [c]) K निन्दत-. **1689** — [a]) S नीवारप्रसवाग्रमुष्टिकवलैर्यो वर्धितः. K शैशवं. — [c]) S तं दानावसरे तु. K मजं (गजं). — [d]) S सानंदं. S मुहुर्द्वारेस्थितस्. K दूरेस्थित°. Sbh. 637; Śp. 54.1. **1690** The Rājaśekhara stanzas seem to begin here. — [a]) S स्वेदांबु-. K °रुग्न-; S °भग्न-. — [b]) S तत्कृत्याकृति-. S ते (नः). — [c]) $S_2$ बाह्येन; $S_3$ वामेन (वाक्येन). — [d]) K व्याख्यायं (व्याक्षेपं.). ○ Vid. 3.22. **1691** — [a]) S यदेषा. — [c]) K विपलता-. S °तंतुभिश्च. ○ Vid. 3.21. **1692** — [a]) K वतंसुपल्लवः. ○ Vid. 3.18. **1693** — [b]) K °हिततराः ।. ○ Smk. 70.2 (बिल्हणस्य).

1694 मुनीन्द्रोर्वाग्विन्दुः प्रविततसुधापूरपरमो
न चेच्चिन्तापात्रे मिलति कथमप्यस्य मनसः ।
कुतः प्राप्य प्रीतिं तुहिनगिरिगर्भस्थितिजुषोऽ-
प्यसह्यः सह्येत प्रियविरहदाहव्यतिकरः ॥ ५७ ॥
धर्मकीर्तेः ॥

1695 सर्वस्यैव हि लोकस्य बहुमानं यदात्मनि ।
विष्णोर्मायासहस्रस्य इयमेका गरीयसी ॥ ५८ ॥

1696 कृशः काणः खञ्जः श्रवणविकलः पुच्छरहितः
क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः ।
व्रणैः पूयक्लिन्नैः क्रिमिकुलचितैराचिततनुः
शुनीमभ्येति श्वा हतमपि निहन्त्येव मदनः ॥ ५९ ॥

1697 तरन्तो दृश्यन्ते बहव इह गम्भीरसरसि
स्वसाराभ्यामाभ्यां हृदि विदधतः कौतुकशतम् ।
प्रविश्यान्तर्लीनं किमपि सुविवेच्योद्धरति यश्
चिरं रुद्धश्वासः स खलु पुनरेतेषु विरलः ॥ ६० ॥
N. पण्डितज्ञानश्रियः ॥

॥ इति संकीर्णव्रज्या ॥ ४९ ॥

## ॥ ततः कविस्तुतिव्रज्या ॥ ५० ॥

1698 S. 5,26.5 सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते
धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम् ।
विशुद्धोक्तिः शूरः प्रकृतिसुभगा भारविगिरस्
तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते ॥ १ ॥ ↑K. 115a

**1694** — [d]) K [ऽ]प्यलक्ष्यः. **1695** — [b]) K बद्धमानं. **1696** ⊃ Bh. 2; Sbh. 3390; Srb. p. 371.132; Auc. ad 16 (चन्दकस्य). Nami ad Rudraṭa 7.76. **1697** — [a]) K°सरनि. — [d]) K पुनरेते विवलः. — [e]) K ज्ञान-. मित्रस्य. ॥ Vrajyā **50** : K ततो करतुतिव्रज्या ॥. **1698** — [a]) S1 इह वसुकल्पे.

तातः सृष्टिमपूर्ववस्तुविषयामेकोऽत्र निर्व्यूढवान् 1699 S. 5.26.1 (भवानन्दस्य)
निष्णातः कविकुञ्जरेन्द्रचरिते मार्गे गिरां वागुरः ।
रेवाविन्ध्यपुलीन्द्रपामरवधूझञ्झानिलप्रेषित-
प्रायेऽर्थे वचनानि पल्लवयितुं जानाति योगेश्वरः ॥ २ ॥

अभिनन्दस्य ॥

पातुं कर्णरसायनं रचयितुं वाचः सतां संमतां 1700 S. 5.27.3
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादुफलं च जीविततरोर्यद्यस्ति ते कौतुकं
तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥ ३ ॥

शंकरवर्मणः ॥

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं 1701 S. 5.27.5
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरताम्
आपातालविलग्नपीवरवपुर्जानाति मन्थाचलः ॥ ४ ॥

तत्तादृगुज्ज्वलककुत्स्थकुलप्रशस्तिसौरभ्यनिर्भरगभीरमनोहराणि । 1702
वाल्मीकिवागमृतकूपनिपातलक्ष्मीमेतानि बिभ्रति मुरारिकवेर्वचांसि ॥ ५ ॥

मुरारेरेतौ ॥

धिग्धिक्तान्समयान्परिश्रमरुजो धिक्ता गिरो निष्फला 1703 S. 5.27.4
यत्रामूर्न भवन्ति वल्गुणगुणोत्खातामृतप्रीतयः ।
रोम्णां नृत्यभुवो विलोचनपयःपूराब्धिचन्द्रोदयाः
साहित्यप्रतिगण्डगर्वगलनग्लानिक्रियाहेतवः ॥ ६ ॥

---

**1699** — [a]) S बाणः(तातः) S1.2 °मेकत्र-. — [b]) S वा गुरुः ।. — [c]) S3 वेधा-. S °पुलिंद°. S भूगोलझंझानिल-. **1700** — [d]) S1 °स्यंदनीः. — [e]) S3 शङ्कार्णवस्य. ○ Vid. 1.7; Bāl. 1.17; Shv. A. 37*b*. 192 (श्रियंकरवर्मणः); Smk. 4.99 (श्रीशंकरवर्मणः). **1701** — [a]) K ये संत्येवमुपासते. — [b]) K जामीते. S2 गुरुकुले. — [d]) S °निमग्नपीवरतनुर् (S1 °वपुर्). ○ Anr. before 1.12 in some versions; Kuv. p. 58; BIS. 2954 (1239); SK. 2.31; Ak. p. 290. **1702** — [a]) NK °ककुस्थ°. ○ Anr. 1.12. **1703** — [a]) S वक्तुं गिरो नीरसा. — [b]) K यत्रानुर्. S °निं(S3 °तिं°)पतंति. — [c]) K रोष्णो नृत्य°. S2 °पूरोब्धि-. — [d]) K साहित्यं. S3 °गलनं.

1704 उत्तानोल्लपितप्रतारितनवश्रोत्रैः कथं भाव्यतां
वाक्प्रत्यंशनिवेशिताखिलजगत्तत्त्वा कवीनां कला ।
रथ्यागर्तविगाहनाद्भुतकृतैर्गाह्यः क्व रत्नाकरो
यस्यान्तःशफरावमाननतटीमज्जद्गिरीन्द्राः श्रियः↑ ॥ ७ ॥ ↑ N. 41a

1705
S. 5.32.5
(धर्माशोकस्य)
अनुद्धुष्टः शब्दैरथ च घटनातः स्फुटरसः ↑ K. 115b
पदानामर्थात्मा रमयति न तूत्तानितरसः ।
यथा किंचित्किंचित्पवनचलचीनांशुकतया
स्तनाभोगः स्त्रीणां हरति न तथोन्मुद्रिततनुः ॥ ८ ॥

**वल्लणस्यैते ॥**

(1706)
S. 5.26.2
(भोजदेवस्य)
अस्तंगतभारविरवि कालवशात्कालिदासविधुविधुरम् ।
निर्वाणबाणदीपं जगदिदमद्योति रत्नेन ॥ ९ ॥

1707 जानकीहरणं कर्तुं रघुवंशे पुरःस्थिते ।
कविः कुमारदासो वा रावणो वा यदि क्षमः ॥ १० ॥

(1708) शब्दास्ते न तथाविधाः पथि धियां लोकस्य ये नासते
नार्थात्मापि स कोऽपि धावति गिरां भूपालमार्गे न यः ।
अस्त्यन्यस्तु स संनिवेशशिशिरः शब्दार्थयोः संगमो
येनामी स्ववशेन दग्धकवयो मथ्नन्ति चेतांसि नः ॥ ११ ॥

1709 जयति कविकण्ठहारः श्रीरघुकारः प्रमेयकेदारे ।
यन्मतिदात्रविलूने शिलोञ्छमिव कुर्वते कवयः ॥ १२ ॥

(1710) कवीनामगलद्दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥ १३ ॥

---

**1704** — [a]) K उत्तालो°. — [c]) K °गाहनौद्धत-. K °ग्राह्य. — [d]) K शफराधमा°. K °मज्जङ्गिरीन्द्रीः. **1705** — [a]) S1 अनुद्धर्णः. S घटनात्प्रस्फुट-. — [b]) S1 न हृत्तानित-. — [c]) S किंचिद्दृश्यः. S1.2 °चीणांशुक-. — [d]) S1 °रमः; S2.3 वपुः (तनुः). — [e]) K वल्लण ॥. ○ Smk. 4.36 (धर्माशोकस्य); Shv. A. 39a. 205 (धर्माशोकस्य); Amd. 285. **1706** — [b]) K कालिदास°. **1707** — [d]) N before correction and K रामणो. ○ Smk. 4.76 (राजशेखरस्य). **1708** — [b]) K नाथान्मापि. **1710** ○ Harṣacarita 1.11; Smk. 4.54 (बाणस्य); Shv. A. 41a. 246 (श्रीराजशेखरस्य).

कीर्तिः प्रवरसेनस्य प्रयाता कुसुमोज्ज्वला । 1711
समुद्रस्य परं पारं कपिसेनेव सेतुना ॥ १४ ॥

सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे । 1712
उत्पादका न बहवः कवयः शरभा इव ॥ १५ ॥

बाणस्वामी ॥

कवयः कालिदासाद्याः कवयो वयमप्यमी । 1713
पर्वते परमाणौ च वस्तुत्वमुभयोरपि ॥ १६ ॥

सौजन्याङ्कुरकन्द सुन्दरकथासर्वस्व सीमन्तिनी- 1714 S. 3.11.2 (अभिनन्दस्य)
चित्ताकर्षणमन्त्र मन्मथसरित्कल्लोल वाग्वल्लभ ।
सौभाग्यैकनिवेश पेशलगिरामाधार धैर्याम्बुधे
धर्माद्रिद्रुम राजशेखर सखे दृष्टोऽसि यामो वयम् ॥ १७ ॥

यदेतद्वागर्थव्यतिकरमयं किंचिदमृतं ↑ K. 116a (1715) S. 5.32.1 (हृषीकेशस्य)
प्रमोदप्रस्यन्दैः सहृदयमनांसि स्नपयति ।
इदं काव्यं तत्त्वं स्फुरति तु यदत्राणु परमं
तदन्तर्बुद्धीनां स्फुटमथ च वाचामविषयः ॥ १८ ॥

सुवर्णालङ्कारा प्रकटितरसाश्लेषनिपुणा 1716 S. 5.31.1 (सार्कोकस्य)
स्फुरद्वैदर्भौक्तिर्ललितपदबन्धक्रमगतिः ।
लसद्भ्रूयोभावा मृदुरपि विमर्दोचिततनुः
कवीन्द्र त्वद्वाणी हरति हरिणाक्षीव हृदयम् ॥ १९ ॥

अम्बा येन सरस्वती सुतवती तस्यार्पयन्ती रसान् 1717
नानाचाटुमुखी स दुर्ललितवान् खेलाभिरुच्छृङ्खलः ।

---

**1711** — b) K कुसुदोज्ज्वला. ○ Harṣacarita 1.14; Smk. 4.62 (बाणस्य); Shv. A. 41a (? बाणस्य). **1712** — e) N बाणस्यैते (as 1710 is not in N). ○ Harṣacarita 1.5; Śp. 157 (बाणभट्टस्य); BIS. 6788; Akp. 145. **1713** ○ Śp. 175 (कृष्णभट्टस्य); Shv. A. 32a. 113 (कृष्णभट्टस्य); Ssv. 780. **1714** — b) S मन्मथसुहृत्क°. — d) S राजशेखरकवे. **1715** — a) S1.2 °द्वाक्यार्थं°. — b) S तदानंदस्यंदैः. — c) K त्वत्र (तत्त्वं). K त्र (तु). S2.3 यदत्रानु-. ○ Smk. 4.34. **1716** — d) K कवींद्रं. — e) S1 सोकोकस्य. **1717** — b) N सदर्लं°. — d) K इष्ट्वाध्वमित°.

जिह्वादुर्व्यसनैरुपद्रवरुजः कुर्वन्ति ये दुःसुतास्
तान्दृष्ट्वार्थमितस्ततो निखनति स्वं निःस्वमातन्वती ॥ २० ॥
वल्लणस्य ॥

1718 अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥ २१ ॥
सुबन्धोः ॥

1719 बभूव वल्मीकभवः पुरा कविस्ततः प्रपेदे भुवि भर्तृमेठताम् ।
पुनः स्थितो यो भवभूतिरेखया स वर्तते संप्रति राजशेखरः ॥ २२ ॥

1720 उच्छ्वासोऽपि न निर्याति बाणे हृदयवर्तिनि ।
किं पुनर्विकटाटोपपदबन्धा सरस्वती ॥ २३ ॥

1721 यल्लग्नं हृदि पुंसां भूयो भूयः शिरो न घूर्णयति ।
तदपि कवेः किमु काव्यं काण्डो वा धन्विनां किमसौ ॥ २४ ॥
तामरसस्य ॥

(1722) कथंचित्कालिदासस्य कालेन बहुना मया ।
अवगाढेव गम्भीरमसृणौघा सरस्वती ॥ २५ ॥

1723
S. 3.3.4
कश्चिद्वाचं रचयितुमलं श्रोतुमेवापरस्ताम्
कल्याणी ते मतिरुभयतो विस्मयं नस्तनोति ।
नह्येकस्मिन्नतिशयवतां संनिपातो गुणानाम्
एकः सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्यः ॥ २६ ॥
कालि↑दासस्य ॥ ↑K. 116b

(1724)
S. 5.27.2
(शालिकनाथस्य)
प्रयोगव्युत्पत्तौ प्रतिपदविशेषार्थकथने
प्रसत्तौ गाम्भीर्ये रसवति च वाक्यार्थघटने ।

---

**1718** ○ Vāsavadattā 11; Smk. 4.13 (सुबन्धोः); Śp. 145 (सुबन्धोः) Shv. A. 37*a*. 186 (सुबंधोः); BIS. 680 (247); Pt. 3.21; SK. 2.11; SG. 2.11; Sd. ad 10.50. **1719** ○ Bāl. 1.16; Bālabhārata 1.12, both. — [b]) भर्तृमेण्ठ°. **1721** — [e]) K तामरस्य ॥. **1723** — [a]) N वारं; S वाचो (वाचं). S वोढुमेवा°. K°परस्थां; S1.3°परस्ताः; S2°परास्ताः. — [b]) S सा कल्याणी. S उभयथा. — [c]) K नक्षे°; S नन्वे° (नह्ये°). S संनिवेशो. — [d]) S कनकमनलस्. — [e]) K कालिदाशः ॥. ○ Kav. p. 14. **1724** — [b]) S1.2 काव्यार्थरचने. — [c]) S °णतेरर्थ-. — [e]) K शालिक ॥.

अगम्यायामन्यैर्दिशि परिणतेश्चार्थवचसोर्
मतं चेदस्माकं कविरमरसिंहो विजयते ॥ २७ ॥
शालिक[स्य] ॥

इयं गौरुद्दामा तव निविडबन्धापि हि कथं N. *lm.* 40*b* 1725 S. 5.31.5
न वैदर्भादन्यत्स्पृशति सुलभत्वेऽपि हि कथम् ।
अवन्ध्या च ख्याता भुवि कथमगम्या कविवृषैः
कथं वा पीयूषं स्रवति बहु दुग्धापि बहुभिः ॥ २८ ॥
शब्दार्णवस्य ॥

शैलैर्बन्धयति स्म वानरहृतैर्वाल्मीकिरम्भोनिधिं (1726) S. 5.75.4
व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते ।
वागर्थौ च तुलाधृताविव तथाप्यस्मन्निबन्धानयं
लोको दूषयति प्रसारितमुखस्तुभ्यं प्रतिष्ठे नमः ॥ २९ ॥
धर्मकीर्तेः ॥

हा कष्टं कविचक्रमौलिमणिना दक्षेण यन्नेक्षितः 1727
श्रीमानुत्पलराजदेवनृपतिर्विद्यावधूवल्लभः ।
तस्याप्यर्थिजनैकरोहणगिरेर्लक्ष्मीर्वृथैवाभवद्
दक्षस्यास्य न येन सुन्दरगिरः कर्णावतंसीकृताः ॥ ३० ॥
दक्षस्य ॥

यस्य यथा विज्ञानं तादृक्तस्येह हृदयसद्भावः । (1728)
उन्मीलति कविपुङ्गववचने च पुराणपुरुषे च ॥ ३१ ॥

वहति न पुरः कश्चित्पश्चान्न कोऽप्यनुयाति मां N. *um.* 41*a* 1729
न च नवपदक्षुण्णो मार्गः कथं न्वहमेककः ।
भवतु विदितं पूर्वव्यूढोऽधुना खिलतां गतः
स खलु बहलो वामः पन्था मया स्फुटमुर्जितः ॥ ३२ ॥
N. धर्मकीर्तिपादानाम् ॥

---

**1725** — [b]) S °दन्यच्चरति. — [c]) K °मगस्या. — [d]) S3 कविभिः ॥. **1726** — [a]) S1 वानरकृतैर्. — [c]) K वाङ्गोऽर्थं. K °प्यस्मिन्निबंधा°; S °प्यसत्प्रबंधा°. — [d]) S दूषयितुं. ○ Prab. 70 (धनपालस्य). **1727** — [c]) NK °लैक्ष्मी वृथे°. — [d]) K °वतंशी°. **1729** — [e]) K धर्मकीर्त्तेः ॥.

(1730) विद्यावधूमपरिणीय कुलानुरूपां श्लाघ्यां सुतामिव ततः श्रियमप्रसूय ।
तां चार्थिने प्रणयपेशलमप्रदाय धिक्तं मनुष्यपदमात्मनि यः प्र↑युङ्क्ते ॥३३॥ ↑K.117a
भर्तृहरेः ॥

(1731) ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यते तु मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च लक्ष्मीः ॥३४॥
चेः ॥

1732 S. 5.25.4 निधानं विद्यानां कुलगृहमपारस्य यशसः
शुचि क्ष्मापालानां सुचरितकथादर्पणतलम् ।
कलासंपद्रत्नव्रततिविटपानां सुरतरुः
प्रकृत्या गम्भीरः कविरिह सशब्दो विजयते ॥ ३५ ॥

(1733) S. 5.26.4 (अभिनन्दस्य) उन्नीतो भवभूतिना प्रतिदिनं बाणे गते यः पुरा
यश्चीर्णः कमलायुधेन सुचिरं येनागमत्केशटः ।
यः श्रीवाक्पतिराजपादरजसां संपर्कपूतश्चिरं
दिष्ट्या श्लाघ्यगुणस्य कस्यचिदसौ मार्गः समुन्मीलति ॥ ३६ ॥
योगेश्वरस्य ॥

(1734) परमाद्भुतरसधामन्युत्सलिते जगति वल्लनाम्भोधौ ।
विश्रान्तो रसभागस्तिमितयति यथा गभीरिमा कोऽपि ॥ ३७ ॥
वल्लण[स्य] ॥

(1735) आढ्यराजकृतारम्भैर्हृदयस्थैः स्मृतैरपि ।
जिह्वान्तःकृष्यमाणेव न कवित्वे प्रगल्भते ॥ ३८ ॥
बाणस्य ॥

(1736) वाल्मीकेर्मुकुलीकृतैव कविता कः स्तोतुमस्यादरो
वैयासानि वचांसि भारविगिरां भूतैव निर्भर्त्सना ।

---

**1730** — [c]) K प्रणयपेशलसुप्रदाय. — [e]) K भत्तृहरेः ॥. **1731** ○ Māl. 1.8. — [d]) पृथ्वी: ॥; Kuv. p. 192; KHA. 356; Kpk. 190; Kpd. p. 196; Amd. 381; Vyk. ad 2.5. **1732** S order *acbd*. — [a]) S3 निदानं. — [b]) S शुचिक्षोणींद्राणां. — [c]) K °वितपानां. — [d]) S कविरिति हि शब्दो. **1733** — [a]) S प्रतिपदं. — [b]) S सततं (सुचिरं)-. K केसटः। — [c]) S °भूतिश्चिरं. **1735** ○ Harṣacarita 1.18. **1736** — [a]) K कविना. — [c]) K धर्मायनं.

काव्यं चेदवतंसभूपमभजद्धर्मायणं कर्णयोस्
तातः किं बहु वर्ण्यते स भगवान् वैदर्भगर्भेश्वरः ॥ ३९ ॥
धर्माशोकस्य ॥

वामाङ्गं पृथुलस्तनस्तबकितं यावद्भवानीपतेर् 1737
लक्ष्मीकण्ठहठग्रहव्यसनिता यावच्च दोष्णां हरेः ।
यावच्च प्रतिसामसारणविधिव्यग्रौ करौ ब्रह्मणः
स्थेयासुः श्रुतिशुक्तिलेह्यमधवस्तावत्सतां सूक्तय↑ः ॥ ४० ॥ ↑K. 117b

कीर्त्या समं त्रिदिववासमुपस्थितानां मर्त्यावतीर्णमरुतामपि सत्कवीनाम् । 1738
जग्रन्थ दुर्लभसुभाषितरत्नकोषं विद्याकरः सुकृतिकण्ठविभूषणाय ॥ ४१ ॥

॥ इति कविवर्णनव्रज्या समाप्ता ॥ ५० ॥

(N. Colophon:)

**॥ समाप्तोऽयं सुभाषितरत्नकोष इति ॥**

**( ॥ पण्डितश्रीभीमार्जुनसोमस्य ॥ )**

(K. Colophon:)

परस्य मोषं विनयव्यतिक्रमादयं जनः कर्तुमतीव पण्डितः । (1739)
स्वयं च नामाविनयेषु वर्तते कथं न यद्वेष्टि तदेव चेष्टते ॥

**जादस्ता पुस्तकं दस्ता तादस्तं रिखितं मया । जदि शुद्धमशुधं वा मम दोष न दीयते ॥ * ॥ शुभ ॥ सम्वत् ८३० ॥ ज्येष्ठशुक्लपूर्णिमा ॥ श्रमवालकुहुसिद्धिपाद । रेखक दैवज्ञधननामः ॥ शुभः ॥**

---

**1737** ○ Vid.4.23 (final). — [d]) °लेह्यमधुरा°. **1738** — [c]) K यद्ग्रन्थ. Vrajyā **50** : K समाप्तं ॥. N colophon: second line by later hand, probably denoting an owner of the codex. **1739** — [a]) K परमष्वमषन्वि°. K colophon: the correct reading of the scribe's verse is: यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥.

## श्लोकानां सूची ॥

## ॥ परिशिष्टम् ॥

Extra stanzas in P, not found in V, but attributed to authors cited in V; heavily emended where necessary. The number in P (by direct count) precedes.

**अभिनन्द —**

६८८ (=स० २. १६९. १ - **कस्यचित्**): पारावारे प्रकटपुलिनाभ्युद्गमोत्तारपाण्डुर् लीलावर्तस्तिमितचलनव्यञ्जितोद्देशनिम्ना। क्रौञ्चीजानुद्वयसपयसामन्तरीपोदरेषु स्वच्छा वेणिर्मदयति मनः शारदीनां नदीनाम् ॥ १ ॥ १३६८ : गिरयो मृगविरहिकुलाः शबरवृतं वनमसाधवो ग्रामाः। मृग नास्त्येव पदं तव यस्मिन्नकुतोभयो भवसि ॥ २ ॥ ६१० : त्यजति पवनः सायं सायं हिमानि शनैः शनैः सरसि सरसि प्रातः प्रातर्नवं नवमम्बुजम् । तरुषु तरुषु ग्रन्थिग्रन्थिर्नवाङ्कुरदन्तुरो रुजति रुजति स्वस्थावस्थं जनं जनमुत्कता ॥ ३ ॥ ३५० : मन्दमन्दमुदयन्तमम्बरादिन्दुमिन्दुवदने विलोचय। नाकनायकनिकायकामिनीकेलियानकलनैकभाजनम् ॥ ४ ॥ ७१३ : विष्यन्दं न परिस्तृणाति वियति ज्योत्स्नावितानं शशी नोद्गायन्ति मधुव्रता न तरवस्तन्वन्ति पुष्पाञ्जलिम् । नैवाद्यापि निवर्तते किशलयं वल्लीषु ताम्रोदरं दूरारम्भमनङ्गरङ्गरचनं लोकस्तु पर्युत्सुकः ॥ ५ ॥

**कविराज —**

१०२९ (=स० २. ५३. २ - **कस्यचित्**): अस्तव्यस्तसमीरकम्पिततया दृष्टेस्तिरस्कारिणीं हस्तेनालकवल्लरीमकुटिलामानीय कर्णान्तिकम् । उद्वीक्ष्य प्रियमार्गमध्वगवधूरस्तं गते भास्वति च्छिन्नाशा स्वनिवेशमेति शनकैः स्वप्नेक्षणाशंसिनी ॥ ६ ॥ ८०८ : प्रियानेत्रमुखच्छायाहृतलावण्यशेषयोः। समानदुःखयोरैक्यमुक्तं पक्षगचन्द्रयोः ॥ ७ ॥

**कविशेखर —**

२७६ : भित्त्वा वक्षः सुरारेः कुलिशदृढतराघातविच्छिन्नहारं संध्याताम्रेन्दुलेखाकुटिलनखशिखासक्तमांसोपलेखः । यत्नादाकृष्य भानोर्घनरुधिरवसां सान्द्रदिग्धाङ्गुलीकः पाणिः सव्येतरोऽसौ जयति विजयिनः शार्ङ्गिणः सिंहमूर्तेः ॥ ८ ॥ ५५९ : यत्कम्बोः क्रकचावदारणमयं शेषस्य पृथ्वीमयः क्लेशश्चन्दनशाखिनामपि वने निर्वासनप्रक्रिया । पूर्णेन्दोर्मुखकालिमाविधितिरस्कारेण यद्भ्रामणं तन्मन्ये विधिना भवद्भुजयशःस्पर्धासु दण्डः कृतः ॥ ९ ॥ ३२३ : रक्ताम्बरः कनकशैलविशालवेद्यो नित्यप्रदक्षिणपरिक्रमणक्रमज्ञः। दिग्मण्डलीः प्रकटयन् जगदेकवन्द्यो भास्वानरोगयतु वः प्रकटोदयश्रीः ॥ १० ॥ ३७० : रामाणां प्रमदाय जन्म विपदो मित्रस्य नित्यं रुचिः प्रीतिः सारसनिग्रहात्कुशलता मारावतारोत्सवे। यस्यैवं शशिनो विवेकविरहस्तस्यायमङ्के पशुर्युक्तं कैरवहास्यमस्य पुरतो मुक्तं जगद्घूर्णते ॥ ११ ॥

**कालिदास —**

३८६: अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः। कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ १२ ॥ ८६८ : आकृष्टबालतरुपल्लवलोभनीयं पीतं मया सभयमेव

रतोत्सवेषु । बिम्बाधरं दशसि चन्द्र मम प्रियायास्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ १३ ॥ ८७० : इदमप्युपकृतिपाक्षं सुरभिमुखं ते [प्रिये] मयाघ्रातम् । ननु कमलस्य मधुकरः संतुष्यति गन्धमात्रेण ॥ १४ ॥ ७३७ : इदमुपहतसूक्ष्मग्रन्थिमास्कन्धदेशे स्तनयुगपरिणाहाच्छादिना वल्कलेन । वपुरभिनवमस्याः पुष्यति स्वानुशोभां कुसुममिव निबद्धं पाण्डुपत्त्रोदरेण ॥ १५ ॥ ७७४ : एतस्याः स्तनभारेण को नाम न जितो बली । सप्तद्वीपकरग्राही भवान् यत्र करप्रदः ॥ ( **विक्रमादित्यकालिदासयोः** ) ॥ १६ ॥ ५३९ : कीर्तिस्ते नृप दूतिका मुररिपोरङ्के स्थितां भारतीं मां चाकृष्य ददौ तवेति गिरिशः श्रुत्वार्धनारीश्वरः । ब्रह्माभूच्चतुराननः सुरपतिश्चक्षुःसहस्रं दधौ स्कन्दो मन्दमतिश्चकार न करस्पर्शं स्त्रियाः शङ्कितः ॥ १७ ॥ ११५५ : तथैव संकल्पशतैरनङ्ग प्रसह्य नीतोऽस्यनयातिबुद्धिम् । आकृष्य चापं श्रवणोपकण्ठे मयैव मुक्तस्तव बाणमोक्षः ॥ १८ ॥ ७३७ : त्यज मनसिज चापाकर्षणक्लेशमुच्चैस् त्रिभुवनविजयस्ते साधितो वेधसैव । इयमनुनयलीलासंगिनीरन्ध्रपीनस्तनभरदरनम्रा निर्मिता यन्मृगाक्षी ॥ १९ ॥ ७८१ : मण्डलाभोगिनस्तुङ्गाः स्तनाः स्त्रीणामसाधवः । यतो दत्तकरेऽद्यापि गोपल्लीग्रहणोद्यतः ॥ ( **विक्रमादित्यकालिदासयोः** ) ॥२०॥ ८६९ : मुहुरङ्गुलिसंवृताधरौष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् । मुखमङ्गविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तत् ॥ २१ ॥ ७४ : या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् । यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रसन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ २२ ॥ ८७५ : लोलां दृष्टिमितस्ततो विभजते सुभ्रूलताविभ्रमामाभुग्नेन विवर्तते बलिमता मध्येन कम्रस्तनी । हस्ताग्रं विधुनोति पल्लवनिभं शीत्कारभिन्नाधरा जातेयं भ्रमराभिलङ्घनतया वाद्यैर्विना नर्तकी ॥ २३ ॥ ७३८ : सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति । इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ २४ ॥ ११७० : सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी । रामारण्ये जनान्ते वा मया विरहिता त्वया ॥ २५ ॥ ३५९ : हंसः किंस्विद्विरञ्चेरयतरति तटं पश्चिमस्याम्बुराशेः क्षिप्तो वा कर्णशङ्खः प्रचरकरतया माघवैरावतेन । इत्यूहन्ते सुधांशुं मम तु मतमिदं त्वद्भयादेव देव प्रत्यञ्चुक्तं मघोना पतति गगनतः श्वेतमत्रातपत्रम् ॥ २६ ॥

**केशट** —

२५७ (=स० १. ४५. २) हा तातेति न जल्पितं न रुदितं न स्वीकृतं तद्धनं न स्नातं न च वीक्षितः परिजनः पित्रे न दत्तं जलम् । यावन्न क्रकचाभिघातविगलद्ग्रामामरीगामसृग्गण्डूषैर्घनघोरघर्घररवाः संतर्पिताः फेरवः ॥ २७ ॥

**क्ष(क्षे)मीश्वर** —

६३६ : परिगलितदलानां बिभ्रतां काष्ठशेषामनुविपिनमिदानीं कालरम्यामवस्थाम् । तलमवनिरुहाणां जर्जरच्छायमारात्परिहरति कुरङ्गो जालमाशङ्कमानः ॥ २८ ॥

**ग(गु)णेश्वर —**

१९ : करोतु सा शंकरमस्तकस्थिता कपालमाला सततं सुखानि वः । सुरापगातीरनिपातदर्शिता जटालतानामिव कन्दसंततिः ॥ २९ ॥

**गोभटि(ट्ट?) —**

४७६ (= स० ४. ९. ५ – **लोपामुद्राकवेः**) : तावद्वेलाविषमसलिलावर्तनाभीनिकुञ्जक्रोडभ्राम्यन्मकरशिखरिग्रावरौद्रः समुद्रः । दृष्टो यावन्न खलु चुलुकीभूतनिष्पन्दमूर्तिर्लोपामुद्रासहचरकरस्वस्तिकोत्संगवर्ती ॥ ३० ॥

**चित्तप, चित्तूप (छित्तप) —**

४४ (= स० १.५. २) : कण्ठच्छायमिषेण कल्परजनीमुत्तंसमन्दाकिनीरूपेण प्रलयाब्धिमूर्धनयनव्याजेन कल्पानलम् । भूषापन्नगकेलिपानकपटादेकोनपञ्चाशतं वातानप्युपसंहरन्नवतु वः कल्पान्तशान्तौ शिवः ॥ ३१ ॥ ५६७ (= स० ३. ४७. २) : मातुः खेदमयं ततान पृथुकः क्रोडेन धात्र्यामसौ रागाद्यस्तरुणः पुरंदरपुरस्त्रीन्यस्तकण्ठग्रहः । ज्यायानप्यभिनत्पितामहपदं नित्याविनीतस्तनूजन्मा ते यशसां गणस्तदुचितव्रीडोऽसि तत्कीर्तने ॥ ३२ ॥ ५१० : समाप्यम्बुधयो धराधरशतं विश्वस्तदैव क्षणं संभूयापि न कु[म्भसं]भवमुनेः प्राणाहुतिं तर्प्यति । यद्यस्यापि मृषा निषेवणघृणा द्राक्पीतवान्तोदधिप्रभ्रश्यज्जठराशुशुक्षणिकणो जागर्त्ययं वाडवः ॥ ३३ ॥

**जितारि —**

१२४९ (= स० ५. ३४. ५) : यत्कण्ठे श्रुतिभूषणानि बहुशो भ्रातः सुवर्णान्यपि स्वान्यस्माभिरुपाकृतानि विपणिस्थानेषु दैन्यान्न किम् । धिक्कर्माणि तुलैव नास्ति निकषग्रावा न मानक्रमो न क्रेता न परीक्षकः परमभूदुच्चैर्भयं दुर्जनात् ॥ ३४ ॥

**डिम्बोक —**

१९१ : दष्टाहं यमुनातटे विटपिनि श्लिष्टो भुजंगेन मे कृष्णेनाधरपल्लवो बत महाभोगेन भोः पश्यत । इत्याकर्ण्य ससंभ्रमं परिकरे गोप्या विदग्धं वचः कर्णे मन्त्रमृषोक्तिकेलिजनितस्मेरो हरिः पातु वः ॥ ३५ ॥

**दामोदर —**

८१२ : इय[मधर]दशनपङ्क्ती रुचिरा चिरकान्ति[काम]समकान्तिः । उत्पादयति नितान्तं तव मन्मथ वेदना पुंसाम् ॥ ३६ ॥ १२३० : शीलं शातयति श्रुतं शमयति प्रज्ञां निहन्त्यादराद्दैवं दीपयति क्षमां क्षपयति व्रीडामपि व्यस्यति । चेतो जर्जरयत्यपास्यति धृतिं विस्तारयत्यर्थितां पुंसः क्षीणधनस्य किं न कुरुते दर्वीदरिद्रग्रहः ॥ ३७ ॥

**धर्मकीर्ति —**

२३२ (=स० १. ६३. ५ – **तिलचन्द्रस्य**): यं लक्ष्मीरुपजीवति स भजते यं भारती संभ्रमादेतस्मै किमु दीयतां कथमसावस्मादृशैः स्तूयताम्। सेव्यो वा कथमेष यस्य शिरसा धत्ते पदार्घ्यं शिवस्तस्मात्कृत्यमजानतो मम मनोवृत्तेः प्रमाणं हरिः ॥ ३८ ॥

**धर्मपाल —**

५११ (=स० ४. १२. ५): अयमलघुविपाकस्फारजिह्वाकलापो ज्वलति यदि न मध्ये वाडवो हव्यवाहः। मुहुरुपचितसारो वारिभिर्निम्नगानां त्रिभुवनमपि किं न प्लावयत्यम्बुराशिः ॥ ३९ ॥ १३१६: आमूललग्नफलसंवृतिसंवृतोऽसि किंचाम्रपादप वनस्य मतस्तरूणाम्। यत्ते फलं क्षुधितवामनकुब्जपङ्गुक्लीबैरपि श्रमपराङ्मुखमेव लब्धम् ॥ ४० ॥ ६८१: किंचित्पादनिपीडनाद्वसनस्थैर्यक्रमासादितैरन्योन्यस्य करावलम्बविधिभिः क्रामन्ति पन्थाः पथि। शीर्यद्वेणुचलन्निबन्धनमपभ्रष्टान्तदारूच्चयं शुष्यत्पूरगतिक्रमादुपचितच्छायं जलात्संक्रमम् ॥ ४१ ॥ २७३: दैत्योत्पातेन्दुलेखाद्वितयमिव नभोमण्डलोद्भासि भीमं दृष्ट्वा चक्रं यदीयं दितिसुतनगरीवासिभिर्भीतभीतैः। अप्यन्तःकृष्णभावं पृथुनयनयुगं गाढरोषादताम्रं दृष्टं सच्छिद्रभानुद्वयमिव जगतां सोऽस्तु भूत्यै नृसिंहः ॥ ४२ ॥ ७१२: शरत्काले चण्डः परमपरितापप्रतिहतैः करस्पर्शो यस्य क्षणमपि जनैर्नाभिलषितः। स एवायं शूरः शिशिरनिवहाक्रान्तकिरणः प्रयत्नादन्वेष्यो न खलु नियता दैवगतयः ॥ ४३ ॥

**धर्मयशोक (? धर्माशोक)—**

४७१: कृष्णस्योरसि कौस्तुभः शतमखद्वारे करी शूलिनो मौलौ चन्द्रकलाकिरीटममृतैर्मेदस्विनो निर्जराः। कर्णोत्तंसितपारिजातमुकुलाः स्वर्वासिवामभ्रुवो यस्यैतानि विचेष्टितानि जयसि क्षीरोद तुभ्यं नमः ॥ ४४ ॥

**नील —**

१२४३ (= स० ४. १५. २): विदितधवलिमासि श्रूयमाणो ध्वनिस्ते रमयति रमणीया जन्मभूः सिन्धुराजः। तदपि निभृतमेकं वाच्यमस्त्येव कम्बो हृदयकुटिलिमानं कस्तवापह्नवीति ॥ ४५ ॥

**नीलपट —**

११२८ (= स० ५. ४९. ३–**नीलस्य**): [कुम्भी]संचिततण्डुलाः प्रतिदिनं नीताः क्षयं मूषिकैर्वास्तुष्वेव पिशङ्गितोदरतलाः शीर्यन्ति वार्ताकवः। जीर्णं जालकमारनालपिठरीगर्भे च काकारवं दीनायाः पथिकस्त्रियाः प्रियतमप्रत्यागमापेक्षया ॥ ४६ ॥ ७७८: स्त्रीमुद्रां मकरध्वजप्रणयिनीं सर्वार्थसंपत्करीं ये मोहादवधीरयन्ति कुधियो मिथ्याछलान्वेषिणः। ते तेनैव निहत्य निर्दयतया नग्नीकृताः खण्डिताः केचित्पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ४७ ॥

**पाणिनि —**

१० : अनडुहि जितनीडजेन्द्रवेगे कृतनिबिडासनमुज्झिताघपीडे । स्मरशमनतडित्कडार-दृष्टिं मृडमुडुराडुपशोभिचूडमीडे ॥ ४८ ॥ ८१६ : हरकोपानलप्लुष्टविरूढस्मरशाखिनः । अयमाभाति तन्वङ्ग्याः पाणिः प्रथमपल्लवः ॥ ४९ ॥

**धर्मपाणिनि—**

११५९ (=स० ५. १४. २–**धर्मपालस्य**): नीलाम्भोरुहकानने न विशति ध्वान्तोल्कराशङ्कया स्वक्रीडोच्छलिताश्च वारिकणिकास्ताराभ्रमात्पश्यति । सत्रासं मुहुरीक्षते च चकितो हंसं हिमांशुभ्रमान्न स्वास्थ्यं भजते दिवापि विरहाशङ्की रथाङ्गाह्वयः ॥ ५० ॥

**प्रवरसेण(न) —**

११६० (=स० ५. १४. ३–**युवसेनस्य**): मित्रे क्वापि गते सरोरुहवने बद्धानने क्लाम्यति क्रन्दत्सु भ्रमरेषु वीक्ष्य दयिताश्लिष्टान्पुरः सारसान् । चक्राह्वेण वियोगिना बिसलता नोत्खण्डिता नोज्झिता वक्त्रे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ ५१ ॥

**बाण —**

६४० : गम्भीरं गर्जितेन त्रिभुवनविवरं व्याप्य भूकम्पदेनं वीचीनाक्रम्य विष्वक् परि-पिबति पयो मेदुरोऽकालमेघः । इत्थं धाराकदम्बस्तबकितगहनाः प्रोषितैरुन्मुमूर्षा मूर्च्छाश्यामायमाना यममहिषगलैः कृष्यमाणा इवाशाः ॥ ५२ ॥ १४४ (=स० १. २६. ३–**कस्यचित्**): निर्मांसप्रकटास्थिजालविकटां पातालनिम्नोदरीं कूपक्रोडगभीरनेत्रकुहरामुन्नद्धजूटाटवीम् । दन्तान्तर्गतदैत्य-कीकसकणव्याकर्षणव्यापृतक्रूरैकाग्रनखामखण्डितरुचं त्वां चण्डि वन्दामहे ॥ ५३ ॥ १४३ : हर-कण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम् । कालकूटविषस्पर्शयातसर्वायसामिव ॥ ५४ ॥

**भर्तृहरि —**

१३६७ (=स० ४. ४५. १–**धर्मपालस्य**): त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव मुक्ता स्थली विश्रामस्थितिहेतवो न गणिता बन्धूपमाः पादपाः । बालापत्यवियोगकातरमुखी त्यक्तार्ध-मार्गे मृगी मृग्यन्तः पदवीं तथाप्यकरुणा व्याधा न मुञ्चन्ति माम् ॥ ५५ ॥

**भोजदेव —**

३६ (=स० १. २८. २– **क्षित्तपस्य**): अच्छिन्नमेखलमलब्धदृढोपगूढमप्राप्तचुम्ब-नमवीक्षितवक्त्रकान्ति । कान्ताविमिश्रवपुषः कृतविप्रलम्भसंभोगसख्यमिव पातु वपुः स्मरारेः ॥ ५६ ॥ ६६: जटासंततिरव्याद्वो धूर्जटेः कपिलायता । कपालाणुविनिर्मुक्ता प्रसूतिः फणिनामिव ॥ ५७ ॥

**मुरारि —**

७३१ : अनाहूतैरेव प्रियसहचरीणां शिशुतया वचोभिः पञ्चालीमिथुनमधुना संगमयि-तुम् । उपादत्ते नो वा विरमति न वा केवलमियं कपोलौ कल्याणी पुलकमुकुलैः कुर्वयति ॥ ५८ ॥

३०३ (=स० १. ७०. ३): कस्मैचित्कपटाय कैटभरिपूःपीठदीर्घालयां देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किंचिदाचक्ष्महे । यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च ते नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ ५९ ॥ ५५२ (=स० ३. ५३. २): भोगीन्द्रः प्रमदोत्तरङ्गगृहिणीसंगीतगोष्ठीषु ते कीर्तिं देव शृणोतु विंशतिशती यच्चक्षुषां वर्तते । रक्ताभिः सुरसुन्दरीभिरभितो गीतां तु कर्णद्वयीदुःस्थः श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षुःश्रवाः ॥ ६० ॥ ४३३: मदयति यदुत्पन्नो दुग्धाम्बुधेरयमम्बुधीन्नयति नयनादत्रेर्यातो मुदं नयनानि च । तदखिलसुरश्रेणीसाधारणप्रणयी शचीसहचरतरुः स्थालीसोमः समञ्जसमीहते ॥ ६१ ॥ ४६७: या माथुरा मृगमदद्रवदिग्धवक्षःप्रक्षालनान्मलिनितेव कलिन्दकन्या । तां तत्रभाविविनिभूषितमध्यदेशां रोमावलीमिव विलोकयितासि भूमेः ॥ ६२ ॥ ५६६: येनाकारि विरोधिसौधवडभीसंरूढसस्याङ्कुरग्रासव्यग्रतुरङ्गकन्धररथप्रस्थानधृष्टो रविः । आसीनाः प्रतियानमार्गमभितः सांयात्रिकानां मुखादाकर्ण्य प्रणिधिं जगुर्जलनिधौ यत्कीर्त्तिमन् देवताः ॥ ६३ ॥

## योगेश्वर (धर्मयोगेश्वर)—

३६७ १३७४ (=स० ४. ५. ५): आशाः प्रसादयतु पुष्यतु वा चकोरान् कामं तनोतु कुमुदेषु मुदं सुधांशुः । एकः स एव परमुत्कटराहुदन्तयन्त्रप्रवेशसमदुःखसुखः कुरङ्गः ॥६४॥ २५८, २८४ (=स० १. ४७. ५–**आचार्यगोपीकस्य**): कूजन् कुञ्जे किमपि करुणं कन्दरे कान्दिशीकः सानौ शून्यप्रणिहितमनाः कानने ध्याननेत्रः । गच्छन् मूर्च्छां कुसुमशयने वीतरागस्तडागे जीयाज्जायाविरहविदुषां ग्रामणी रामभद्रः ॥ ६५ ॥ ९६२ (=स० २. १३६. ३): छिन्नार्धोरुकमेखले चरणयोः संक्रान्तलाक्षारसं तल्पोपान्तमुदीक्ष्य सस्मितसखीवैलक्ष्यसंभ्रान्तया । तन्वङ्ग्या दृढदन्तुरोदरदरोच्छूनाधरोत्संगया क्षिप्ताः प्रेयसि कूटकोपकुटिलभ्रूविभ्रमा दृष्टयः ॥ ६६ ॥ ६३२: दत्त्वा ग्रीष्मावतारे लिखितनिजयशोलाञ्छनं छत्रसूत्रं ज्येष्ठामूलीयमासे जलमवटतटीप्लक्षयक्षः प्रयासुः । आषाढ्यामाद्यजाताः प्रथितगुरुतमा ग्राहयन्त्यग्रहारे साम्भः कुम्भं करम्भं नवमथितघटीं कर्करीं कर्कटीं च ॥ ६७ ॥ ६८५ (=स० २. १६७. ५): परावृत्ता हंसाः सपदि विगतं कल्मषमपां प्रसन्नः शीतांशुः प्रसृतपटवः सूर्यकिरणाः दृशो दीर्घीभूता गगनमसिवर्णं च विपुलं नियन्ता विन्ध्याद्रेर्विदितमुदितोऽसौ मुनिवृषा ॥ ६८ ॥ ५० (=स० ४. २. ५): पाणौ ब्रह्मकपालमस्थिभिरलंकारोऽङ्गरागश्चिताभस्माव्याहतमुत्तरीयमुरगः क्रीडा समं मातृभिः । यस्यैतान्यसमञ्जसानि तमनाचारैः पिशाचैर्वृतं कः स्थाणुं फलवाञ्छया वद वृषादन्यो जनः सेवते ॥ ६९ ॥ ७५: पार्वत्या सभयार्तिकम्पयदसृक्तृष्णार्ति चामुण्डया साश्चर्यं प्रमथैर्गुहेन रुद[ता] कूलाकुलार्द्रेक्षणम् । त्रुट्यत्कीकशकर्कशक्वणदसुर्दृष्टः कुबेरानुजः कृन्तन्स्वानि शिरांसि यस्य पुरतो देवः स पायाज्जगत् ॥ ७० ॥ १७० (स० १. ३१. ४–**भवानन्दस्य**): भिक्षाभोजिनि कृत्तिवाससि वसुप्राप्तिः कुतो जायते तस्यार्धं वपुषः स्वयं व्यसनिनो यस्याहरत्पार्वती । तस्यार्धं कुपिता परं यदि हरेन्मूर्ध्नि स्थिता जाह्नवी हा नाथ क्व तदेति दुःस्थहृदयो भृङ्गी भृशं शुष्यति ॥ ७१ ॥ ५४८: मान्यो राज्ञामिहाज्ञावशगवसुमतीधेनुदोहोपदेष्टा वैण्यश्चापाग्रहेलाहतिविषमसमुत्सारिताशेषशैलः । यस्योद्गायत्युदारां विकटतट-

दरीमारुतापूर्णरन्ध्रव्याकूजत्कीरकालीमुखरितकटकः कीर्तिमद्यापि विन्ध्यः ॥ ७२ ॥ ६८७ : यस्मिन्नैव प्रभवति रविर्नाधिकारी कृशानुर्निर्व्यापारद्युतिरुडुपतिः का कथा तारकाणाम् । सद्यःस्नातोत्थितवनचरानेकपालीकलालं तन्मेघाख्यं तिमिरमधुना ध्वंसमभ्येति भूयः ॥ ७३ ॥ १०९, ३१४ (= स० १. ३४. ३) : स्फटिकमरकतश्रीहारिणोः प्रीतियोगात्तद्वतु वपुरेकं कामकंसद्विषोर्वः । भवति गिरिसुतायाः सार्धमब्धेर्दुहित्रा सदृशमहसि कण्ठे यत्र सीमाविवादः ॥ ७४ ॥

## राजशेखर —

अकौसुमी मन्मथचापयष्टिरनंशुका विभ्रमवैजयन्ती । ललाटरङ्गाङ्गणनर्तकीयमनङ्गना भ्रूरनुयाति दृष्टिम् ॥ ७५ ॥ १०१४ (= स० २. ५८. ३–**रुद्रटस्य**): उत्क्षिप्यालकमालिकां विलुलितामापाण्डुगण्डस्थलाद्विश्लिष्यद्वलयप्रपातभयतः प्रोल्लम्ब्य किंचित्करौ । द्वारस्तम्भनिषण्णगात्रलतिका केनापि पुण्यात्मनानत्यालोकनदत्तदृष्टिरबला तत्कालमालिङ्गिता ॥ ७६ ॥ ११५३ : कदाचिद्रथ्यायां त्रिनयन[व]धूपूजनविधौ समारब्धे दैवात्पतितमनिमित्तं श्रुतवती । किमक्षेमं दुर्गे कमितुरिति विज्ञाप्य बहुशः प्रणम्यैवाश्यानां धरणिसरणीं कन्दलयति ॥ ७७ ॥ ३४५ : कलावतः कलाकाशे कालकैवर्तकर्षिता । यामिनी यमुनातीरे राजती भाति नौरिव ॥ ७८ ॥ ८१८ (स० २. ७७. ३–**भासस्य**) : दग्धे मनोभवतरौ बालाकुचकुम्भसंभृतैरमृतैः । त्रिवलीकृतालवाला जाता रोमावलीवल्ली ॥ ७९ ॥ ८७४ : निर्माल्यं नयनश्रियः कुवलयं वक्त्रं च दासः शशी कान्तिप्रावरणं ततो मधुलिहो यस्याश्च वाचः कलाः । विंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावणस्त्वां द्रष्टुं जनकात्मजां हृदय हे मित्राणि मित्रीकुरु ॥ ८० ॥ ३५६ : मनोभवस्यास्थिभिरर्धदग्धैः सितासितैः किं घटितोऽयमिन्दुः । स्मरारिणा मूर्ध्नि धृतोऽपि यस्मादुत्प्रेक्षते तस्य न पक्षपातम् ॥ ८१ ॥ ६३१ : शीतं श्रीखण्डकाण्डं निबिडयति फणी भोगनालेन लीनश्छायावृक्षस्य मूले रचयति चमरी रम्यरोमन्थलीलाम् । सोष्माणं मानुषीयं वितरति कमितुर्घर्मितस्याङ्कपालिं केलीकस्तूरिकैणी प्रसरति चरितुं सारणिग्रन्थिपर्णा ॥ ८२ ॥ ८०५ (= स० २. ६९. २) : ८७१ : हेमाद्रेः किमियं रुचिः किमथ वा लावण्यसिन्धोरियं किंवा सज्जनचेतसां कुलमियं सौभाग्यपुञ्जः किमु । ज्ञातं शूलधरस्य कोपशिखिना दग्धादनङ्गद्रुमात्संजाता नवकन्दली मृदुतरा मुग्धा मनोहारिणी ॥ ८३ ॥

## लक्ष्मीधर —

१३५० (= स० ४. ६५. ५–**कस्यचित्**) : यन्मूर्धानमशिक्षितो नमयितुं निम्नेषु तेनोच्चैरारूढः पदमादरेण जलद त्वां याचते चातकः । तत्पातुं व्यवसायदीनमनसो धावन्त्यमी संभ्रमादावर्तैर्मरुतां तदप्यपकृतं धिक्चातकान् धिग्विधिम् ॥ ८४ ॥

## वराह —

६४७ : चूडाबर्बरके निपत्य कलिकाभावं प्रदत्त्वा शिषा कुण्डापातवितन्वनिद्रगृहिणीबाष्पाम्बुसंवर्धिताः । निर्घृष्टेऽपि बहिर्गते न विरमत्यन्तर्जलं वेश्मनो लूतातन्तुततिच्छिदो मधुपृषत्पिङ्गाः पयोबिन्दवः ॥ ८५ ॥ ८६७ ॥ : तान्येतानि वचांसि यानि बहुशो धीतानि युष्मन्मुखाद्रक्ष्येऽहं

बहुशिक्षिता क्षणमिति ध्यात्वास्मि मौनं गता । गाढालिङ्गनमण्डलीकृतकुचं गाढं परिष्वज्य मां पीतानीव सहाधरेण हसता वक्त्रस्मितान्येव मे ॥ ८६ ॥

वल्लण —

१३९२ (=स० ४. ३८. ५) : आस्तां तावदसीमपौरुषयशः संमानितात्यद्भुतप्रारब्धाभ्यधिकक्रियस्य स खलु प्राच्यः प्रभावो हरेः । जीर्णस्यापि च विन्ध्यकन्दरदरीद्वारावताराक्षमैरङ्गैरङ्गभृतो द्रवन्ति दरतो गन्धेन गन्धद्विपाः ॥ ८७ ॥ १३२५ : (=स० ४. २९. ३ **वल्लभस्य** :) छायाशीतलितात्सकाञ्चनशिलात्खेलत्कृतार्थार्थिनस्तत्तन्निर्मितचित्रमञ्जरिगृहात्क्रीडामिलत्खेचरात् । घ्रात्वाप्यद्भुतसौरभोरुलहरीः कल्पद्रुमान्नैव यद्वेगाद्धावति मञ्जु गुञ्जति परं तत्कोऽयमिन्दिन्दिरः ॥ ८८ ॥ १४०८ : बुद्धिर्नाविचलत्प्रकोष्ठकनकोत्क्षिप्तद्विपैः कूर्परक्रीडापाङ्गचपेटचूर्णहरिभिः का वीरवृत्तेः कथा । मेघः किं तव लङ्घितावहमहाकाशक्रमोपद्रुमः को मूर्तिप्रमुखैरपीह शर[भो]द्वृत्तो लघूर्णतरः ॥ ८९ ॥ ५९३ : वज्रं जीर्यति वज्रिणोऽपि च हरेश्चक्रं च वक्रं भवेद्दण्डं खण्डशतं यमस्य सुतरां पाशश्च नाशं गतः । लङ्केशोरसि यत्र मन्मथशरो भग्नो न भग्नोऽद्भुतं कः शाखी सखि यस्य पुष्पमभवत्पुष्पायुधस्यायुधम् ॥ ९० ॥

वसुकल्प —

३३६ (= स० १. ७२. २–**मुरारेः**) : कामायुष्टोमयज्वा पुरमथनजटाचक्रकौमारबर्हः प्राणायामोपदेष्टा सरसिरुहवने शर्वरीसार्वभौमः । देवो जागर्ति भानोर्भुवनभरभृतः स्कन्धविश्रामबन्धुः शृङ्गाराद्वैतवादी शमितकुमुदिनीमौनमुद्रो मृगाङ्कः ॥ ९१ ॥ १३५१ (= स० ४. ६४. १–**शरणस्य**) : दृष्ट्वा तोयभरावलम्बनिबिडप्रारम्भमम्भोधरं तृष्णार्तः किल रौति यावदसकृत्तोयाशया चातकः । तावच्चञ्चलचञ्चुकोटरकुटीकोष्ठे लुठन्तः स्फुटं दृश्यन्ते करकोत्कराः किमपरं कोऽप्येष वामो विधिः ॥ ९२ ॥ १३५२ (= स० ४. ६४. ४) : बीजैरङ्कुरितं लताभिरुदितं वल्लीभिरुज्जृम्भितं कन्दैः कन्दलितं जनैश्च मुदितं धाराधरे वर्षति । भ्रातश्चातक पातकं किमपि ते सम्यङ् जानीमहे यन्नास्मिन्निपतन्ति चञ्चुपुटके द्वित्राः पयोबिन्दवः ॥ ९३ ॥ ७०२ : भूषा तामसतावभाञ्जि कपिशश्यामा तु बद्धच्छवीलिप्ता त्वं च कठोरकीरहरितोन्मेषीति मांसीलता । एतत्तर्कय बालवानलवधूहस्ताङ्गुलीनन्दितस्पर्धावन्ति फलानि बिभ्रति परीणाहाभिरामश्रियः ॥ ९४ ॥

१३३९ (=स० ४. ३१. ४) : स्वादयन्तु चिरं नाम कोकिलाश्चूतकोरकान् । तादृक् परिमलं वेत्ति यदि धन्यो मधुव्रतः ॥ ९५ ॥ ५७९ : हस्तन्यस्तशरासनस्य पुरतो देवस्य चेतोभुवो ब्रह्मा त्वं क च केशवस्तृणमिव त्रैलोक्यमालोक्यते । स्त्रीभावं गमितस्य यस्य शिरसा सिन्दूरमुद्रामयीमाज्ञामुद्वहते चराचरगुरुर्देवोऽर्धनारीश्वरः ॥ ९६ ॥

वसु[कल्प]दत्त —

३०५ : वीणावाद्यविनोदितात्रिजगतां लेख्यो यया माधवो वागीशोऽपि सुभाषिताक्षरपदां यां स्तौति वाग्देवताम् । यामाराध्य नितान्तमूढमतिभिः सर्वज्ञकल्पायितं वन्दे तां शरदिन्दुधामधवलां देवीमभीष्टप्रदाम् ॥ ९७ ॥

**वाचस्पति —**

१३१८ : उद्यानपाल भवता यदि चूतशाखी संवर्धितोऽयमधुना तदुपेक्षितः किम् । येनैवमस्तमितमेकविशीर्णशाखं शाखोटकप्रभृतयोऽपि च लङ्घयन्ति ॥ ९८ ॥ ३२४ : करोतु वो मङ्गलमद्रिमस्तकस्थलस्थितिन्यस्तगभस्तिविस्तरः । स्फुरत्सुवृत्तोत्थितरक्तचन्दनद्रुमद्रवच्छेदनिभः प्रभाकरः ॥ ९९ ॥ ५४९ (= स० ३. ५१. २–**वाक्पतेः**) : निःसृत्याहवसागरादथ पुनः संसृत्य पृथ्वीतलं गत्वाधो हिमशैलमीश्वरशिरःशीतांशुलेखामपि । गङ्गेव स्मृतजन्मभूमिरमरैः साश्चर्यमालोकिता कीर्तिस्ते प्रतिलोमलङ्घितवियद्ब्रह्माण्डमारोहति ॥ १०० ॥ ४५२ : भगवति तव लीला मौलिमाले तवाम्भःकणमनुपरिमाणं प्राणिनो ये स्पृशन्ति । अमरनगरनारीचामरग्राहिणीनां विगतकलिकलङ्कातङ्कमङ्के लुठन्ति ॥ १०१ ॥ १०५९: मानं मानिनि मा कृथाः प्रणयिनि प्रेमानुबन्धं कुरु प्राणैः कण्ठगतैरपि व्यसनिनि व्रीडा किमद्यापि ते । आकर्णान्तततज्यकार्मुकलतासंसक्तबाणः स्मरो रोषाकुञ्चनयन्त्रिताधरतलो देवः पुरो वर्तते ॥ १०२ ॥ ३६४ (**वाचस्पदं**) : यस्माद्भासि पयोनिधौ हरजटाजूटे निबद्धो यदि यद्विश्वोदरदीपकोऽसि सततं पूर्णोऽसि यच्चामृतैः । भ्रातः श्रीहरिणाङ्क सर्वमतुलं म्लानीकृतं तत्त्वया यत्राजीवमपास्य कैरवकुले दत्तं विकासास्पदम् ॥ १०३ ॥ ३३८ (= स० १. ७३. १–**उमापतेः**) : श्यामायाः करजक्षतं रतिपतेर्जैत्रं धनुर्बन्धकीहृत्कम्बुक्रकचश्चकोरकुररीसौहित्यबीजाङ्कुरः । चौरग्रामगजाङ्कुशः परिलसन्मन्दाकिनीरोहितो ध्वान्ताम्भस्तरणैकनौर्विजयते बालः सुधादीधितिः ॥ १०४ ॥ १३२२ : हा सौरभं तदेतत्तदिदं संतापहारि हा सत्यम् । अङ्गारकारहस्ते चन्दन पतितोऽसि धिग्दैवम् ॥ १०५ ॥

**वामदेव —**

८०३ : ................ कथितवल्लभखण्डितायाः । एतच्चतुर्गुणितसायकपञ्चबाणबाणावलीगगनविभ्रममातनोति ॥ १०६ ॥

**विक्रमादित्य (कालिदास –)**

१३३७ : अनुदिनं परिभुज्य सरोजिनीं विपदि निष्करुणा मधुपावली । अभजदुज्ज्वलमुत्पलकाननं क्व नु पुनर्मिलिताः स्थिरसौहृदाः ॥ १०७ ॥ ६९० : प्रावृट्कालप्रभवमशनिध्वानमम्भोधराणां श्रुत्वा भूयः कुलिशपतनाशङ्कयेवावनीध्राः । पत्राभोगोच्छ्वसिततनुभिर्व्याप्तशृङ्गारकाशैराश्मन्नीडे पिदधतितरां सान्द्रवीरुत्प्रतापाः ॥ १०८ ॥ ८३६ : लावण्यवारिधिजलं ननु केयमस्याः शैवालवल्लिलपितालफलं प्रसूते । किंचारविन्दमपरं विकसन्ति यत्र बन्धूककुन्दतिलकासितपङ्कजानि ॥ १०९ ॥

**विद्या —**

१३३६ (= स० ४. २८. २ –**विद्यापतेः**) : अन्यासु तावदुपमर्दसहासु भृङ्ग लोलं विनोदय मनः सुमनोलतासु । मुग्धामजातरजसं कलिकामकाले बालां कदर्थयसि किं नवमालिकायाः ॥ ११० ॥ २६६ : औत्पातिकं तदिह देव गवेषणीयं नारायणो यदि पतेदथ वा सुभद्रा । कादम्बरीरसविघूर्णितलोचनस्य युक्तं हि लाङ्गलभृतः पतनं पृथिव्याम् ॥ १११ ॥ ६४३ : काले काला-

म्बुवाहाकुलगगनगलद्वारिधाराकराणि कादम्बामोदहृद्ये वहति च मरुति प्रेमबन्धानुकूले । तन्वीनां सुन्दरीणां स्तनकलशगलत्तारहारावलीनां मग्नः कण्ठग्रहोऽपि व्यथयति हृदयं किं पुनर्विप्रयोगः ॥११२॥ ८७२ : केशाः संयमिनः श्रुतेरपि परं पारंगते लोचने सद्वृत्तं कुचयोर्युगं श्रुतिमले श्रोत्रे भ्रुवोः संतती । अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैरित्थं तन्वि वपुः प्रशान्तमपि ते रागं करोत्येव नः ॥ ११३ ॥

**वीर —**

२३१ : मल्लैः शैलेन्द्रकल्पः शिशुरितरजनैः पुष्पचापोऽङ्गनाभिर्गोपालैः प्राकृतात्मा दिवि कुलिशभृता विश्वरूपोऽप्रमेयः । क्रुद्धः कंसेन कालो भयचकितदृशा योगिभिर्ध्येयमूर्तिर्दृष्टो रङ्गावतारे हरिरमरगणानन्दकृत्पातु युष्मान् ॥ ११४ ॥

**श्रीव्यास —**

४३६ : यत्प्रविश्य न पुनः प्रविश्यते यन्निपीय न पुनर्निपीयते । यन्निरीक्ष्य न पुनर्निरीक्ष्यते तन्निरञ्जनजलं तवेश्वरि ॥ ११५ ॥

**शतानन्द —**

१९२ : मग्ना तिष्ठति कात्र वारिणि चिरं गोप्यः समालोक्यतामित्युक्ते हरिणा समं व्रजवधूवर्गे निमग्ने ततः । राधा मन्दकटाक्षविभ्रितजलावेपा शनैश्चुम्बिता पायादस्य जयन्ति जातहृदयानन्दं जलक्रीडितम् ॥ ११६ ॥ २८ (=स० १. १०. ५–**नटगाङ्गोकस्य**) : मुक्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्लीनिभा बर्हौ लाजनिभा दृशोर्मणिनिभा भोगोत्करे भोगिनः । नृत्यावर्तपरंपरेरितपयःसंमूर्च्छनालालिताः खेलन्तो हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥ ११७॥

**शितिकण्ठ —**

६१ (=स० १. १९. २ **योगेश्वरस्य**) : नन्दिन् खञ्जय मञ्जुनादमुरजं संगृह्य सज्जीभव भृङ्गिन्नानय भस्मभाजनमितो लम्बोदरागम्यताम् । स्कन्दं नन्दय मन्दिरोदरगतं देवीति रङ्गाङ्गणे शंभोस्ताण्डवमण्डनैकमनसः संजल्पितं पातु वः ॥ ११८ ॥

**श्रीकण्ठ —**

४१७ : अयं मृदुमृणालिनीवनविलासवैहासिकस्त्विषां वितपते पतिः सपदि दृश्यमाना निजाः । स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले विपर्ययितवृत्तयो घुसृणपङ्कपत्राङ्कुराः॥ ११९॥

**सुरभि (शुरभि) —**

५७०: अजस्रालस्पृष्टैरभिनवमृणालैरमधुपैः प्रसूनैरुत्फुल्लैर्न मृगमदमिश्रैर्मलयजैः । नवैर्मुक्ताहारैरनिहितमहानीलतरलैर्यशोभिस्ते श्रीमान् विदधति विदूषान्दश दिशः ॥ १२० ॥ १३८४ (=स० ४. ४१. २) : अयं दूरभ्रान्तः पटुतरपिपासाकुलमनाः कपोले ते मत्तद्विप निपतितः षट्पदयुवा । त्वमप्येतां पीनश्रवणदलदोलाव्यसनितां विमुञ्च स्वाच्छन्द्यादपनयतु तावत्तृषमिमाम् ॥१२१॥

**हनूमत्—**

४७९ (=स० ५. ७४. १–**विद्यायाः**) : अम्भोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः केन क्षारजले वृथैव भवतो नामामृतं निर्मितम् । थूथूकृत्य वमद्भिरध्वगजनैरप्राप्तकण्ठं पयः शुष्यत्तालुगलैर्विरुत्य लवणोदन्वानुपालभ्यते ॥ १२२ ॥ ९६ : कल्पान्तारभटीनटस्य नटतो रुद्रस्य रुद्रभ्रमिभ्राम्यद्ग्रन्थिजटोद्भवोऽस्तु भवतो भूत्यै स झञ्झानिलः । यात्रावर्तविवर्तनक्रममिलद्दिव्योच्छलज्झाङ्कृतौ रेजाते रिपुबान्धवौ जलरुहां तौ कांस्यतालायितौ ॥ १२३ ॥ २५१ (=स० १. ४४. १) : किं छत्रं किं नु रत्नं तिलकमथ तथा कुण्डलं कौस्तुभो वा चक्रं वा वारिजं वेत्यमरयुवतिभिर्यद्बलिद्वेषिदेहे । ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्धमानः क्रमेण ॥ १२४ ॥ ७६ (=स० १. १७. १) : पयोदानां पन्थाः कवलविषयो वा परिमलं वहन् विश्राणो वा सुहृदपसुहृद्वा जलरुहाम् । दद्द्रह्लानो वा हरिरिति मुहुर्यस्य विबुधाः स्तुवन्त्यष्टौ मूर्तीः स जगदवतादन्धकरिपुः ॥ १२५ ॥ ५४४ (=स० ३. ५१. १ **शाक्यरक्षितस्य**) : वीर क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्ते कथं चन्द्रमाः । स्यादेवं त्वदरातिसौधशिखरप्रोद्भूतशष्पाङ्कुरग्रासव्यस्तमतिः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ १२६ ॥

**श्रीहर्ष—**

८३५ (= **नैषध.** ७. १००) : जगद्वधूमूर्धसु रूपदर्पाद्यदेतयादायि पदारविन्दम् । तदीयसिन्दूरपरागरागैस्ततः प्रवालप्रबलारुणं तत् ॥ १२७ ॥ ३२ (=स० १. ६. ५-**कविपण्डितश्रीहर्षस्य**) : दूरे दारुवनाभिसारक मृषा चाटूनि मुञ्चाधुना भूयस्त्वं पुनरप्यहं यदि पुनः चन्द्रः क्षितिं यास्यति । इत्युक्तः शशिमौलिरद्रिसुतया चूडेन्दुभूलम्बनव्याजव्यञ्जितपादपद्मपतनप्रीतप्रियः पातु वः ॥ १२८ ॥ २११ (=स० १. ६७. ५-**पुण्डरीकस्य**) : मुग्धे मुञ्च विषादमत्र बलभित्कम्पो गुरुस्त्यज्यतां सद्भावं भज पुण्डरीकनयने मान्यानिमान्मानय । लक्ष्मीं शिक्षयतः स्वयंवरविधौ धन्वन्तरेर्वाक्छलादित्यन्यप्रतिषेधमात्मनि विधिं शृण्वन्हरिः पातु वः ॥ १२९ ॥

List of citations in P with the total number of stanzas attributed to each source.

१ : अचलसिंह (३). २ : अपिदेव (१). ३ : अभिनन्द (८). ४ : अभिश्रीक (१). ५ : अमरसिंह (३). ६ : अमरुक (१). ७ : अमोघ (१). ८ : अवन्तिवर्मन् (१). ९ : अविलम्बसरस्वती (२). १० : आज्ञाविलास (१). ११ : आनन्दबोध (१). १२ : इन्द्रदेव (१). १३ : उत्पलराज (१). १४ : उमापति, उमापतिधर (१७). १५ : उमापात्र (१). १६ : कपिलेश्वरगजपति (१). १७ : कलिकाकार (१). १८ : कविचूडामणि (१). १९ : कविराज (४). २० : कविशेखर (६). २१ : कात्यायन (१). २२ : कामदेव (३). २३ : कालिदास (१८). २४ : श्रीकुमारिरभट्ट (१). २५ : कुशलनाथ (१). २६ : कृष्णमित्र (१).

२७ : केशट (५). २८ : केशवसेन (२). २९ : केशवाचार्य (२). ३० : क्षमीश्वर (१). ३१ : क्षितिप (१). ३२ : क्षोणीक (१). ३३ : खण्डन (१). ३४ : गङ्गादत्त (१). ३५ : गङ्गादास (२). ३६ : गजपति (१). ३७ : गणेश्वर (२). ३८ : गदाधर (८). ३९ : गाङ्गेश्वर (१). ४० : गाङ्गोनट (१). ४१ : गोधिक (२). ४२ : गोनन्द (३). ४३ : गोन्दोक (१). ४४ : गोभटि (१). ४५ : गोयीक, गोपीक (४). ४६ : गोवर्धन (७). ४७ : गोविन्दस्वामिन् (१). ४८ : गोसोक (१). ४९ : चण्डीदास (१). ५० : चारुकवि (१). ५१ : चित्राङ्ग (१). ५२ : चित्तप, चित्तूप, वित्तूप (७). ५३ : जनार्दन (१). ५४ : श्रीजयदेव (२). ५५ : जलेनुसोन (१). ५६ : अवन्तिजह्नु (१). ५७ : जितारि (१). ५८ : वैद्यजीव (१). ५९ : डिम्बोक (४). ६० : तरणिनन्दन (१). ६१ : तुङ्गोक (१) ६२ : त्रिपुरारि (१). ६३ : त्रिपुरारिपाल (१). ६४ : त्रिविक्रमगजपति (२). ६५ : दक्ष (३). ६६ : दक्षप्रजापति (१). ६७ : दण्डिन् (१). ६८ : दाक्षिणात्य (१). ६९ : दामोदर (३). ७० : दासवर (१). ७१ : दिवाकर (२). ७२ : दुनोक; नोदुक (२). ७३ : धरणीधर (२). ७४ : धराधर (१). ७५ : धर्मकीर्ति (४). ७६ : धर्मपाल (५). ७७ : धर्मयशोक (१). ७८ : धर्माकर (२). ७९ : धातोक (२). ८० : धीर (१). ८१ : धोयीकवि, धोयीक (८). ८२ : (श्री)नन्दनकवि (७). ८३ : नन्दूक (१). ८४ : नयपाल (१) ८५ : (भट्ट)नारायण (२). ८६ : नारायणदत्त (१). ८७ : नील (१). ८८ : नीलपट (२). ८९ : नीलाम्बर (२). ९० : नैषध (२). ९१ : पञ्चानन (६). ९२ : परशुराम (१). ९३ : मिश्र पाऊक (१). ९४ : पाणिनि (२). ९५ : (धर्म)पाणिनि (१). ९६ : पीताम्बर (२). ९७ : पुरुषोत्तमगजपति (२). ९८ : पुरुषोत्तमदेव (२). ९९ : प्रतिगरुड (१). १०० : प्रद्युम्न (१). १०१ : प्रवरसेण (१). १०२ : प्राज्ञभूतनाथ (१). १०३ : प्रियाक (१). १०४ : बटोक (१). १०५ : बधिरकविराज (१). १०६ : बलदेव (१). १०७ : बलभद्र (२) १०८ : बाण (११). १०९ : बिभीषण (१). ११० : बिम्बोक (२). १११ : भगीरथ (२). ११२ : भट्टश्रीक (१). ११३ : भर्तृहरि (१). ११४ : भवभूति (८). ११५ : भवानन्द (२). ११६ : भाषदास (२). ११७ : भाष्यकार (१). ११८ : भास (२). ११९ : भासोक (२). १२० : भोजदेव (२). १२१ मण्डन (१). १२२ : मधुशील (१). १२३ : मनोविनोद (५). १२४ : महादेव (१). १२५ : महेश्वर (१). १२६ : महोदधि (१). १२७ : माघदत्त (१). १२८ : माधररवञ्जन (१). १२९ : मुकुन्दकवि (१). १३० : मुञ्ज (१). १३१ : मुरारि (८). १३२ : योगेश्वर, (धर्म°–) (१६). १३३ : रकिकर (१). १३४ : रक्षोरावण (१). १३५ : रत्नपाल (१). १३६ : रन्तितथागत (१). १३७ : रविगुप्त (१). १३८ : राजमहादेवी (१). १३९ : राजशेखर (२६). १४० : (श्री)राज्यपाल (१). १४१ : (श्री)राम (१). १४२ : रामदास (१). १४३ : रामरक्षित (५). १४४ : रावण (१). १४५ : रुचिकर (१) १४६ : रुद्र (५). १४७ : (श्री)लक्ष्मणसेन (६). १४८ : लक्ष्मीधर (५). १४९ : (वङ्ग)-लक्ष्मीधर (१). १५० : लङ्गदत्त (१). १५१ : लडहचन्द्र (३). १५२ : ललितोक (१).

१५३ : लोलिम्ब ( ३ ). १५४ : वङ्गसेन ( १ ). १५५ : वज्रमुष्टि ( १ ). १५६ : वत्सलदास ( १ ). १५७ : वनमालिन् ( १ ). १५८ : वराह ( २ ). १५९ : वराहमिहिर ( २ ). १६० : वररुचि ( १ ). १६१ : वर्धमान ( १ ). १६२ : वल्लण ( ८ ). १६३ : (श्री) वसन्तदेव ( ४ ). १६४ : वसन्तराज ( १ ). १६५ : वसुकल्प ( ९ ) १६६ : वसुदत्त ( २ ) १६७ : वाक्कूट ( ४ ). १६८ : वाकूडामर ( १ ). १६९ : वागुर ( १ ). १७० : वाचस्पति ( १२ ). १७१ : वामदेव ( १ ). १७२ : वार्तिककार ( २ ). १७३ : वाल्मीकि ( १ ). १७४ : वासुकि ( १ ). १७५ : वासुदेव ( १ ). १७६ : मिश्रवासूक ( १ ). १७७ : ( श्री )विक्रमादित्य ( ४ ). १७८ : वित्तोक ( १ ). १७९ : विद्या ( १० ).: १८० : विद्याधर ( २ ). १८१ : विद्यापति ( १ ). १८२ : विनयदेव ( २ ). १८३ : विमल ( १ ). १८४ : विरिञ्चि ( ३ ). १८५ : विशाखदत्त ( २ ) १८६ : विश्वनाथ ( २ ). १८७ : विष्णुशर्मन् ( २ ). १८८ : विष्णुहरि ( १ ). १८९ : वीर ( ३ ). १९० : वीरनाग ( १ ). १९१ : वीर्यमित्र ( २ ) १९२ : ( श्री )व्यासदेव ( २ ). १९३ : शंकरकवि ( ४ ). १९४ : शंकरदेव ( ६ ). १९५ : शंकरधर ( १ ). १९६ : शंकराचार्य ( १ ). १९७ : शतानन्द ( ६ ). १९८ : शतोक ( १ ). १९९ : शरण ( १ ). २०० : शरणदेव ( ४ ) २०१ : शरणमेक ( १ ). २०२ : शशिघोष ( १ ). २०३ : शाल्रूक ( १ ). २०४ : शितिकण्ठ ( २ ). २०५ : शुभचन्द्र ( १ ). २०६ : ( श्री ) शुभाङ्ग ( ६ ). २०७ : शूलकाल ( २ ). २०८ : शूलधर ( १ ). २०९ : शूलपाणि ( ५ ). २१० : ( काश्मीरक- ) श्यामल ( १ ). २११ : श्रीकर ( १ ). २१२ : श्रीकण्ठ ( १ ). २१३ : श्रीधर ( १ ). २१४ : संग्रामचक्र ( १ ). २१५ : संग्रामठ ( १ ). २१६ : संघश्री ( २ ). २१७ : सरोक ( १ ). २१८ : सागर ( २ ) २१९ : सावार्णि ( १ ). २२० : सुरभि ( ४ ). २२१ : सुरुचित ( १ ). २२२ : सुवाह ( १ ). २२३ : सूर्यधर ( २ ). २२४ : स्वर्लोक ( १ ). २२५ : हंसभट्ट ( १ ). २२६ : हनूमत् ( ७ ). २२७ : हरिकर ( ४ ). २२८ : ( वैद्य ) हरिहर ( १ ). २२९ : ( श्री ) हर्ष ( ७ ). २३० : हारावली ( २ ).

---

## परिशिष्टश्लोकानां सूची ॥